असूयारहिता ये च विप्रत्राणपरायणाः । कामादिरहिता ये च तेषां तुष्यति केशवः ॥७६॥
संमार्जनादिना ये तु विष्णुशुश्रूषणे रताः । सत्पात्रदाननिरताः प्रयांति परमं पदम् ॥७७॥
इति श्रीबृहन्नारदीयपुराणे पूर्वभागे प्रथमपादे हरिभक्तिलक्षणं नाम चतुस्त्रिंशोऽध्यायः ॥३४॥
आदितः श्लोकानां समष्ट्यङ्काः-२,९४७+७७=३,०२४ पेज २ को १२०



## ॥ अथ पञ्चत्रिंशोऽध्यायः ॥

सनक उवाच॥

पुनर्वक्ष्यामि माहात्म्यं देवदेवस्य चक्रिणः । पठतां शृण्वतां सद्यः पापराशिः प्र णश्यति ॥१॥
शांता जितारिषड्वर्गा योगेनाप्यनहंकृताः । यजंति ज्ञानयोगेन ज्ञानरूपिणमव्ययम् ॥२॥
तीर्थस्नानैर्विशुद्धा ये व्रतदानतपोमखैः । यजंति कर्मयोगेन सर्वधातारमच्युतम् ॥३॥
लुब्धा व्यसनितोऽज्ञाश्च न यजंति जगत्पतिम् । अजरामरवन्मूढास्तिष्ठंति नरकीटकाः ॥४॥
तडिल्लेखाश्रिया मत्ता वृथाहंकारद्विषिताः । न यजंति जगन्नाथं सर्वश्रेयोविधायकम् ॥५॥
हरिधर्मरताः शांता हरिपादाब्जसेवकाः । दैवात्केऽपीह जायंते लोकानुग्रहतत्पराः ॥६॥
कर्मणा मनसा वाचा यो यजेद्भक्तितो हरिम् । स याति परमं स्थानं सर्वलोकोत्तमोत्तमम् ॥७॥
अत्रैवोदाहरंतीममितिहासं पुरातनम् । पठतां श्रृण्वतां चैव सर्वपापप्रणाशनम् ॥८॥
तत्प्रवक्ष्यामि चरितं यज्ञमालिसुमालिनोः । यस्य श्रवणमात्रे ण वाचिमेध फलं लभेत् ॥९॥
कश्चिदासीत्पुरा विप्र ब्रह्मणो रैवतेंऽतरे । वेदमालिरिति ख्यातो वेदवेदांगपारगः ॥१०॥
सर्वभूतदयायुक्तो हरिपूजापरायणः । पुत्रमित्रकलत्रार्थं धनार्जनपरो ऽभवत् ॥११॥
अपण्यंविक्रयं चक्रे तथा च रसविक्रयम् । चंडालाद्यैरपि तथा संभषी तत्प्रतिग्रही ॥१२॥
तपसां विक्रयं चक्रे व्रतानां विक्रयं तथा । परार्थं तीर्थगमनं कलत्रार्थमकारयत् ॥१३॥
कालेन गच्छता विप्र जातौ तस्य सुतावुभो । यज्ञमाली सुमाली च यमलावतिशोभनौ ॥१४॥
ततः पिता कुमारौ तावतिस्नेहसमन्वितः । पोषयामास वात्सल्याद्बहुभिः साधनैस्तदा ॥१५॥
वेदमालिर्बहूपायैर्धनं संपाद्य यत्नतः । स्वधनं गणयामास कियत्स्यादिति वेदितुम् ॥१६॥
निधिकोटिसहस्राणां कोटिकोटिगुणान्वितम् । विगणय्य स्वयं दृष्टो विस्मितश्चार्थचिंतया ॥१७॥
असत्प्रतिग्रहैश्चैव अपण्यानां च विक्रयैः । मेया तपो विक्रयाद्यैरेतद्धनमुपार्जितम् ॥१८॥
नाद्यापि शांतिमापन्ना मम तृष्णातिदुःसहा । मेरुतुल्यसुवर्णानि ह्यसंख्यातानि वांछति ॥१९॥
अहो मन्ये महाकष्टं समस्तक्लेशसाधनम् । सर्वान्कामानवांप्नोति पुनरन्यच्च कांक्षति ॥२०॥
जीर्यंति जीर्यतः केशाः दंता जीर्यंति जीर्यतः । चक्षुःश्रोत्रे च जीर्येते तृष्णेका तरुणायते ॥२१॥
ममेद्रियाणि सर्वाणि मंदभावं व्रजंति च । बलं हतं च जरसा तृष्णा तरुणतां गता ॥२२॥
कष्टाशा वर्त्तते यस्य स विद्वानथ पंडितः । सुशांतोऽपि प्रमन्युः स्याद्धीमानप्यतिमूढधीः ॥२३॥
आशा भंगकरी पुंसामजेयारातिसन्निभा । तस्मादाशां त्यजेत्प्राज्ञो यदीच्छेच्छाश्वतं सुखम् ॥२४॥
बलं तेजोः यशश्चैव विद्यां मानं च वृद्धताम् । तथैव सत्कुले जन्म आशा हत्यतिवेगतः ॥२५॥
नृणामाशाभिभूतानामाश्चर्यमिदमुच्यते । किंचिद्दातापि चांडालस्तस्मादधिकतां गतः ॥२६॥
आशाभिभूता ये मर्त्या महामोहा महोद्धताः । अवमानादिकं दुःखं न जानंति कदाप्यहो ॥२७॥
मयाप्येवं बहुक्लिशैरेतद्धनमुपार्जितम् । शरीरमपि जीर्णं च जरसापहतं बलम् ॥२८॥
इतः परं यतिष्यामि परलोकार्थमादरात् । एवं निश्चित्य विप्रेंद्र धर्ममार्ग रतोऽभवत् ॥२९॥
तदैव तद्धनं सर्वं चतुर्द्धा व्यभजत्तथा । स्वयं तु भाग द्वितय स्वार्जितार्थादपाहरत् ॥३०॥
शेषं च भागद्वितयं पुत्रयोरुभयोर्ददौ । स्वेनार्जितानां पापानां नाशं कर्तुमनास्तदा ॥३१॥
प्रपातडागारामांश्च तथा देवगृहान्बहून् । अन्नादीनां च दानानि गंगातीरे चकार सः ॥३२॥

एवं धनमशेषं च विश्राण्य हरिभक्तिमान् । नारनारायण स्थानं जगाम तपसे वनम् ॥३३॥
तत्रापश्यन्महारम्यमाश्रमं मुनिसेवितम् । फलितैः पुष्पैश्चैव शोभितं वृक्षसंचयैः ॥३४॥
गृणद्भिः परमं ब्रह्म शास्त्रचिंतापरैस्तथा । परिचर्यापरैर्वृद्धैर्मुनिभिः परिशोभितम् ॥३५॥
शिष्यैः परिवृतं तत्र मुनिं जानंति संज्ञकम् । गृणंतं परमं ब्रह्म तेजोराशिं ददर्श ह ॥३६॥
शमादिगुणसंयुक्तं रागादिरहितं मुनिम् । शीर्णपर्णाशनं दृष्ट्वा वेदमालिर्ननाम तम् ॥३७॥
तस्य जानन्तिरागंतोः कल्पयामास चार्हणम् । कंदमूलफलाद्यैस्तु नारायणधिया मुने ॥३८॥
कृतातिथ्यक्रियस्तेन वेदमाली कृताञ्जलिः । विनयावनतो भूत्वा प्रोवाच वदतां वरम् ॥३९॥
भगवन्कृतकृत्योऽस्मि विगतं कल्मषं मम । मामुद्धर महाभाग ज्ञानदानेन पंडित ॥४०॥
एवमुक्तस्ततस्तेन जानंतिर्मुनिसत्तमः । प्रोवाच प्रहसन्वाग्मी वेदमालिं गुणान्वितम् ॥४१॥
जानंतिरुवाच ॥
श्रृणष्व विप्रशार्दूल संसारच्छेदकारणम् । प्रवक्ष्यामि समासेन दुर्लभं त्वकृतात्मनाम् ॥४२॥
भज विष्णुं परं नित्यं स्मर नारायणं प्रभुम् । परापवादं पैशुन्यं कदाचिदपि मा कृथाः ॥४३॥
परोपकारनिरतः स दा भव महामते । हरिपूजापरश्चैव त्यज मूर्खसमागमम् ॥४४॥
कामं क्रोधं च लोभं च मोहं च मदमत्सरौ । परित्यज्यात्मवल्लोकं दृष्ट्वा शांतिं गमिष्यसि ॥४५॥
असूयां परनिंदां च कदाचिदपि मा कुरु । दंभाचारमहंकारं नैष्ठुर्यं च परित्यज ॥४६॥
दयां कुरुष्व भुतेषु शुश्रूषां च तथा सताम् । त्वया कृतांश्च धर्मान्वै मा प्रकाशय पुच्छताम् ॥४७॥
अनाचारपरान्दृष्ट्वा नोपेक्षां कुरु शक्तितः । पूजयस्वातिथिं नित्यं स्वकुटुंबाविरोधतः ॥४८॥
पत्रैः पुष्पैः फलैर्वापि दूर्वाभिः पल्लवैरथ । पूजयस्व जगन्नाथं नारायणमकां मतः ॥४९॥
देवानृपीन्पितृकश्चापि तर्पयस्व यथाविधि । अग्नेश्च विधिवद्वप्र परिचर्यापरो भव ॥५०॥
देवतायत्ने नित्यं संमार्जनपरो भव । तथोपलेपनं चैव कुरुष्व सुसमाहितः ॥५१॥
शीर्णस्फटितसंधानं कुरु देवगृहे सदा । मार्गशोभां च दीपं च विष्णोरायत्ने कुरु ॥५२॥
कंदमूलफलैर्वापि सदा पूजय माधवम् । प्रदक्षिणनमस्कारैः स्तोत्राणां पठनैस्तथा ॥५३॥
पुराणश्रवणं चैव पुराणपठनं तथा । वेदांतपठनं चैव प्रत्यहं कुरु शक्तितः ॥५४॥
एवं स्थिति तव ज्ञानं भघविष्यत्युत्तमोत्तमम् । ज्ञानात्समस्तपापानां मोक्षो भवति निश्चितम् ॥५५॥
एवं प्रबोधितस्तेन वेदमालिर्महामतिः । तथा ज्ञानरतो नित्यं ज्ञानलेशमवाप्तवान् ॥५६॥
वेदमालिः कदाचित्तु ज्ञानलेशप्रचोदितः । कोऽहं मम क्रिया केति स्वयमेव व्यचिंतयत् ॥५७॥
मम जन्म कथं जातं रूपं कीदृग्विधं मम । एवं विचारणपरोः दिवानिशमतंद्रितः ॥५८॥
अनिश्चितमतिर्भूत्वा वेदमालिर्द्धिजोत्तमः । पुनर्जानंतिमागम्य प्रणम्येदमुवाच ह ॥५९॥
वेदमालिरूवाच ॥
मम चित्तमतिभ्रातं गुरो ब्रह्मविदां वर । कोऽहं मम क्रिया का च मम जन्म कथं वद ॥६०॥
जानंतिरुवाच ॥
सत्यं सत्यं महाभागं चित्तं भ्रातं सुनिश्चितम् । अविद्यानिलयं चित्तं कथं सद्भावमेष्यति ॥६१॥
ममेति गदितं यत्तु तदपि भ्रांतिरिष्यते । अहंकारो मनोधर्म आत्मनो नहि पंडित ॥६२॥
पुनश्च कोऽहमित्युक्तं वेदमाले त्वया तु यत् । मम जात्यादि शून्यस्य कथं नाम करोम्यहम् ॥६३॥
अनौपम्यस्वभावस्य निर्गुणस्य परात्मनः । नीरूपस्याप्रमेयस्य कथं नाम करोम्यहम् ॥६४॥
परज्योतिः स्वरूपस्य परिपूर्णाव्ययात्मनः । अविच्छिन्नस्वभावस्य कथ्यते च कथं क्रिया ॥६५॥
स्वप्रकाशात्मनो विप्र नित्यस्य परमात्मनः । अनंतस्य क्रिया चैव कथं जन्म च कथ्यते ॥६६॥
ज्ञानैकवेद्यमजरं परं ब्रह्म सनातनम् । परिपूर्णं परानंदं तस्मान्नान्यदिह द्विज ॥६७॥
तत्त्वमस्यादिवाक्येभ्यो ज्ञानं मोक्षस्य साधनम् । ज्ञाने त्वनाहते सिद्धे सर्वं ब्रह्ममयं भवेत् ॥६८॥
एवं प्रबोधितस्तेन वेदमालिर्मुनीश्वर । मुमोद पश्यन्नात्मानमात्मन्येवाच्युतं प्रभुम् ॥६९॥

उपाधिरहितं ब्रह्म स्वप्रकाशं निरंजनम् । अहमेवेति निश्चित्य परां शांतिमवाप्तवान् ॥७०॥
ततश्च व्यवहारार्थं वेदमालिर्मुनीश्वरम् । गुरुं प्रणम्य जानंति सदा ध्यानपरोऽभवत् ॥७१॥
गते बहुतिथे काले वेदमालिर्मुनीश्च । वाराणसीपुरं प्राप्य परं मोक्षमवाप्तवान् ॥७२॥
य इमं पठतेऽध्यायं श्रृणुयाद्वा समाहितः । स कर्मपाशविच्छेदं प्राप्य सौख्यमवान्पुयात् ॥७३॥
इति श्रीबृहन्नारादीयपुराणे पूर्वभागे प्रथमपादे ज्ञाननिरूपण नाम पञ्चत्रिंशोऽध्यायः ॥३५॥
आदितः श्लोकानां समष्ट्यङ्काः-३,०२४+७३=३,०९७ पेज २ को १३१



## ॥ अथ षट्त्रिंशोऽध्यायः ॥

सनक उवाच ॥

वेदमालेः सुतौ प्रोक्तौ यावुभौ मुनिसत्तम । यज्ञमाली सुमाली च तयोः कर्माधुनोच्यते ॥१॥
तयोराद्यो यज्ञमाली विभेद पितृसंचितम् । धनं द्विधा कनिष्ठस्य भागमेकं ददौ तदा ॥२॥
सुमाली च धनं सर्वं व्यसनाभिरतः सदा । अपादानादिभिश्चैव नाशयामास भो द्विज ॥३॥
गीतवाद्यरतो नित्यं मद्यपानरतोऽभवत् । वेश्याविभ्रमलुब्धोऽसौ परदाररतोऽभवत् ॥४॥
सर्वस्मिन्नाशमायाते हिरण्ये पितृसंचिते । अपहृत्य परं द्रव्यं वारस्त्रीनिरतोऽभवत् ॥५॥
दृष्ट्वा सुमालिनः शूलं यज्ञमाली महामतिः । बभूव दुःखितोऽत्यर्थं भ्रातरं चदमब्रवीत् ॥६॥
अलमम त्यंतकष्टेन वृत्तेनास्मत्कुलेऽनुज । त्वमेक एव दुष्टात्मा महापापरतोऽभवः ॥७॥
एवं निवारयंतं तं बहुशो ज्येष्ठसोदरम् । हनिष्यामीति निश्चित्य खड्गहस्तः कचेऽग्रहीत् ॥८॥
ततो महारवो जज्ञे नगरे भृशदारुणः । बबंधुर्नागराश्चैनं कुपितास्ते सुमालिनम् ॥९॥
यज्ञमाली ह्यमेयात्मा पौरान्संप्राथ्यं दुःखितः । बंधनान्मोचयामास भ्रातृस्नेहविमोहितः ॥१०॥
यज्ञमाली पुनस्चापि बिभिदे स्वधनं द्विधा । आददे स्वयमर्द्धं च ददावर्द्धं यवीयसे ॥११॥
सुमाली त्वतिमूढात्मा तद्धनं चापि नारद । मूर्खैः पाखण्डचंडालैर्बुभुजे च सहोद्धतः ॥१२॥
असतामुपभोगाय दुर्जनानां विभूतयः । पिचुमंदः फलाढ्योऽपि काकैरेवोपभुज्यते ॥१३॥
भ्रात्रा दत्तं धनं तच्च सुमाली नाशयन्मुने । मद्यपानप्रमत्तश्च गोमांसा दीन्यभक्षयत् ॥१४॥
त्यक्तो बंधुजनैः सर्वैश्चांडालस्त्रीसमन्वितः । राज्ञापि बाधितो विप्रप्रपेदे निर्जनं वनम् ॥१५॥
यज्ञमाली सुधीर्विप्र सदा धर्मरतो ऽभवेत् । अवारितं ददावन्नं सत्सङ्गगतकल्मषः ॥१६॥
पित्रा कृतानि सर्वाणि तडागादीनि सत्तम । अपालयत्प्र यत्नेन सदा धर्मपरायणः ॥१७॥
विश्राणितं धनं सर्वं यज्ञमालेर्महात्मनः । सत्पात्रदाननिष्ठस्य धर्ममार्गप्रवर्तिनः ॥१८॥
अहो सदुपभोगाय सज्जनानां विभूतयः । कल्पवृक्षफलं सर्वममरैरेव भुज्यते ॥१९॥
धनं विश्राण्य धर्मार्थं यज्ञमाली महामतिः । नित्यं विष्णुगृहे सम्यक्परिचर्य्यापरोऽभवत् ॥२०॥
कालेन गच्छता तौ तु वृद्धभावमुपागतौ । यज्ञमाली सुमाली च ह्येककाले मृतावुभौ ॥२१॥
हरिपूजारतस्यास्य यज्ञमालिमहात्मनः । हरिः संप्रेषयामास विमानं पार्षदा वृतम् ॥२२॥
दिव्यं विमानमारुह्य यज्ञमाली महामतिः । पूज्यमानः सुरगणैः स्तूयमानो मुनीश्वरैः ॥२३॥
गन्धर्वैर्गीयमानश्च सेवितश्चाप्सरोगणैः । कामधेन्वा पुष्यमाणश्चित्राभरणभूषितः ॥२४॥
कोमलैस्तुलसीमाल्यैर्भूषितस्तेजसां निधिः । गच्छन्विष्णुपदं दिव्यंमनुजं पथि दृष्टवान् ॥२५॥
ताड्यमानं यमभटैः क्षुत्तृड्भ्यां परिपीडितम् । प्रेतभूतं विवस्त्रं च दुःखितं पाशवेष्टितम् ॥
इतस्ततः प्राधावन्तं विलपंतमनाथवत् ॥२६॥
क्रोशन्तं च रुदंतं च दृष्ट्वा मनसि विव्यथे ॥२७॥
यज्ञमालीदयायुक्तो विष्णुदूतान्समीपगान् । कोऽयं भटैर्बाध्यमानं इत्यपृच्छत्कृताञ्जलिः ॥२८॥
अथ ते हरिदूतास्तं यज्ञमालिमहौजसम् । असौ सुमाली भ्राता ते पापात्मेति समब्रुवन् ॥२९॥

यज्ञमाली समाकर्ण्य व्याख्यातं विष्णुकिंकरैः । मनसा दुःखमापन्नः पुनः पप्रच्छ नारद ॥३०॥
कथमस्य भवेन्मोक्षः संचितैः पापसंचयैः । तदुपायंबदध्वं मे यूयं हि ममबांधवाः ॥३१॥
सख्यं साप्तपदीनं स्यादित्याहुर्धर्मकोविदाः । सतां साप्तपदी मैत्री सत्सतां त्रिपदी तथा ॥३२॥
सत्सतामपि ये संतस्तेषां मैत्री पदे पदे ॥३३॥
तस्मान्मे बांधवा यूयं मां नेतुं समुपागताः । यतोऽयं मम भ्रातापि मुच्यते तदिहोच्यताम् ॥३४॥
यज्ञमालिवचः श्रुत्वा विष्णुदूता दयालवः । पुनः स्मितामुखाः प्रोचुर्यज्ञमालिहरिप्रियम् ॥३५॥
विष्णुदूता ऊचुः ॥
यज्ञमालिन्महाभाग नारायणपरायण । उपायं तव वक्ष्यामः सुमालिप्रेममुक्तिदम् ॥३६॥
कृतं यत्सुमहत्कर्म त्वया प्राक्तनजन्मनि । प्रवक्ष्यामः समासेन तच्छृणुष्व समाहितः ॥३७॥
पुरा त्वं वैश्यजातीयो नाम्ना विश्वंभरः स्मृतः । त्वया कृतानि पापानि महांत्यगणितानि वै ॥३८॥
सुकर्मवासनाहीनो मातापित्रोर्विरोधकृत् । एकदा बंधुभिस्त्यक्तः शोकसंतापपीडितः ॥३९॥
क्षुधाग्निनापि संतप्तः प्राप्तवान्हरिमंदिरम् । तदा वृष्टिरभूत्तत्र तत्स्थानं पंकिलं ह्यभूत् ॥४०॥
दूरीकृतस्त्वया पंकस्तत्स्थाने स्थातुमिच्छया । उपलेपनतां प्राप्तं तत्स्थानं विष्णुमंदिरे ॥४१॥
त्वयोषितं तु तद्रात्रौ तस्मिन्देवालये द्विज । दंशितश्चैव सर्पेण प्राप्तं पञ्चत्वमेव च ॥४२॥
तेन पुण्यप्रभावेन उपलेपकृतेन च । विप्रजन्म त्वया प्राप्तं हरि भक्तिस्तथाचला ॥४३॥
कल्पकोटिशतं साग्रं संप्राप्य हरिसन्निधिम् । वसाद्य ज्ञानमासाद्य परं मोक्षं गमिष्यसि ॥४४॥
अनुजं पातकिश्रेष्टं त्वं समुद्धर्त्तुमिच्छसि । उपायं तव वक्ष्यामस्तं निबोध महामते ॥४५॥
गोचर्ममात्रभूमेस्तु उपलेपनजं फलम् । दत्त्वोद्धर महाभाग भ्रातरं कृपयान्वितः ॥४६॥
एवमुक्तो विष्णुदूतैर्यज्ञमाली महापतिः । तत्फलं प्रददौ तस्मै भ्रात्रे पापविमुक्तये ॥४७॥
सुमाली भ्रातृदत्तेन पुण्येन गतकल्मषः । बभूव यमदूतास्तु तं त्यक्त्वा प्रपलायिताः ॥४८॥
विमानं चागतं सद्यः सर्वभोगसमन्वितम् । तदा सुमाली स्वर्यानमारुह्य मुमुदे मुने ॥४९॥
तावुभौ भ्रातरौ विप्र सुरवृंदनमस्कृतौ । अवापतुर्भृशं प्रीतिं समालिंग्य परस्परम् ॥५०॥
यज्ञमाली सुमाली च स्तूयमानौ महर्षिभिः । गीयमानौ च गन्धर्वैर्विष्णुलोकं प्रजग्मतुः ॥५१॥
अवाप्य हरिसालोक्यं सुमाली मुनिसत्तम । यज्ञमाली चोषतुस्तौ कल्पमेकं मुदान्वितौ ॥५२॥
भुक्त्वा भोगान्बहूँस्तत्र यज्ञमाली महामतिः । तत्रैव ज्ञानसंपन्नः परं मोक्षमुपागतः ॥५३॥
सुमाली तु महाभागो विष्णुलोके मुदान्वितः । स्थित्वा भूमिं पुनः प्राप्य विप्रत्वं समुपागतः ॥५४॥
अतिशुद्धे कुले जातो गुणवान्वेदपारगः । सर्वसंपत्समोपेतो हरिभक्तिपरायणः ॥५५॥
व्याहरन्हरिनामानि प्रपेदे जाह्नवीतटम् । तत्र स्नातश्च गंगायां दृष्ट्वा विश्वेश्वरं प्रभुम् ॥५६॥
अवाप परमं स्थानं योगिनामपि दुर्लभम् । उपलेपनमाहात्म्यं कथितं ते मुनीश्वर ॥५७॥
तस्मात्सर्वप्रयत्नेन संपूज्यो जगतांपतिः । अकामादपि ये विष्णोः सकृत्पूजां प्रकुर्वते ॥५८॥
न तेषां भवबंधस्तु कदाचिदपि जायते । हरिभक्तिरतान्यस्तु हरिबुद्ध्या समर्चयेत् ॥५९॥
तस्य तुष्यंति विप्रेंद्र ब्रह्मविष्णुमहेश्वराः । हरिभक्तिपराणां तु संघ्रिं संगमात्रतः ॥६०॥
मुच्यते सर्वपापेभ्यो महापातकवानपि । हरिपूजापराणां च हरिनामरतात्मनाम् ॥६१॥
शुश्रूषानिरता यांति पापिनोऽपि परां गतिम् ॥६२॥

इति श्रीबृहन्नारदीयपुराणे पूर्वभागे प्रथमपादे विष्णुसेवाप्रभावो नाम षट्त्रिंशोऽध्यायः ॥३६॥
आदितः श्लोकानां समष्ट्यङ्काः-३,०९७+६२=३,१५९ पेज २ को १३९



## ॥ अथ सप्तत्रिंशोऽध्यायः ॥

सनक उवाच॥
भूयः श्रृणुष्व विप्रेंद्र माहात्म्यं कमलापतेः । कस्य नो जायते प्रीतिः श्रोतुं हरिकथामृतम् ॥१॥
नराणां विषयान्धानां ममताकुलचेतसाम् । एकमेव हरेर्नाम सर्वपापप्रणाशनम् ॥२॥
सकृद्वा न नमेद्यस्तु विष्णुं पापहरं नृणाम् । श्वपचं तं विजानीयात्कदाचिन्नालपेञ्च तम् ॥३॥
हरिपूजाविहीनं तु यस्य वेश्म द्विजोत्तम । श्मशानसदृशं तद्धि कदाचिदपि नो विशेत् ॥४॥
हरिपूजाविहीनाश्च वेदविद्वेषिणस्तथा । गोद्विजद्वेषनिरता राक्षसाः परिकीर्त्तिताः ॥५॥
यो वा को वापि विप्रेन्द्र विप्रद्वेषपरायणः । समर्चयति गोविंदं तत्पूजा विफला भवेत्॥६॥
अन्यश्रेयोविनाशार्थं येऽर्चयंति जनार्दनम् । सा पूजैव महाभाग पूजकानाशु हंति वै ॥७॥
हरिपूजाकरो यस्तु यदि पापं समाचरेत् । तमेव विष्णुद्वेष्टारं प्राहुस्तत्त्वार्थकोविदाः ॥८॥
ये विष्णुनिरताः संति लोकानुग्रहतत्पराः । धर्मकार्यरताः शश्वद्विष्णुरूपास्तु ते मताः ॥९॥
कोटिजन्मार्दजितैः पुण्यैर्विष्णुभक्तिः प्रजायते । दृढभक्तिमतां विष्णौ पापबुद्धिः कथं भवेत्॥१०॥
जन्मकोटयर्जितं पापं विष्णुपूजारतात्मनाम् । क्षयं याति क्षणादेव तेषां स्यात्पापधीः कथम्॥११॥
विष्णुभक्तिविहीना ये चंडालाः परिकीर्तिताः । चंडाला अपि वै श्रेष्ठा हरिभक्तिपरायणाः ॥१२॥
नराणां विषयांधानां सर्वदुःखविनाशिनी । हरिसेवेति विख्याता भुक्तिमुक्तिप्रदायिनी ॥१३॥
संगात्स्नेहाद्भयाल्लोभादज्ञानाद्वापि यो नरः । विष्णोरूपासनं कुर्यात्सोऽक्षयं सुखमश्नुते ॥१४॥
हरिपादोदकं यस्तु कणमात्रं पिबेदपि । स स्नातः सर्वतीर्थेषु विष्णोः प्रियतरो भवेत्॥१५॥
अकालमृत्युशमनं सर्वव्याधिविनाशनम् । सर्वदुःखोपशमनं हरिपादोदक स्मृतम् ॥१६॥
नारायणं परं धाम ज्योतिषां ज्योतिरुत्तमम् । ये प्रपन्ना महात्मानस्तेषां मुक्तिर्हि शाश्वती ॥१७॥
अत्राप्युदाहरंतीममितिहासं पुरातनम् । पठतां श्रृण्वतां चैव सर्वपापप्रणाशनम्॥१८॥
आसीत्पुरा कृतयुगे गुलिको नाम लुब्धकः । परदारपरद्रव्यहरणे सततोद्यतः ॥१९॥
परनिंदापरो नित्यं जन्तूपद्रवकृत्तथा । हतवान्ब्राह्मणान् गाश्च शतशोऽथ सहस्रशः ॥२०॥
देवस्वहरणे नित्यं परस्वहरणे तथा । उद्युक्तः सर्वदा विप्र कीनाशानामधीश्वरः ॥२१॥
तेन पापान्यनेकानि कृतानि सुमहांति च । न तेषां शक्यते वक्तुं संख्या वत्सरकोटिभिः ॥२२॥
स कदाचिन्महापापो जतूनामन्तकोपमः । सौवीरराज्ञो नगरं सर्वैश्वर्यसमन्वितम्॥२३॥
योषिद्भिर्भूषिताभिश्च सरोभिनिर्मलोदकैः । अलंकृतं विपणिभिर्ययौ देवपुरोपमम्॥२४॥
तस्योपवनमध्यस्थं रम्यं केशवमंदिरम् । छदितं हेमकलशैर्दृष्ट्वा व्याधो मुदं ययौ ॥२५॥
हराम्यत्र सुवर्णानि बहूनीति विनिश्चितम् । जगामाभ्यंतरं तस्य कीनाशश्चौर्यलोलुपः ॥२६॥
तत्रापश्यद्द्विजवरं शांतं तत्त्वार्थकोविदम् । परिचर्यापरं विष्णोरुत्तंकं तपसां निधिम् ॥२७॥
एकाकिनं दयासुं च निस्पृहं ध्यानलोलुपम् । चौर्यान्तरायकर्तारं तं दृष्ट्वा लुब्धको मुने ॥२८॥
द्रव्यजातं तु देवस्य हर्तुकामोऽतिसाहसी । उत्तंकं हंतुमारेभे विधृतासिर्मदोद्धतः ॥२९॥
पादेनाक्रम्य तद्वक्षो जटाः संगृह्य पाणिना । हंतुं कृतमतिं व्याधमुत्तंकः प्रेक्ष्य चाब्रवीत्॥३०॥
उत्तंक उवाच॥
भो भो साधो वृथा मां त्वं हनिष्यसि निरागसम् । मया किमपराद्धं ते तद्वदस्व महामते ॥३१॥
१३६-१३७ मा हिन्दी
कृतापराधिनां लोके शक्ताः शिक्षां प्रकुर्वते । नहि सौम्य वृथा घ्नंति सज्जना अपि पापिनः ॥३२॥
विरोधिष्वपि मूर्खेषु निरीक्ष्यावस्थितान् गुणान् । विरोधं नहि कुर्वंति सज्जनाः शांतचेतसः ॥३३॥
बहुधा बोध्यमानोऽपि यो नरः क्षमयान्वितः । तमुत्तमं नरं प्राहुर्विष्णोः प्रियतरं सदा ॥३४॥
सुजनो न याति वैरं परहितबुद्धिर्विनाशकालेऽपि । छेदेऽपि चंदनतरुः सुरभयति मुखं कुठारस्य ॥३५॥
अहो विधिः सुबलवान्बाधते बहुधा जनान् । सर्वसंगविहीनोऽपि बाध्यते हि दुरात्मना ॥३६॥
अहो निष्कारणं लोके बाधंते बहुधा जनान् । सर्वसंगविहीनोऽपि बाध्यते पिशुनैर्जनैः ॥

तत्रापि साधून्बाधंते न समानान्कदाचन ॥३७॥
मृगमीनसज्जनानां तृणजलसंतोषविहितवृत्तानाम् । लुब्धकधीवरपिशुना निष्कारणवैरिणो जगति ॥३८॥
अहो बलवती माया मोह्यत्यखिलं जगत् । पुत्रमित्रकलत्रार्थं सर्वं दुःखेन योजयेत् ॥३९॥
परद्रव्यापहारेण कलत्रं पोषितं त्वया । अंते तत्सर्वमुत्सृज्य एक एव प्रयाति वै ॥४०॥
मम माता मम पिता मम भार्या ममात्मजाः । ममेदमिति जंतूनां ममता बाधते वृथा ॥४१॥
यावदर्जयति द्रव्यं बांधवास्तावदेव हि । धर्माधर्मौ सहैवास्तामिहामुत्र न चापरः ॥४२॥
धर्माधर्मार्जितैर्द्रव्यैः पोषिता येन ये नराः । मृतमग्निमुखे हुत्वा घृतान्नं भुंजते हि ते ॥४३॥
गच्छंतं परलोकं च नरं तु ह्यनुतिष्ठतः । धर्माधर्मौ न च धनं न पुत्रा न च बांधवाः ॥४४॥
कामः समृद्धिमायाति नराणां पापकर्मिणाम् । कामः संक्षयमायाति नराणां पुण्यकर्मणाम् ॥४५॥
वृथैव व्याकुला लोका धनादानां सदार्जने ॥४६॥
यद्भावि तद्भवत्येव यदभाव्यं न तद्भवेत् । इति निश्चितबुद्धीनां न चिंता बाधते क्वचित् ॥४७॥
दैवाधीनमिदं सर्वं जगत्स्थावरजंगमम् । तस्माज्जन्म च मृत्युं च दैवं जानाति नापरः ॥४८॥
यत्र कुत्र स्थितस्यापि यद्भाव्यं तद्भवेद् ध्रुवम् । लोकस्तु तत्र विज्ञाय वृथायासं करोति हि ॥४९॥
अहो दुःखं मनुष्याणां ममताकुलचेतसाम् । महापापानि कृत्वापि परान्पुष्यंति यत्नतः ॥५०॥
अर्जितं च धनं सर्वं भुंजते बांधवाः सदा । स्वयमेकतमो मूढस्तत्पापफलमश्नुते ॥५१॥
इति ब्रवाणं तमृषिं विमुच्य भयविह्वलः । गुलिकः प्राञ्जलिः प्राह क्षमस्वेति पुनः पुनः ॥५२॥
सत्संगस्य प्रभावेण हरिसन्निधिमात्रतः । गतपापो लुब्धकश्च ह्यनुतापीदमब्रवीत् ॥५३॥
मया कृतानि पापानि महांति सुबहूनि च । तानि सर्वाणि नष्टानि विप्रेंद्र तव दर्शनात् ॥५४॥
अहोऽहं पापधीर्नित्यं महापापमुपाचरम् । कथं मे निष्कृतिर्भूयो यामि कं शरणं विभोः ॥५५॥
पूर्वजन्मार्जितैः पापैर्लुब्धकत्वमवाप्तवान् । अत्रापि पापजालानि कृत्वा कां गतिमाप्नुयाम् ॥५६॥
अहो ममायुः क्षयमेति शीघ्रं पापान्यनेकानि समर्जितानि । प्रातिक्रिया नैव कृता मयैषां गतिश्च का स्यान्ममजन्म किं वा ॥५७॥
अहो विधिः पापशता कुलं मां किं सृष्टवान्पापतरं च शश्वत् । कथं च यत्पापफलं हि भोक्ष्ये कियत्सु जन्मस्वहमुग्रकर्मा ॥५८॥
एवं विनिंदन्नात्मानमात्मना लुब्धकस्तदा । अंतस्तापाग्निसंतप्तः सद्यः पञ्चत्वमागतः ॥५९॥
उत्तंकः पतितं प्रेक्ष्य लुबग्धकं तं दयापरः । विष्णुपादोदकेनैवमभ्यषिंचन्महामतिः ॥६०॥
हरिपादोदकस्पर्शाल्लुब्धको गतकल्मषः । दिव्यं विमानमारुह्य मुनिमेतदथाब्रवीत् ॥६१॥
गुलिक उवाच ॥
उत्तंक मुनिशार्दूल गुरुस्त्वं मम सुव्रत । विमुक्तस्त्वत्प्रसादेन महापातककंचुकात् ॥६२॥
गतस्त्वदुपदेशान्मे संतापो मुनिपुंगव । तथैव सर्वपापानि विनष्टान्यतिवेगतः ॥६३॥
हरिपादोदकं यस्मान्मयि त्वं सिक्तवान्मुने । प्रापितोऽस्मि त्वया तस्मात्तद्विष्णोः परमं पदम् ॥६४॥
त्वयाहं तारितो विप्र पापादस्माच्छरीरतः । तस्मान्नतोऽस्मि ते विद्वन्मत्कृतं तत्क्षमस्व च ॥६५॥
इत्युक्त्वा देवकुसुमैर्मुनिश्रेष्ठं समाकिरम् । प्रदक्षिणात्रयं कृत्वा नमस्कारं चकार सः ॥६६॥
ततो विमानमारुह्य सर्वकामसमन्वितम् । अप्सरोगणसंकीर्णः प्रपेदे हरिमंदिरम् ॥६७॥
एतद्दृष्ट्वा विस्मितोऽसौ ह्युत्तंकस्तपसांनिधिः । शिरस्यंजलिमाधाय तुष्टाव कमलापतिम् ॥६८॥
तेन स्तुतो महाविष्णुर्दत्तवान्वरमुत्तमम् । वरेण तेनोत्तंकोऽपि प्रपेदे परमं पदम् ॥६९॥
इति श्रीबृहन्नारदीयपुराणे पूर्वभागे विष्णुमाहात्म्ये सप्तत्रिंशोऽध्यायः ॥३७॥
आदितः श्लोकानां समष्ट्यङ्काः-३,१५९+६९=३,२२८ पेज २ को १४९



## ॥ अथाष्टात्रिंशोऽध्यायः ॥

नारद उवाच॥
किंतत्स्तोत्रं महाभाग कथं तुष्टो जनार्दनः । उत्तंकः पुण्यपुरुषः कीदृशं लब्धवान्वरम्॥१॥
सनक उवाच॥
उत्तंकस्तु तदा विप्रो हरिध्यानपरायणः । पादोदकस्य माहात्म्यं दृष्ट्वा तुष्टाव भक्तितः॥२॥
उत्तंक उवाच॥
नतोऽस्मि नारायणमादिदेवं जगन्निवासं जगदेकबंधुम्। चक्राब्जशार्ङ्गासिधरं महांतं स्मृतार्तिनिघ्नं शरणं प्रपद्ये॥३॥
यन्नाभिजाब्ज प्रभवो विधाता सृजत्यमुं लोकसमुच्चयं च । यत्क्रोधजो हंति जगच्च रुद्रस्तमादिदेवं प्रणतोऽस्मि विष्णुम्॥४॥
पद्मापतिं पद्मदलायताक्षं विचित्रवीर्यं निखिलैकहेतुम्। वेदांतवेद्यं पुरुषं पुराणं तेजोनिधिं विष्णुमहं प्रपन्नः॥५॥
आत्माक्षरः सर्वगतोऽच्युताख्यो ज्ञानात्मको ज्ञानविदां शरण्यः । ज्ञानैकवेद्यो भगवाननादिः प्रसीदतां व्यष्टिसमष्टिरूपः॥६॥
अनंतवीर्यो गुणजातिहीनो गुणात्मको ज्ञानविदां वरिष्ठः । नित्यः प्रपन्नार्ति हरः परात्मा दयांबुधिर्मे वरदस्तु भूयात्॥७॥
यः स्थूलसूक्ष्मादिविशेषभेदैर्जगद्यथावत्स्वकृतं प्रविष्टः । त्वमेव तत्सर्वमनंतसारं त्वत्तः परं नास्ति यतः परात्मन्॥८॥
अगोचरं यत्तव शुद्धरूपं मायाविहीनं गुणजातिहीनम्। निरञ्जनं निर्मलमप्रमेयं पश्यंति सन्तः परमार्थसंज्ञम्॥९॥
एकेन हेम्नैव विभूषणानि यातानि भेदत्वमुपाधिभेदात्। तथैव सर्वेश्वर एक एव प्रदृश्यते भिन्न इवाखिलात्मा॥१०॥
यन्मायया मोहितचेतसस्तं पश्यंति नात्मानमपि प्रसिद्धम्। त एव मायारहितास्तदेव पस्यन्ति सर्वात्मकमात्मरूपम्॥११॥
विभुं ज्योतिरनौपम्यं विष्णुसंज्ञं नमाम्यहम् । समस्तमेतदुद्भूतं यतो यत्र प्रतिष्ठितम्॥१२॥
यतश्चैतन्यमायातं यद्रूपं तस्य वै नमः । अप्रमेयमनाधारमाधाराधेयरूपकम् ॥१३॥
परमानन्दचिन्मात्रं वासुदेवं नतोऽस्म्यहम्। हृद्गुहानिलयं देवं योगिभिः परिसेवितम्॥१४॥
योगानामादिभूतं तं नमामि प्रणवस्थितम्। नादात्मकं नादबीजं प्रणवात्मकमव्ययम्॥१५॥
सद्भावं सच्चिदानन्दं तं वन्दे तिग्मचक्रिणम्। अजरं साक्षिणं त्वस्य ह्यवाङ्मनसगोचरम्॥१६॥
निरञ्जनमनंताख्यं विष्णुरूपं नतोऽस्म्यहम्। इन्द्रियाणि मनो बुद्धिः सत्त्वं तेजो बलं धृतिः॥१७॥
वासुदेवात्मकान्याहुः क्षेत्रं क्षेत्रज्ञमेव च । विद्याविद्यात्मकं प्राहुः परात्परतरं तथा॥१८॥
अनादिनिधनं शांतं सर्वधातारमच्युतम्। ये प्रपन्ना महात्मानस्तेषां मुक्तिर्हि शाश्वती॥१९॥
वरं वरेण्यं वरदं पुराणं सनातनं सर्वगतं समस्तम्। नतोऽस्मि भूयोऽपि नतोऽस्मि भूयो नतो ऽस्मि भूयोऽपि नतोऽस्मि भूयः॥२०॥
यत्पाद तोयं भवरोगवैद्यो यत्पादपांशुर्विमलत्वसिद्ध्यै । यन्नाम दुष्कर्मनिवारणाय तमप्रमेयं पुरुषं भजामि॥२१॥
सद्रूपं तमसद्रूपं सदसद्रूपमव्ययम्। तत्तद्विलक्षणं श्रेष्टं श्रेष्टाच्छ्रेष्ठतरं भजे॥२२॥
निरञ्जनं निराकारं पूर्णमाकाशमध्यगम्। परं च विद्याविद्याभ्यां हृदंबुजनिवासिनम्॥२३॥
स्वप्रकाशमनिर्देश्यं महतां च महत्तरम् । अणोरणीयांसमजं सर्वोपाधिविवर्जितम्॥२४॥
यन्नित्यं परमानन्दं परं ब्रह्म सनातनम्। विष्णुसंज्ञं जगद्धाम तमस्मि शरणं गतः॥२५॥
यं भजन्ति क्रियानिष्ठायं पश्यन्ति च योगिनः । पूज्यात्पूज्यतरं शांतं गतोऽस्मि शरणं प्रभुम्॥२६॥
यं न पश्यन्ति विद्वांसो य एतद्व्याव्य तिष्ठति । सर्वस्मादधिकं नित्यं नतोऽस्मि विभुमव्ययम्॥२७॥
अन्तः करणसंयोगाज्जीव इत्युच्यते च यः । अविद्याकार्य रहितः परमात्मेति गीयते॥२८॥
सर्वात्मकं सर्वहेतुं सर्वकर्मफलप्रदम्। वरं वरे ण्यमजनं प्रणतोऽस्मि परात्परम्॥२९॥
सर्वज्ञं सर्वगं शांतं सर्वांतयामिणं हरिम्। ज्ञानात्मकं ज्ञाननिधिं ज्ञानसंस्थं विभुं भजे॥३०॥
नमाम्यहं वेदनिधिं मुरारिं वेदांत विज्ञानसुनिश्चितार्थम्। सूर्येन्दुवत्प्रोज्ज्वलने त्रमिं दं खगस्वरूपं वपतिस्वरूपम्॥३१॥
सर्वेश्वरं सर्वगतं महांतं वेदात्मकं वेदविदांवरिष्ठम्। तंवाङ्मनोऽचिंत्यमनंतशक्तिं ज्ञानैकवेद्यं पुरुषं भजामि॥३२॥
इन्द्राग्निकालासुरपाशिवायुसोमेषमार्त्तण्डपुरंदराद्यैः । यः पाति लोकान्परिपूर्णभावस्तमप्रमेयं शरणं प्रपद्ये॥३३॥
सहस्रशीर्षं च सहस्रपादं सहस्रबाहुः च सहस्रनेत्रम्। समस्तयज्ञैः परिजु ष्टमाद्यं नतोऽस्मि तुष्टिप्रदमुग्रवीर्यम्॥३४॥
कालात्मकं कालविभागहेतुं गुणत्रयातीतमहं गुणज्ञम्। गु णप्रियं कामदमस्तसंगमतींद्रियं विश्वभुजं वितृष्णम्॥३५॥
निरीहमग्र्यं मनसाप्यगम्यं मनोमयं चान्नमयं निरूढम्। विज्ञानभेदं प्रतिपन्नकल्पं न वाङ्मयं प्राणमयं भजामि॥३६॥
न यस्य रूपं न बलप्रभावो न यस्य कर्माणि न यत्प्रमाणम्। जानंति देवा कमलोद्भवाद्यस्तोष्याम्यहं तं कथमात्मरूपम्॥३७॥

संसारसिंधौ पतितं कदर्यं मोहाकुलं कामशतेन बद्धम् । अकीर्तिभाजं पिशुनं कृतघ्नं सदाशुचिं पापरतं प्रमन्युम्॥
दयांबुधे पाहि भयाकुलं मां पुनः पुनस्त्वां शरणं प्रपद्ये ॥३८॥
इति प्रसादितस्तेन दयालसुः कमलापतिः । प्रत्यक्षतामगात्तस्य भगवांस्तेजसां निधिः ॥३९॥
अतसी पुष्पसंकाशं फुल्लपङ्कजलोचनम् । किरीटिनं कुण्डलिनं हारकेयूरभूषितम्॥४०॥
श्रीवत्सकौस्तुभधरं हेमयज्ञोपवीतिनम् । नासाविन्यस्तमुक्ता भवर्धमानतनुच्छविम्॥४१॥
पीतांबरधरं देवं वनमालाविभूषिमत् । तुलसीकोमलदलैरर्चितांघ्रिं महाद्युतिम्॥४२॥
किंकिणीनूपुराद्यैश्च शोभितं गरुडध्वजम् । दृष्ट्वा ननाम विप्रेन्द्रो दण्डवत्क्षितिमण्डले ॥४३॥
अभ्यषिंचद्धरेः पादावुत्तंको हर्षवारिभिः । मुरारे रक्ष रक्षेति व्याहरन्नान्यधीस्तदा ॥४४॥
तमुत्थाप्य महाविष्णुरालिलिंग दयापरः । वरं वृ णुष्व वत्सेति प्रोवाच मुनिपुङ्गवम्॥४५॥
असाध्यं नास्ति किंचित्ते प्रसन्ने मयि सत्तम । इतीरितं समाकर्ण्य ह्युत्तंकश्चक्रपाणिना ॥
पुनः प्रणम्य तं प्राह देवदेवं जनार्दनम्॥४६॥
किं मां मोहयसीश त्वं किमन्यैर्देव मे वरैः । त्वयि भक्तिर्दृढा मेऽस्तु जन्मजन्मांतरेष्वपि ॥४७॥
कीटेषु पक्षिषु मृगेषु सरीसृपेषु रक्षः पिशाचमनुजेष्वपि यत्र तत्रज्जातस्य मे
भवतु केशव ते प्रसादात्त्वय्येव भक्तिरचलाव्यभिचारणी च ॥४८॥
एवमस्त्विति लोकेशः शङ्खप्रांतेन संस्पृशन् । दिव्यज्ञानं ददौ तस्मै योगिनामपिदुर्लभम्॥४९॥
पुनः स्तुवन्तं विप्रेंद्रं देवदेवो जनार्दनः । इदमाह स्मितमुखो हस्तं तच्छिरसि न्यसन् ॥५०॥
श्रीभगवानुवाच ॥
आराधय क्रियायोगैर्मां सदा द्विजसत्तम् । नरनारायणस्थानं व्रज मोक्षं गमिष्यसि ॥५१॥
त्वया कृतमिदं स्तोत्रं यः पठेत्सततं नरः । सर्वान्कामानवाप्यांते मोक्षभागी भवेत्ततः ॥५२॥
इत्युक्त्वा माधवो विप्रं तत्रैवांतर्दधे मुने । नरनरायणस्थानमुत्तंकोऽपि ततो ययौ ॥५३॥
तस्माद्भक्तिः सदा कार्या देवदेवस्य चक्रिणः । हरिभक्तिः परा प्रोक्ता सर्वकामफलप्रदा ॥५४॥
उतंको भक्तिभावेन क्रियायोगपरो मुने । पूजयन्माधवं नित्यं नरनारायणाश्रमे ॥५५॥
ज्ञानविज्ञानसंपन्नः संच्छिन्नद्वैतसंशयः । आवाप दुरवापं वै तद्विष्णोः परमं पदम्॥५६॥
पूजितो नमितो वापि संस्मृतो वापि मोक्षदः । नारायणो जगन्नाथो भक्तानां मानवर्द्धनः ॥५७॥
तस्मान्नारायणं देवमनंतमपराजितम् । इहामुत्र सुखप्रेप्सुः पूजयेद्भक्तिसंयुतः ॥५८॥
यः पठेदिदमाख्यानं श्रृणुयाद्वासमाहितः । सोऽपि सर्वाघनिर्मुक्तः प्रयाति भवनं हरेः ॥५९॥
इति श्रीबृहन्नारदीयपुराणे पूर्वभागे प्रथमपादे विष्णुमाहात्म्यं नामाष्टत्रिंशोऽध्यायः ॥३८॥
आदितः श्लोकानां समष्ट्यङ्काः-३,२२८+५९=३,२८७ पेज २ को १६१



## ॥ अथैकोनचत्वारिंशोऽध्यायः ॥

सनक उवाच ॥
भूयः श्रृणुष्व विप्रेंद्र माहात्म्यं परमेष्ठिनः । सर्वपापहरं पुण्यं भुक्तिमुक्तिप्रदं नृणाम्॥१॥
अहो हरिकथा लोके पापघ्नी पु ण्यदायिनी । श्रृण्वतां वदतां चैव तद्भक्तानां विशेषतः ॥२॥
हरिभक्तिरसास्वादमुदिता ये नरोत्तमाः । नमस्करोम्यहं तेभ्यो यत्संगान्मुक्ति भाग्नरः ॥३॥
हरिभक्तिपरा ये तु हरिनामपरायणाः । दुर्वृत्ता वा सुवृत्ता वा तेभ्यो नित्यं नमोनमः ॥४॥
संसारसागरं तर्तुं य इच्छेन्मुनिपुङ्गव । स भजेद्धरिभक्तानां भक्तान्वै पापहारिणः ॥५॥
दृष्टः स्मृतः पूजितो वा ध्यातः प्रणमितोऽपि वा । समु द्धरति गोविंदो दुस्तराद्भव सागरात्॥६॥
स्वपन्भुंजन् व्रजंस्तिष्ठन्नतिष्ठंश्च वदंस्तथा । चिंतयेद्यो हरेर्नाम तस्मै नित्यं नमो नमः ॥७॥
अहो भाग्यमहो भाग्यं विष्णु भक्तिरतात्मनाम् । येषां मुक्तिः करस्थैव योगिनामपि दुर्लभा ॥८॥

अत्राप्युदाहरंतीममितिहासं पुरातनम् । वदतां श्रृण्वतां चैव सर्वपाप प्रणाशनम् ॥९॥
आसीत्पुरा महीपालः सोमवंशसमुद्भवः । जयध्वज इति ख्यातो नारायणपरायणः ॥१०॥
विष्णोर्देवालये नित्यं संमार्जनपरायणः । दीपदानरतश्चैव सर्वभूतदयापरः ॥११॥
स कदाचिन्महीपालो रेवातीरे मनोरमे । विचित्रकुसुमोपेतं कृतवान्विष्णुमंदिरम् ॥१२॥
स तत्र नृपशार्दूलः सदा संमार्जने रतः । दीपदानपरश्चैव विशेषेण हरिप्रियः ॥१३॥
हरिनामपरो नित्यं हरिसंसक्तमानसः । हरिप्रणामनिरतो हरिभक्तजनप्रियः ॥१४॥
वीतिहोत्र इति ख्यातो ह्यासीत्तस्य पुरोहितः । जयध्वजस्य चरितं दृष्ट्वा विस्मयमागतः ॥१५॥
कदाचिदुपविष्टं तं राजानं विष्णुतत्परम् । अपृच्छद्वीतिहोत्रस्तु वेदवेदांगपारगः ॥१६॥
वीतिहोत्र उवाच ॥
राजन्परमधर्मज्ञ हरिभक्तिपरायण । विष्णुभक्तिमतां पुंसां श्रे ष्ठोऽसि भरतर्षभ ॥१७॥
संमार्जनपरो नित्यं दीपदानरतस्तथा । तन्मे वद महाभाग किं त्वया विदितं फलम् ॥१८॥
संपादनेन वर्त्तीनां तैलसंपलादनेन च । संयुक्तोऽसि सदा भद्र यद्विष्णोर्गृहमार्जने ॥१९॥
कर्माण्यन्यानि संत्येव विष्णोः प्रीतिकराणि च । तथापि किं महाभाग एतयोः सततोद्यतः ॥२०॥
सर्वात्मना महापुण्यं नरेश विदित च यत् । तद् ब्रूहि मे गुह्यतमं प्रीतिर्मयि तवास्ति चेत् ॥२१॥
पुरोधसैवमुक्तस्तु प्रहसन्स जयध्वजः । विनयावनतो भूत्वा प्रोवाचेदं कृताञ्जलिः ॥२२॥
जयध्वज उवाच ॥
श्रृणुष्व विप्रशार्दूल मयैवाचरितं पुरा । जातिस्मरत्वाज्जानामि श्रोतृणां विस्मयप्रदम् ॥२३॥
आसीत्पुरा कृतयुगे ब्रह्मन्स्वारोचिषेंऽतरे । रैवतो नाम विप्रेंद्रो वेदवेदांगपारगः ॥२४॥
अयाज्ययाजकश्चैव सदैव ग्रामयाजकः । पिशुनो निष्ठुरश्चैव ह्यपण्यानां च विक्रयी ॥२५॥
निषिद्धकर्माचरणात्परित्यक्तः स बन्धुभिः । दरिद्रो दुःखितश्चैव शीर्णांगो व्याधितोऽभवत् ॥२६॥
स कदाचिद्धनार्थं तु पृथिव्यां पर्यटन् द्विजः । ममार नर्मदातीरे श्वासकासप्रपीडितः ॥२७॥
तस्मिन्मृते तस्य भार्या नाम्ना बन्धुमती मुने । कामचारपरा सा तु परित्यक्ता च बन्धुभिः ॥२८॥
तस्यां जातोऽस्मि चण्डालो दण्डकेतुरिति श्रुतः । महापापरतो नित्यं ब्रह्मद्वेषपरायणः ॥२९॥
परदारपरद्रव्यलोलुपो जन्तुहिंसकः । गावश्च विप्रा बहवो निहता मृगपक्षिणः ॥३०॥
मेरुतुल्यसुवर्णानि बहून्यपहृतानि च । मद्यपानरतो नित्यं बहुशो मार्गरोधकृत् ॥३१॥
पशुपक्षिमृगादीनां जन्तूनामन्तकोपमः । कदाचित्कामसंतप्तो गंतु कामो रतिं स्त्रियः ॥३२॥
शून्यं विष्णुगृहं दृष्ट्वा प्रविष्टश्च स्त्रिया सह । निशि रामोपभोगार्थं शयितं तत्र कामिना ॥३३॥
ब्रह्मन्स्ववस्त्रप्रांतेन कियद्देशः प्रमार्जितः । यावंत्यः पांशुकणिकास्तत्र संमार्जिता द्विज ॥३४॥
तावज्जन्मकृतं पापं तदैव क्षयमागतम् । प्रदीपः स्थापितस्तत्र सुरतार्थं द्विजोत्तम ॥३५॥
तेनापि मम दुष्कर्म निःशेषं क्षयमागतम् । एवं स्थिते विष्णुगृहे ह्यागताः पुरपालकाः ॥३६॥
जारोऽयमिति मां तां च हतवंतः प्रसह्य वै । आवां निहत्य ते सर्वे निवृत्ताः पुररक्षकाः ॥३७॥
यदा तदैव संप्राप्ता विष्णुदूताश्चतुर्भुजाः । किरीटकुण्डलधरा वनमालाविभूषिताः ॥३८॥
तैस्तु संप्रेरितावावां विष्णुदूतैरकल्मषैः । दिव्यं विमानमारुह्य सर्वभोगसमन्वितम् ॥३९॥
दिव्यदेहधरौ भूत्वा विष्णुलोकमुपागतौ । तत्र स्थित्वा ब्रह्मकल्पशतं साग्रं द्विजोत्तम ॥४०॥
दिव्यभोगसमायुक्तौ तावत्कालं दिवि स्थितौ । ततश्च भूमिभागेषु देवयोगेषु वै क्रमात् ॥४१॥
तेन पुण्यप्रभावेण यदूनां वंशसंभवः । तेनैव मेऽच्युता संपत्तथा राज्यमकंटकम् ॥४२॥
ब्रह्मन्कृत्वोपभोगार्थमेवं श्रेयो ह्यवाप्तवान् । भक्त्या कुर्वं ति ये संतस्तेषां पुण्यं न वेद्म्यहम् ॥४३॥
तस्मात्संमार्जने नित्यं दीपदाने च सत्तम । यतिष्ये परया भक्त्या ह्यहं जातिस्मरो यतः ॥४४॥
यः पूजयेज्जगन्नाथमेकाकी विगतस्पृहः । सर्वपापविनिर्मुक्तः प्रयाति परमं पदम् ॥४५॥
अवशेनापि यत्कर्म कृत्वेमां श्रियमागतः । भक्तिभद्भिः प्रशांतैश्च किं पुनः सम्यगर्चनात् ॥४६॥

इति भूपवचः श्रुत्वा वीतिहोत्रो द्विजोत्तमः । अनंततुष्टिमापन्नो हरिपूजापरोऽभवत् ॥४७॥
तस्माच्छृणुष्व विप्रेंद्र देवो नारायणोऽव्ययः । ज्ञानतोऽज्ञानतो वापि पूजकानां विमुक्तिदः ॥४८॥
अनित्या बांधवाः सर्वे विभवो नैव शाश्वतः । नित्यं सन्निहितो मृत्युः कर्तव्यो धर्मसंग्रहः ॥४९॥
अज्ञो लोको वृथा गर्वं करिष्यति महोद्धतः । कायः संनिहितापायो धानादीनां किमुच्यते ॥५०॥
जन्मकोटिसहस्रेषु पुण्यं यैः समुपार्जितम् । तेषां भक्तिर्भवेच्छुद्धा देवदेवे जनार्दने ॥५१॥
सुलभं जाह्नवी स्नानं तथैवातिथिपूजनम् । सुलभाः सर्वयज्ञाश्च विष्णुभक्तिः सुदुर्लभा ॥५२॥
दुर्लभा तुलसीसेवा दुर्लभः संगमः सताम् । सर्वभूतदया वापि सुलभा यस्य कस्य चित् ॥५३॥
सत्संगस्तुलसीसेवा हरिभक्तिश्च दुर्लभा ॥५४॥
दुर्लभं प्राप्य मानुष्यं न तथा गमयेद् बुधः । अर्चयेद्धि जगन्नाथं सारमेतद्द्विजोत्तम ॥५५॥
तर्त्तुं यदीच्छति जनो दुस्तरं भवसागरम् । हरिभक्तिपरो भूयादेतदेव रसायनम् ॥५६॥
भ्रातराश्रय गोविंदं मा विलंबं कुरु प्रिय । आसन्नमेव नगरं कृतांतस्य हि दृश्यते ॥५७॥
नारायणं जगद्योनिं सर्वकारणकारणम् । समर्चयस्व विप्रेंद्र यदि मुक्तिमभीप्ससि ॥५८॥
सर्वाधार सर्वयोनिं सर्वांतर्यामिणं विभुम् । ये प्रपन्ना महात्मानस्ते कृतार्था न संशयः ॥५९॥
ते वंद्यास्ते प्रपूज्याश्च नमस्कार्या विशेषतः । येऽर्चयंति महाविष्णुं प्रणतार्तिप्रणाशनम् ॥६०॥
ये विष्णुभक्ता निष्कामा यंजति परमेश्वरम् । त्रिःसप्तकुलसंयुक्तास्ते यांति हरिमंदिरम् ॥६१॥
विष्णुभक्ताय यो दद्यान्निष्कामाय महात्मने । पानीयं वा फलं वापि स एव भगवत्प्रियः ॥६२॥
विष्णुभक्तिपराणां तु शुश्रूषां कुर्वते तु ये । ते यान्ति विष्णुभुवनं यावदाभूतसंप्लवम् ॥६३॥
ये यंजति स्पृहाशून्या हरिभक्तान् हरिं तथा । त एव भुवनं सर्वं पुंनति स्वांघ्रिपांशुना ॥६४॥
देवपूजापरो यस्य गृहे वसति सर्वदा । तत्रैव सर्वदेवाश्च तिष्ठन्ति श्रीहरिस्तथा ॥६५॥
पूज्यमाना च तुलसी यस्य तिष्ठति वेश्मनि । तत्र सर्वाणि श्रेयांसि वर्द्धत्यहरहर्द्विज ॥६६॥
शालग्रामशिलारूपी यत्र तिष्ठति केशवः । न बाधंते ग्रहास्तत्र भूतवेतालकादयः ॥६७॥
शालग्रामशिला यत्र तत्तीर्थं तत्तपोवनम् । यतः संनिहितस्तत्र भगवान्मधुसूदनः ॥६८॥
यद्गृहे नास्ति देवर्षे शालग्रामशिलार्चनम् । श्मशानसदृशं विद्यात्तद्गृहं शुभवर्जितम् ॥
पुराणन्यायमीमांसा धर्मशास्त्राणि च द्विज ॥६९॥
सांगा वेदास्तथा सर्वे विष्णोरूपं प्रकीर्तितम् ॥७०॥
भक्त्या कुर्वंति ये विष्णोः प्रदक्षिणचतुष्टयम् । तेऽपि यांति परं स्थानं सर्वकर्मनिबर्हणम् ॥७१॥
इति बृहन्नारदीयपुराणे पूर्वभागे प्रथमपादे विष्णुमाहात्म्यं नाम एकोनचत्वारिंशोऽध्यायः ॥३९॥
आदितः श्लोकानां समष्ट्यङ्काः-३,२८७+७१=३,३५८ पेज २ को १७५



## ॥ अथ चत्वारिंशोऽध्यायः ॥

सनक उवाच ॥
अतः परं प्रवक्ष्यामि विभूतिं वैष्णवीं मुने । यां श्रृण्वतां कीर्तयतां सद्यः पापक्षयो भवेत् ॥१॥
वैवस्वतेंऽतरे पूर्वं शक्रस्य च बृहस्पतेः । संवादः सुमहानासीत्तं वक्ष्यामि निशामय ॥२॥
एकदा सर्वभोगाढ्यो विबुधैः परिवारितः । अप्सरोगणसंकीर्णो बृहस्पतिमभाषत ॥३॥
इन्द्र उवाच ॥
बृहस्पते महाभाग सर्वतत्त्वार्थकोविद । अतीतब्रह्मणः कल्पे सृष्टिः कीदृग्विधा प्रभो ॥४॥
इन्द्रस्तु कीदृशः प्रोक्तो विबुधाः कीदृशाः स्मृताः । तेषां च कीदृशं कर्म यथावद्वक्तुमर्हसि ॥५॥
बृहस्पतिरुवाच ॥
न ज्ञायते मया शक्र पूर्वेद्युश्चरितं विधेः । वर्तमानदिनस्यापि दुर्ज्ञेयं प्रतिभाति मे ॥६॥

मनवः समतीताश्च तान्वक्तुमपि न क्षमः । यो विजानाति तं तेऽद्य कथयामि निशामय ॥७॥
सुधर्म इति विख्यातः कश्चिदास्ते पुरे तव । भुञ्जानो दिव्यभोगांश्च ब्रह्मलोकादिहागतः ॥८॥
स वा एत द्विजानाति कथयामि निशामय । एवमुक्तस्तु गुरुणा शक्रस्तेन समन्वितः ॥९॥
देवतागणसंकीर्णः सुधर्मलियं ययौ ॥१०॥
समागतं देवपतिं बृहस्पतिसमन्वितम् । दृष्ट्वा यथार्हं देवर्षे पूजयामास सादरम् ॥११॥
सुधर्मेणार्चितः शक्रो दृष्ट्वा तच्छ्रियमुत्तमाम् । मनसा विस्मयाविष्टः प्रोवाच विनयान्वितः ॥१२॥
इन्द्र उवाच ॥
अतीतब्रह्मकल्पस्य वृत्तांतं वेत्सि चेद्बुध । तदाख्याहि समायात एतत्प्रष्टुं सयाजकः ॥१३॥
गतनिद्रांश्च देवांश्च येन जानासि सुव्रत । तद्वदस्वाधिकः कस्मादस्मद्भ्योऽपि दिवि स्थितः ॥१४॥
तेजसायशसा कीर्त्या ज्ञानेन च परंतप । दानेन वा तपोभिर्वा कथमेतादृशः प्रभो ॥१५॥
इत्युक्तो देवराजेन सुधर्मा प्रहसंस्तदा । प्रोवाच विनयाविष्टः पूर्ववृत्तं यथाविधि ॥१६॥
सुधर्म उवाच ॥
चतुर्युगसहस्राणि ब्रह्मणो दिनमुच्यते । एकस्मिन् दिवसे शक्र मनवश्च चतुर्दश ॥१७॥
इंद्राश्चतुर्दश प्रोक्ता देवाश्च विविधाः पृथक् । इंद्राणां चैव सर्वेषां मन्वादीनां च वासव ॥१८॥
तुल्यता तेजसा लक्ष्म्या प्रभावे ण बलेन च । तेषां नामानि वक्ष्यामि श्रृणुष्व सुसमाहितः ॥१९॥
स्वायंभुवो मनुः पूर्वं ततः स्वारोचिषस्तथा । उत्तमस्तामसश्चैव रैवतश्चाक्षुषस्तथा ॥२०॥
वैवस्वतो मनुश्चैव सूर्यसावर्णिरष्टमः । नवमो दक्षसावर्णिः सर्वदेवहिते रतः ॥२१॥
दशमो ब्रह्मसावर्णिर्द्धर्मसावर्णिकस्ततः । ततस्तु रुद्रसावर्णी रोचमानस्ततः स्मृतः ॥२२॥
भौत्यश्चतुर्दशः प्रोक्त एते हि मनवः स्मृताः । देवानिंद्रांश्च वक्ष्यामि श्रृणुष्व विबुधर्षभ ॥२३॥
यामा इति समाख्याता देवाः स्वायंभुवेंऽतरे । शचीपतिः समाख्यातस्तेषामिंद्रो महापतिः ॥२४॥
पारावताश्च तुषिता देवाः स्वारोचिषेंऽतरे । विपश्चिन्नाम देवेन्द्रं सर्वसंपत्समन्वितः ॥२५॥
सुधामानस्तथा सत्याः शिवाश्चाय प्रर्तदनाः । तेषामिंद्रः सुशांतिश्च तृतीये परिकीर्तितः ॥२६॥
सुताः पाराहराश्चैव सुत्याश्चासुधियस्तथा । तेषामिंद्रः शिवः प्रोक्तः शक्रस्तामसकें ऽतरे ॥
विभुनामा देवपतिः पञ्चमः परिकीर्तितः ॥२७॥
अमिताभादयो देवाः षष्ठेऽपि च तथा श्रृणु । आर्याद्या विबुधाः प्रोक्तास्तेषामिंद्रो मनोजवः ॥२८॥
आदित्यवसुरुद्राद्या देवा वैवस्वतं ऽतरे । इन्द्रः पुरंदरः प्रोक्तः सर्वकामसमन्वितः ॥२९॥
अप्रमेयाश्च विबुधाः सुतपाद्याः प्रकीर्तिताः । विष्णुपूजाप्रभावे ण तेषामिंद्रो बलिः स्मृतः ॥३०॥
पाराद्या नवमे देवा इन्द्रश्चाद्भुत उच्यते । सुवासनाद्या विबुधा दशमे परिकीर्तिताः ॥३१॥
शान्तिर्नाम च तत्रेंद्रः सर्वभोगसमन्वितः । विहंगामाद्या देवाश्च तेषामिंद्रो वृषः स्मृतः ॥३२॥
एकादशे द्वादशे तु निबोध कथायामि ते । ऋभुनामा च देवेंद्रो हरिनाभास्तथा सुराः ॥३३॥
सुत्रामाद्यास्तथा देवास्त्रयोदशतमेऽन्तरे । दिवस्पतिर्महावीर्यस्तेषामिंद्र : प्रकीर्तितः ॥३४॥
चतुर्दशे चाक्षुषाद्या देवा इन्द्रः शुचिः स्मृतः । एवं ते मनवः प्रोक्ता इंद्रा देवाश्च तत्त्वतः ॥३५॥
एकस्मिन्ब्रह्मदिवसे स्वाधिकारं प्रभुंजते ॥३६॥
लोकेषु सर्वसर्गेषु सृष्टिरेकविधा स्मृता । कर्त्तारो बहवः संति तत्संख्यां वेत्ति कोविदः ॥३७॥
मयि स्थिते ब्रह्मलोके ब्रह्माणां बहवो गताः । तेषां संख्या न संख्यातु शक्तोऽस्म्यद्य द्विजोत्तम ॥३८॥
स्वर्गलोकमपि प्राप्य यावत्कालं श्रृणुष्व मे । चत्वारो मनवो ऽतीता मम श्रीश्चातिविस्तरा ॥३९॥
स्थातव्यं च मयात्रैव युगकोटिशतं प्रभो । ततः परं गमिष्यामि कर्मभूमिं श्रृ णुष्व मे ॥४०॥
मया कृतं पुरा कर्म वक्ष्यामि तव सुव्रत । वदतां श्रृण्वतां चैव सर्वपापप्रणाशनम् ॥४१॥
अहमांस पुरा शक्र गृध्रः पापो विशेषतः । स्थितश्च भूमिभागे वै अमेध्यामिषभोजनः ॥४२॥
एकदाहं विष्णुगृहे प्राकारे संस्थितः प्रभो । पतितो व्याधशस्त्रेण सायं विष्णोर्गृहांगणे ॥४३॥

मयि कंठगतप्राणे भषणो मांसलोलुपः । जग्राह मां स्ववक्त्रे ण श्वभिरन्यैश्चरन्द्रुतः ॥४४॥
वहन्मां स्वमुखेनैव भीतो ऽन्यैर्भषणैस्तथा । गतः प्रदक्षिणा कारं विष्णोस्तन्मंदिरं प्रभो ॥४५॥
तेनैव तुष्टिमापन्नो ह्यंतरात्मा जगन्मयः । मम चापि शुनश्चापि दत्तावन्परमं पदम् ॥४६॥
प्रदक्षिणा कारतया गतस्यापीदृशं फलम् । संप्राप्तं विबुधश्रेष्ठ किं पुनः सम्यगर्चनात् ॥४७॥
इत्युक्तो देवराजस्तु सुधर्मेण महात्मना । मनसा प्रीतिमापन्नो हरिपूजा रतोऽभवत् ॥४८॥
तथापि निर्जराः सर्वे भारते जन्मलिप्सवः । समर्चयंति देवेशं नारायणमनामयम् ॥
तानर्चयन्ति सततं ब्रह्माद्या देवतागणाः ॥४९॥
नारायणानुस्मरणोद्यतानां महात्मनां त्यक्तपरिग्रहणाम् । कथं भवत्युग्रभवस्य बंधस्तत्सङ्गलुब्धा यदि मुक्तिभाजः ॥५०॥
ये मानवाः प्रतिदिनं परिमुक्तसङ्गा नारायणं गरुडवाहनमर्चयंति ।
ते सर्वपापनिकरैः परितो विमुक्ता विष्णोः पदं शुभतरं प्रतियांति हृष्टाः ॥५१॥
ये मानवा विगतरागपरावरज्ञा नारायणं सुरगुरुं सततं स्मरंति ।
ध्यानेन तेन हतकिल्बिषचेतनास्ते मातुः पयोधररसं न पुनः पिबंति ॥५२॥
ये मानवा हरिकथाश्रवणास्तदोषाः कृष्णां घ्रपद्मभजने रतचेतनाश्च ।
ते वै पुंनति च जगंति शरीरसंगात् संभाषणादपि ततो हरिरेव पूज्यः ॥५३॥
हरिपूजापरा यत्र महांतः शुद्धबुद्धयः । तत्रैव सकलं भद्रं यथा निम्ने जलं द्विज ॥५४॥
हरिरेव परो बन्धुर्हरिरेव परा गतिः । हरिरेव ततः पूज्यो यतश्चेतन्यकारणम् ॥५५॥
स्वर्गापवर्गफलदं सदानंदं निरामयम् । पृजयस्व मुनिश्रेष्ठ परं श्रेयो भविष्यति ॥५६॥
पूजयंति हरिं ये तु निष्कामाः शुद्धमानसाः । तेषां विष्णुः प्रसन्नात्मा सर्वान्कामान् प्रयच्छति ॥५७॥
यस्त्वेतच्छृणुयाद्वापि पठेद्वा सुसमाहितः । स प्र ाप्नोत्यश्वमेधस्य फलं मुनिवरोत्तम ॥५८॥
इत्येतत्ते समाख्यातं हरिपूजाफलं द्विज । संकोचविस्तराभ्यां तु किमन्यत्कथयामि ते ॥५९॥
इति श्रीबृहन्नारदीयपुराणे पूर्वभागे प्रथमपादे विष्णुमाहात्म्ये चत्वारिंशोऽध्यायः ॥४०॥
आदितः श्लोकानां समष्टयङ्काः-३,३५८+५९=३,४१७ पेज २ को १८७



## ॥ अथैकचत्वारिंशोऽध्यायः ॥

नारद उवाच ॥
आख्यातं भवता सर्वं मुने तत्त्वार्थ कोविद । इदानीं श्रोतुमिच्छामि युगानां स्थितिलक्षणम् ॥१॥
सनक उवाच ॥
साधु साधु महाप्राज्ञ मुने लोकोपकारक । युगधर्मान्प्रवक्ष्यामि सर्वलोकोपकारकान् ॥२॥
धर्मो विवृद्धिमायाति काले कस्मिंस्चिदुत्तम । तथा विनासमायाति धर्म्म एव महीतले ॥३॥
कृतं त्रेता द्वापरं च कलिश्चेति चतुर्युगम् । दिव्यैर्द्वादशभिर्ज्ञेयं वत्सरैस्तत्र सत्तम ॥४॥
संध्यासन्ध्यांशयुक्तानि युगानि सदृशानि वै । कालतो वेदितव्यानि इत्युक्तं तत्त्वदर्शिभिः ॥५॥
आद्ये कृतयुगं प्राहुस्ततस्त्रेताविधानकम् । ततश्च द्वापरं प्राहुः कलिमंत्यं विदुः क्रमात् ॥६॥
देवदानवगन्धर्वा यक्षराक्षसपन्नगाः । नासन्कृतयुगे विप्र सर्वे देवसमाः स्मृताः ॥७॥
सर्वे हृष्टाश्च धर्मिष्ठा न तत्र क्रयविक्रयौ । वेदानां च विभागश्च न युगे कृतसंज्ञके ॥८॥
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राः स्वाचारतत्पराः । सदा नारायणपरास्तपोध्यानपरायणाः ॥९॥
कामादिदोषनिर्मुक्ताः शमादिगुणतत्पराः । धर्मसाधनचित्ताश्च गतासूया अदांभिकाः ॥१०॥
सत्यवाक्यरताः सर्वे चतुराश्रमधर्मिणः । वेदाध्ययनसंपन्नाः सर्वशास्त्रविचक्षणाः ॥११॥
चतुराश्रमयुक्तेन कर्मणा कालयोनिना । अकामफलसंयोगाः प्रयांति परमां गतिम् ॥१२॥
नारायणः कृतयुगे शुक्लवर्णः सुनिर्मलः । त्रेताधर्मान्प्रवक्ष्यामि श्रृणुष्व सुसमाहितः ॥१३॥

धर्मः पांडुरतां याति त्रेतायां मुनिसत्तम । हरिस्तु रक्ततां याति किंचित्क्लेशान्विता जनाः ॥१४॥
क्रियायोगरताः सर्वे यज्ञकर्मसु निष्ठिताः । सत्यव्रता ध्यानपराः सदाध्यानपरायणाः ॥१५॥
द्विपादो वर्तते धर्मो द्वापरे च मुनीश्वर । हरिः पीतत्वमायाति वेदश्चापि विभज्यते ॥१६॥
असत्यनिरताश्चापि केचित्तत्र द्विजोत्तमाः । ब्राह्मणाद्याश्च वर्णाः स्युः केचिद्रागादिदुर्गुणाः ॥१७॥
केचित्स्वर्गापवर्गार्थं विप्रयज्ञान्प्रकुर्वते । केचिद्धनादिकामाश्च केचित्कल्मषचेतसः ॥१८॥
धर्माधर्मौ समौ स्यातां द्वापरे विप्रसत्तम । अधर्मस्य प्रभावेण क्षीयंते च प्रजास्तथा ॥१९॥
अल्पायुषो भविष्यंति केचिच्चापि मुनीश्वर । केचित्पुण्यरतान् दृष्ट्वा असूयां विप्र कुर्वते ॥२०॥
कलिस्थितिं प्रवक्ष्यामि तच्छृणुष्व समाहितः । धर्मः कलियुगे प्राप्ते पादेनैकेन वर्तते ॥२१॥
तामसं युगमासाद्य हरिः कृष्णत्वमेति च । यः कश्चिदपि धर्मात्मा यज्ञाचारान्करोति च ॥२२॥
यः कश्चिदपि पुण्यात्मा क्रियायोगरतो भवेत् । नरं धर्मरतं दृष्ट्वा सर्वेऽसूयां प्रकुर्वते ॥२३॥
व्रताचाराः प्रणश्यंति ज्ञानयज्ञादयस्तथा । उपद्रवा भविष्यंति ह्यधर्मस्य प्रवर्तनात् ॥२४॥
असूयानिरताः सर्वे दंभाचारपरायणाः । प्रजाश्चाल्पायुषः सर्वा भविष्यंति कलौ युगे ॥२५ ॥

नारद उवाच॥

युगधर्माः समाख्यातास्त्वया संक्षेपतो मुने । कलिं विस्तरतो ब्रूहि त्वं हि धर्मविदां वरः ॥२६॥
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चमुनिसत्तम । किमाहाराः किमाचाराः भविष्यंति कलौ युगे ॥२७॥

सनक उवाच॥

श्रृणुष्व मुनिशार्दूल सर्वलोकोपकारक । कलिधर्मान्प्रवक्ष्यामि विस्तरेण यथातथम् ॥२८॥
सर्वे धर्मा विनश्यंति कृष्णे कृष्णत्वमागते । तस्मात्कलिर्महाघोरः सर्वपातकसंकरः ॥२९॥
ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा धर्मपराङ्मुखाः । घोरे कलियुगे प्राप्ते द्विजा वेदपराङ्मुखाः ॥३०॥
व्याजधर्मरताः सर्वे असूयानिरतास्तथा । वृथाहंकारदुष्टाश्च सत्यहीनाश्च पंडिताः ॥३१॥
अहमेवाधिक इति सर्वेऽपि विवदंति च । अधर्मलोलुपाः सर्वे तथा वैतंडिका नराः ॥३२॥
अतः स्वल्पायुषः सर्वे भविष्यंति कलौ युगे । अल्पायुष्ट्वान्मनुष्याणां न विद्याग्रहणं द्विज ॥३३॥
विद्याग्रहणशून्यत्वादधर्मो वर्तते पुनः । व्युत्क्रमेण प्रजाः सर्वा म्रियंते पापतत्पराः ॥३४॥
ब्राह्मणाद्यास्तथा वर्णाः संकीर्यंते परस्परम् । कामक्रोधपरा मूढा वृथासंतापपीडिताः ॥३५॥
शूद्रतुल्या भविष्यंति सर्वे वर्णा कलौ युगे । उत्तमा नीचतां यांति नीचाश्चोत्तमतां तथा ॥३६॥
राजनो द्रव्यनिरतास्तथा ह्यन्यायवर्त्तिनः । पीडयंति प्रजाश्चैव करैरत्यर्थयोजितैः ॥३७॥
शववाहाभविष्यंति शूद्राणां च द्विजातयः । धर्मस्त्रीष्वपि गच्छंति ह्ययो जारधर्मिणः ॥३८॥
द्विषंति पितरं पुत्रा भर्तारं च स्त्रियोऽखिलाः । परस्त्रीनिरतः सर्वे परद्रव्यपरायणाः ॥३९॥
मत्स्यामिषेण जीवंति दुहंतश्चाप्यजीविकाम् । घोरे कलियुगे विप्र सर्वे पापरता जनाः ॥४०॥
सतामसूयानिरतां उपहासं प्रकुर्वते । सरित्तीरेषु कुद्दालैर्वापयिष्यंति चौषधीः ॥४१॥
पृथ्वी निष्फलतां याति बीजं पुष्पं विनश्यति । वेश्यालाण्यशीलेषु स्पृहां कुर्वंति योषितः ॥४२॥
धर्मविक्रयिणो विप्राः स्त्रियश्च भगविक्रयाः । वेदविक्रयकाश्चान्ये शूद्राचाररता द्विजाः ॥४३॥
साधूनां विधवानां च वित्तान्यपहरंति च । न व्रतानि चरिष्यन्ति ब्राह्मणा द्रव्यलोलुपाः ॥४४॥
धर्माचारं परित्यज्य वृथावादैर्विषज्जिताः । द्विजाः कुर्वंति दंभार्थं पितृश्राद्धादिकाः क्रियाः ॥४५॥
अपात्रेष्वेव दानानि प्रयच्छंति नराधमाः । दुग्धलोभनिमित्तेन गोषु प्रीतिं च कुर्वते ॥४६॥
न कुर्वंति तथा विप्राः स्नानशौचादिकाः क्रियाः । अपात्रेष्वेव दानानि प्रयच्छंति नराधमाः ॥४७॥
साधुनिंदापराश्चैव विप्रनिंदापरास्तथा । न कस्यापि मनो विप्र विष्णुभक्तिपरं भवेत् ॥४८॥
यज्विनश्च द्विजानैव धनार्थराजकिंकराः । ताडयंति द्विजान्दुष्टाः कृष्णे कृष्णत्वमागते ॥४९॥
दानहीना नराः सर्वे घोरे कलियुगे मुने । प्रतिग्रहं प्रकुर्वंति पतितानामपि द्विजाः ॥५०॥
कलेः प्रथमपादेऽपि विनिंदंति हरिं नराः । युगान्ते च हरेर्नाम नैवकश्चिद्वदिष्यति ॥५१॥

शूद्रस्त्रीसंगनिरता विधवासंगलोलुपाः । शूद्रान्नभोगनिरता भविष्यंति कलौ द्विजाः ॥५२॥
विहाय वेदसन्मार्गं कुपथाचारसंगताः । पाषंडाश्चभविशष्यंतिचतुराश्रमनिंदकाः ॥५३॥
न चद्विजातिशुश्रूषां कुर्वंति चरणोद्भवाः । द्विजातिधर्मान्गृह्णन्ति पाखण्डलिङ्गिनोऽधमाः ॥५४॥
काषायपरिवीताश्च जटिला भस्मधूलिताः । शूद्राधर्मान्प्रवक्ष्यंती कूटयुक्तपरायणाः ॥५५॥
द्विजाःस्वाचारमुत्स्सृज्यचपरपाकान्नभोजिनः । भविष्यंतिदुरात्मानः शूद्राः प्रव्रजितास्तथा ॥५६॥
उत्कोचजीविनस्तत्र भविष्यंति कलौ मुने । धर्महीनास्तु पाषंडा कापाला भिक्षवोऽधमाः ॥५७॥
धर्मविध्वंसशीलानां द्विजानां द्विजसत्तम । शूद्रा धर्मान्प्रवक्ष्यंतिह्यधिरुह्योत्तमासनम् ॥५८॥
एते चान्येच बहवो नग्नरक्तपटादिकाः । पाषंडाः प्रचारिष्यंति प्रायो वेदविदूषकाः ॥५९॥
गीतवादित्रकुशलाः क्षुद्रधर्मसमाश्रयाः । भविष्यंतिकलौ प्रायो धर्मविध्वंसका नराः ॥६०॥
अल्पद्रव्या वृथालिंगा वृथाहंकारदूषिताः । हर्तारं परवित्तानां भवितारो नराधमाः ॥६१॥
प्रतिग्रहपरा नित्यं जगदुन्मार्गशीलिनः । आत्मस्तुतिपराः सर्वे परनिंदापरास्तथा ॥६२॥
विश्वस्तघातिनः क्रूरा दयाधर्मविवर्जिताः । भविष्यंति नरा विप्र कलौ चाधर्मबांधवाः ॥६३॥
परमायुश्च भविता तदा वर्षाणि षोडश । घोरे कलियुगे विप्र पञ्चवर्षा प्रसूयते ॥६४॥
सप्तवर्षाष्टवर्षाश्च युवानोऽतः परे जरा । स्वकर्मत्यागिनः सर्वे कृतघ्नाभिन्नवृत्तयः ॥६५॥
याचकाश्चद्विजा नित्यं भविष्यंति कलौ युगे । परावमाननिरताः प्रहृष्टाः परवेश्मनि ॥६६॥
तत्रैव निंदानिरता वृथाविश्रंभिणो जनाः । निदां कुर्वंति सततं पितृमातृसुतेषु च ॥६७॥
वदंति वाचा धर्मांश्च चेतसा पापलोलुपाः । धनविद्यावयोमत्ताः सर्वदुःखपरायणाः ॥६८॥
व्याधितस्करदुर्भिक्षैः पीडिता अतिमांयिनः । प्रपुष्यंति वृथैवामी न विचार्य च दुष्कृतम् ॥६९॥
धर्ममार्गप्रणेतारं तिरस्कुर्वंति पापिनः । धर्मकार्ये रतं चैव वृथाविश्रंभिणो जनाः ॥७०॥
भविष्यंति कलौ प्राप्ते राजानो म्लेच्छजातयः । शूद्रा भैक्ष्यरताश्चैव तेषां शुश्रूषणे द्विजाः ॥७१॥
न शिष्यो न गुरुः कश्चिन्न पुत्रो न पिता तथा । न भार्या न पतिश्चैव भवितारोऽत्र संकरे ॥७२॥
कलौ गते भविष्यंति धनाढ्या अपि याचकाः । रस विक्रयिणश्चापि भविष्यंति द्विजातयः ॥७३॥
धर्मकंचुकसंवीता मुनिवेषधरा द्विजाः । अपण्यविक्रयरता अगम्यागामिनस्तथा ॥७४॥
वेदनिंदापराश्चैव धर्मशास्त्रविनिंदकाः । शूद्रवृत्त्यैव जीवंति नरकार्हा द्विजा मुने ॥७५॥
अनावृष्टिभयं प्राप्ता गगनासक्तदृष्टयः । भविष्यंति कलौ मर्त्यासर्वे क्षुद्भयकातराः ॥७६॥
कंदपर्णफलाहारास्तापंसा इव मानवाः । आत्मानं तारयिष्यंति अनावृष्ट्यातिदुखिताः ॥७७॥
कामार्ता ह्रस्वदेहाश्च लुब्धाश्चाधर्मतत्पराः । कलौ सर्वे भविष्यंति स्वल्पभाग्या बहुप्रजाः ॥७८॥
स्त्रियः स्वपोषणपरा वेश्या लावण्यशीलिकाः । पतिवाक्यमनादृत्य सदान्यगृहतत्पराः ॥७९॥
दुःशीला दुष्टशीलेषु करिष्यिंति सदा स्पृहाम् । असद्वृत्ता भविष्यंति पुरुषेषु कुलांगनाः ॥८०॥
चौरादिभयभीताश्च काष्ठयंत्राणि कुर्वते । दुर्भिक्षकरपीडाभिरतीवोपद्रुता जनाः ॥८१॥
गोधूमान्नयवान्नाढ्ये देशे यास्यंति दुःखिताः । निधाय हृद्यकर्माणि प्रेरयंति वचः शुभम् ॥८२॥
स्वकार्यसिद्धिपर्यन्तं बंधुतां कुर्वते जनाः । भिक्षवश्चापि मित्रादिस्नेहसंबंधयंत्रिताः ॥८३॥
अन्नोपाधिनिमित्तेन शिष्यान्गृह्णंति भिक्षवः ॥८४॥
उभाभ्यामथ पाणिभ्यां शिरःकंडूयनं स्त्रियः । कुर्वंत्यो गुरुभर्तृणामाज्ञामुल्लंघयंति च ॥८५॥
पाषंडालापनिरताः पाषंडजनसंगिनः । यदा द्विजा भविष्यंति तदा वृद्धिं कलिर्व्रजेत् ॥८६॥
यदा प्रजा न यक्ष्यंति न होष्यंति द्विजातयः । तदैव तु कलेर्वृद्धिरनुमेया विचक्षणैः ॥८७॥
अधर्मवृद्धिर्भविता बालमृत्युरपि द्विज । सर्वधर्मेषु नष्टेषु याति निःश्रीकतां जगत् ॥८८॥
एवं कलेः स्वरूपं ते कथितं विप्रसत्तम । हरिभक्तिपरानेष न कलिर्बाधते क्वचित् ॥८९॥
ततः परं कृतयुगे त्रेतायुगे त्रेतायां ध्यानमेव च । द्वापरे यज्ञमेवाहुर्दानमेकं कलौ युगे ॥९०॥
यत्कृते दशभिर्वर्षैस्त्रेतायां शरदा च यत् । द्वापरे यच्च मासेन ह्यहोरात्रेण तत्कलौ ॥९१॥

ध्यायन्कृते यजन्यज्ञैस्त्रेतायां द्वापरेऽर्चयन् । यदाप्नोति तदाप्नोति कलौ संकीर्त्य केशवम् ॥९२॥
अहोरात्रं हरेर्नाम कीर्तयंति च ये नराः । कुर्वंति हरिपूजां वा न कलिर्बाधते च तान् ॥९३॥
नमो नारायणायेति कीर्तयंति च ये नराः । निष्कामा वा सकामा वा न कलिर्बाधते च तान् ॥९४॥
हरिनामपरा ये तु घोरे कलियुगे द्विज । त एव कृतकृत्याश्च न कलिर्बाधते हि तान् ॥९५॥
हरिपूजापरा ये च हरिनामपरायणाः । त एव शिवतुल्याश्च नात्र कार्या विचारणा ॥९६॥
समस्तजगदाधारं परमार्थस्वरुपिणम् । घोरे कलियुगे प्राप्ते विष्णुं ध्यायन्न सीदति ॥९७॥
अहो अति सुभाग्यास्ते सकृद्वै केशवार्चकाः । घोरें कलियुगे प्राप्ते सर्वधर्मविवर्जिते ॥९८॥
न्यूनातिरिक्तदोषाणां कलौ वेदोक्तकर्मणाम् । हरिस्मरणमेवात्र संपूर्णत्वविधायकम् ॥९९॥
हरे केशव गोविंद वासुदेव जगन्मय । इतीरयंति ये नित्यं नहि तान्बाधते कलिः ॥१००॥
शिव शंकर रुद्रेश नीलकंठ त्रिलोचन । इति जल्पंति ये वापि कलिस्तान्नापि बाधते ॥१०१॥
महादेव विरूपाक्ष गंगाधर मृडाव्यय । इत्थं वदंति ये विप्र ते कृतार्था न संशयः ॥१०२॥
जनार्दन जगन्नाथ पीतांबरधराच्युत । इति वाप्युच्चरंतीह न च तेषां कलेर्भयम् ॥१०३॥
संसारे सुलभाः पुंसां पुत्रदारधनादयः । घोरे कलियुगे विप्र हरिभक्तस्तु दुर्लभा ॥१०४॥
कर्मश्रद्धाविहीना ये पाषंडा वेदनिंदकाः । अधर्मरिता नैव नरकार्हा हरिस्मृतेः ॥१०५॥
वेदमार्गबहिष्ठानां जनानां पापकर्मणाम् । मनः शुद्धिविहीनानां हरिनाम्नैव निष्कृतिः ॥१०६॥
दैवाधीनं जगत्सर्वमिदं स्थावरजंगमम् । यथाप्रेरितमेतेन तथैव कुरुतें द्विज ॥१०७॥
शक्तितः सर्वकर्माणि वेदोक्तानि विधाय च । समर्पयेन्महाविष्णौ नारायणपरायणः ॥१०८॥
समर्पितानि कर्माणि महविष्णौ परात्मनि । संपूर्णतां प्रयांत्येव हरिस्मरणमात्रतः ॥१०९॥
हरिभक्तिरतानां च पापबंधो न जायते । अतोऽतिदुर्लभा लोके हरिभक्तिर्दुरात्मनाम् ॥११०॥
अहो हरिपरा ये तु कलौ घोरे भयंकरे । ते सुभाग्या महात्मानः सत्संगरहिता अपि ॥१११॥
हरिस्मरणनिष्ठानां शिवनामरतात्मनाम् । सत्यं समस्तकर्माणि यांति संपूर्णतां द्विज ॥११२॥
अहो भाग्यमहो भाग्यं हरिनाम रतात्मनाम् । त्रिदशैरपि ते पूज्याः किमन्यैर्बहुभाषितैः ॥११३॥
तस्मात्समस्तलोकानां हितमेव मयोच्यते । हरिनामपरान्मर्त्यान्न कलिर्बाधतेक्वचित् ॥११४॥
हरेर्नामैव नामैव नामैव मम जीवनम् । कलौ नास्त्येव नास्त्येव नास्त्येव गतिरन्यथा ॥११५॥

सूत उवाच ॥

एवं स नारदो विप्राः सनकेन प्रबोधितः । परां निर्वृत्तिमापन्नः पुनरेतदुवाच ह ॥११६॥

नारद उवाच ॥

भगवन्सर्वशास्त्रज्ञ स्वयातिकरुणात्मना । प्रकाशितं जगज्ज्योतिः परं ब्रह्म सनातनम् ॥११७॥
एतदेव परं पुण्यमेतदेव परं तपः । यः स्मरेत्पुंडरीकाक्षं सर्वपापविनाशनम् ॥११८॥
ब्रह्मन्नानाजगच्चैतदेकचित्संप्रकाशितम् । त्वयोक्तं तत्प्रतीयेऽहं कथं दृष्टांतमंतरा ॥११९॥
तस्माद्येन यथा ब्रह्म प्रतीतं बोधितेन तु । तदाख्याहि यथा चित्तं सीदत्स्थितिमवाप्नुयात् ॥१२०॥
एतच्छ्रुत्वा वचो विप्रा नारदस्य महात्मनः । सनकः प्रत्युवाचेदं स्मरन्नारायणं परम् ॥१२१॥

सनक उवाच ॥

ब्रह्मन्नहं ध्यानपरो भवेयं सनंदनं पृच्छ यथाभिलाषम् । वेदांतशास्त्रे कुशलस्तवायं निवर्तयेद्वा परमार्यवंद्यः ॥१२२॥
इतीरितं समाकर्ण्य सनकस्य स नारदः । सनंदनं मोक्षधर्मान्प्रष्टुं समुपचक्रमे ॥१२३॥
इति श्रीबृहन्नारदीयपुराणे पूर्वभागे प्रथमपादे नाममहात्म्यन्नामैकचत्वारिंशोऽध्यायः ॥४१॥
आदितः श्लोकानां समष्ट्यङ्काः-३,४१७+१२३=३,५४० (पेज २ को २११)



## ॥ अथ द्विचत्वारिंशोऽध्यायः ॥

श्रीनारद उवाच॥
कुतः सृष्टमिदं ब्रह्मञ्जगत्स्थावरजंगमम् । प्रलये च कमभ्येति तन्मे ब्रूहि सनन्दन॥१॥
ससागरः सगगनः सशैलः सबलाहकः । सभूमिः साग्निपवनो लोकोऽयं केन निर्मितः॥२॥
कथं सृष्टानि भूतानि कथं वर्णविभक्तयः । शौचाशौचं कथं तेषां धर्माधर्मविधिः कथम्॥३॥
कीदृशो जीवतां जीवः क्व वा गच्छंति ये मृताः । अस्माल्लोकादमुं लोकं सर्वं शंसतु मे भवान्॥४॥
सनंदन उवाच॥
श्रृणु नारद वक्ष्यामि चेतिहासं पुरातनम् । भृगुणाभिहितं शास्त्रं भरद्वाजाय पृच्छते॥५॥
कैलासशिखरे दृष्ट्वा दीप्यमानं महौजसम् । भृगुमहर्षिमासीनं भरद्वाजोऽन्वपृच्छत॥६॥
भरद्वाज उवाच॥
कथं जीवो विचरति नानायोनिषु संततम् । कथं मुक्तिश्च संसाराज्जायते तस्य मानद॥७॥
यश्च नारायणः स्रष्टा स्वयंभूर्भगवन्स्वयम् । सेव्यसेवकभावेन वर्तेते इति तौ सदा॥८॥
प्रविशंति लये सर्वे यमीशं सचराचराः । लोकानां रमणः सोऽयं निर्गुणश्च निरंजनः॥९॥
अनीर्दृश्योऽप्रतर्क्यश्च कथं ज्ञायेत कैर्मुने । कथमेनं परात्मानं कालशक्तिदुरन्वयम्॥१०॥
अतर्क्यचरितं वेदाः स्तुवन्ति कथमादरात् । जीवो जीवत्वमुल्लंघ्य कथं ब्रह्म समन्वयात्॥११॥
एतदिच्छाम्यहं श्रोतुं तन्मे ब्रूहि कृपानिधे । एवं स भगवान्पृष्टो भरद्वाजेन संशयम्॥१२॥
महर्षिर्ब्रह्मसंकाशः सर्वं तस्मै ततोऽब्रवीत् ।
भृगुरुवाच॥
मानसो नाम यः पूर्वो विश्रुतो वै महर्षिभिः॥१३॥
अनादिनिधनो देवस्तथा तेभ्योऽजरामरः । अव्यक्त इति विख्यातः शाश्वतोऽथाक्षयोऽव्ययः॥१४॥
यतः सृष्टानि भूतानि जायंते च म्रियंति च । सोऽसृजत्प्रथमं देवो महांतं नाम नामतः॥१५॥
आकाशमिति विख्यातं सर्वभूतधरः प्रभुः । आकाशादभवद्वारि सलिलादग्निमारुतौ ॥१६॥
अग्निमारुतसंयोगात्ततः समभवन्मही । ततस्तेजो मयं दिव्यं पद्मं सृष्टं स्वयंभुवा॥१७॥
तस्मात्पद्मात्समभवद्ब्रह्मा वेदमयो विधिः । अहंकार इति ख्यातः सर्वभूतात्मभूतकृत्॥१८॥
ब्रह्मा वै स महातेजा य एते पञ्च धातवः । शैलास्तस्यास्थिसंधास्तु मेदो मांसं च मेदिनी॥१९॥
समुद्रास्तस्य रुधिरमाकाशमुदरं तथा । पवनश्चैव निश्वासस्ते जोऽग्निर्निम्नगाः शिराः॥२०॥
अग्नीषोमौ च चन्द्रार्कौ नयने तस्य विश्रुते । नभश्चोर्ध्वशिरस्तस्य क्षितिः पदौ भुजौ दिशः॥२१॥
दुर्विज्ञेयो ह्यचिन्त्यात्मा सिद्धैरपि न संशयः । स एष भगवान्विष्णुरनन्त इति विश्रुतः॥२२॥
सर्वभूतात्मभूतस्थो दुर्विज्ञेयोऽकृतात्मभिः । अहंकारस्य यः स्रष्टा सर्वभूतभवायवै॥
ततः समभवद्विश्व पृष्टोऽहं यदिह त्वया॥२३॥
भरद्वाज उवाच॥
गगनस्य दिशां चैव भूतलस्वानिलस्य च । कान्यत्र परिमाणानि संशयं छिंधि तत्त्वतः॥२४॥
भृगुरुवाच॥
अनंतमेतदाकाशं सिद्धदैवतसेवितम् । रम्यं नानाश्रयाकीर्णं यस्यां तो नाधिगम्यते ॥२५॥
ऊर्ध्वं गतेरधस्तात्तु चन्द्रादित्यौ न पश्यतः । तत्र देवाः स्वयं दीप्ता भास्कराभाग्निवर्चसः॥२६॥
ते चाप्यन्तं न पश्यंति नभसः प्रथितौजसः । दुर्गमत्वादनंतत्वादिति मे वद मानद॥२७॥
उपरिष्टोपरिष्टात्तु प्रज्वलद्भिः स्वयंप्रभैः । निरुद्धमेतदाकाशं ह्यप्रमेयं सुरैरपि॥२८॥
पृथिव्यंते समुद्रास्तु समुद्रांते तमः स्मृतम् । तमसोंऽते जलं प्राहुर्जलस्यांतेऽग्निरेव च॥२९॥
रसातलांते सलिलं जलांते पन्नगाधिपाः । तदंते पुनराकाशमाकाशांते पुनर्जलम् ॥३०॥
एवमंतं भगवतः प्रमाणं सलिलस्य च । अग्निमारुततोयेभ्यो दुर्ज्ञेयं दैवतैरपि॥३१॥
अग्निमारुततोयानां वर्णा क्षितितलस्य च । आकाशसदृशा ह्येते भिद्यंते तत्त्वदर्शनात्॥३२॥

नरोन दीपकशिखौच्यभक्तो ह्यथ भोद्वने । शङ्कौ नृदीपाधश्छिद्रघ्नैर्दीपौच्चयं नरान्विते ॥५७॥
विशङ्कुदीपौच्च्य गुणाच्छाया शङ्कूद्धृता भवेत् । दीपशंक्वन्तरं चाथ च्छायाग्रविवरघ्नभा ॥५८॥
मानान्तरद्धुद्भूमिः स्यादथो भूनराहतिः । प्रभाप्ता जायते दीपशिखौच्चयं स्यात् त्रिराशिकात् ॥५९॥
एतत् संक्षेपतः प्रोक्तं गणिते परिकर्मकम् । ग्रहमध्यादिकं वक्ष्ये गणिते नातिविस्तरान् ॥६०॥
युगमानं स्मृतं विप्र खचतुष्करदार्णवाः । तद्दशांशास्तु चत्वारः कृताख्यं पादमुच्यते ॥६१॥
त्रयस्त्रेता द्वापरः द्वौ कलिरेकः प्रकीर्तितः । मनुकृताब्दसहिता युगानामेकसप्ततिः ॥६२॥
विधर्द्दिने स्युर्विप्रेन्द्र मनवस्तु चतुर्दश । तावत्येव निशा तस्य विप्रेन्द्र परिकीर्तिता ॥६३॥
स्वयम्भुवा शरगतानब्दान्सम्पिण्डच्च नारद । खचरानयनं कार्यमथवेष्टयुगादितः ॥६४॥
युगे सूर्यज्ञशुक्राणां खचतुष्करदार्णवाः । पूजार्किगुरुशुव्रगणां भगणापूर्वपापिनाम् ॥६५॥
इन्दोरसाग्नित्रिषु सप्त भूधरमार्गणाः । दस्रत्र्याष्टरसाङ्काश्विलोचनानि कुजस्य तु ॥६६॥
बुधशीघ्रस्य शून्यर्तुखादित्र्यङ्कनगेन्दवः । बृहस्पतेः खदस्राक्षिवेदस्रड् हूयस्तथा ॥६७॥
शितशीघ्रस्य यष्णसत्रियमाश्विस्वभूधराः । शनेर्भुजगषट्पञ्चरसवेदनिशाकराः ॥६८॥
चन्द्रोञ्चस्याग्निशून्याक्षिवसुसर्पार्णवा युगे । वामं पातस्य च स्वग्नियमाश्विशिखिदस्रकाः ॥६९॥
उदयादुदयं भानोर्भूमैः साचेन वासराः । वसुह्यष्टाद्रिरूपाङ्कसप्ताद्रितिथयो युगे ॥७०॥
षड्वहित्रिहुताशाङ्कतिथयश्चाधिमासकाः । तिथिक्षायायमार्थाक्षिद्वचष्टव्योमशराश्विनः ॥७१॥
खचतुष्का समुद्राष्टकुर्पचरविमासकाः । षट् त्र्यग्निवेदाग्निपञ्च शुभ्रांशुमासकाः ॥७२॥
प्रागातेः सूर्यमन्दस्य कल्पेसप्ताष्टवह्नयः । कौजस्य वेदस्वयमा बौधस्याष्टर्तुवह्नयः ॥७३॥
खखरन्ध्राणि जैवस्य शौक्रस्यार्धगुणेषवः । गोऽग्नयः शनिमन्दस्य पातानामथवा मतः ॥७४॥
मनुदस्रास्तु कौजस्य बौधस्याष्टाष्टसागराः । कृताद्रिचन्द्रा जैवस्य शौक्रस्याग्निखनन्दकाः ॥७५॥
शनिपातस्य भगणाः कल्पे यमरसर्तवः । वर्तमानयुगे पानावत्सरा भगणाभिधाः ॥७६॥
मासीकृता युता मासैर्मधुशुक्लादिभिर्गतैः । पृथक्त्थासिधिमासग्रासूर्यमासविभाजिताः ॥७७॥
अथाधिमासकैर्युक्ता दिनीकृत्य दिनान्विताः । द्विस्थास्तिथिक्षायाभ्यस्ताश्चान्द्रवासरभाजिताः ॥७८॥
लथोनरात्रिरहिता लङ्कायामर्द्धरात्रिकः । सावनोद्यूगसारकादिर्दिनमासाब्दयास्ततः ॥७९॥
सप्तिभिः क्षप्तिः शेषः सूर्याद्यो वासरेश्वरः । मासाब्ददिनसंख्यासं द्वित्रिघ्नं रूपसंयुतम् ॥८०॥
सप्तोर्द्धनावशेषौ तौ विज्ञेयौ मासवर्षपौ । स्नेहस्य भगणाभ्यस्तो दिनराशिः कुवासरैः ॥८१॥
विभाजितो मध्यगत्या भगणादिर्ग्रहो भवेत् । एवं ह्यशीघ्रमन्दाच्च ये प्रोक्ताः पूर्वपापिनः ॥८२॥
विलोमगतयः पातास्तद्वच्चक्राद्विशोधिताः । योजनानि शतान्यष्टौ भूकर्णौ द्विगुणाः स्मृतः ॥८३॥
तद्वर्गतो दशगुणात्पद भूपरिधिर्भवेत् । लम्बज्याघ्नस्वजीवाप्तः स्फुटो भूपरिधिः स्वकः ॥८४॥
तेन देशान्तराभ्यस्ता ग्रहभुक्तिर्विभाजिता । कलादितत्फलं प्राच्यां ग्रहेभ्यः परिशोधयेत् ॥८५॥
रेखाप्रतीचिसंस्थाने प्रक्षिपेत्स्युः स्वदेशतः । राक्षसातपदेवौकः शैलयोर्मध्यसूत्रगाः ॥८६॥
अवन्तिकारोहतिकं तथा सन्निहितं सरः । वारप्रवृत्तिवाग्देशे क्षयार्द्धेभ्यधिको भवेत् ॥८७॥
तद्देशान्तरनाडीभिः पश्चादूने विनिर्दिशेत् । इष्टनाडीगुणा भुक्तिः षष्ट्या भक्ता कलादिकम् ॥८८॥
गते शोद्धयं तथा योज्यं गम्ये तात्कालिको ग्रहः । भचक्रलिप्ताशीत्यंशः परमं दक्षिणोत्तरम् ॥८९॥
विक्षिप्यते स्वपातेन स्वक्रान्त्यन्तादनुष्णगुः । तत्र वासं द्विगुणितजीवस्त्रिगुणितं कुजः ॥९०॥
बुधशुक्रार्कजाः पातैर्विक्षिप्यन्ते चतुर्गुणम् । राशिलिप्ताष्टमो भागः प्रथमं ज्यार्द्धमुच्यते ॥९१॥
ततो द्विभक्तलब्धोनमिश्रितं तद्द्वितीयकम् । आद्येनैव व्रमात्पिण्डान् भक्ताल्लब्धोनितैर्युतान् ॥९२॥
खण्डकाः स्युश्चतुर्विंशा ज्यार्द्धपिण्डाः क्रमादमी । परमा पक्रमज्या तु सप्तरन्ध्रगुणेन्दवः ॥९३॥
तद्गुणज्या त्रिजिवाप्ता तञ्चापं क्रान्तिरुच्यते । ग्रहं संशोध्य मन्दो च्चत्तथा शीघ्राद्विशोध्य च ॥९४॥
शेषं कन्दपदं तस्माद्भुजज्या कोटिरेव च । गताद्भुजज्याविषमे गम्यात्कोटिः पदे भवेत् ॥९५॥
समेति गम्याद्बाहुज्या कोटिज्यानुगता भवेत् । लिप्तास्तत्त्वयमैर्भक्ता लब्धज्यापिण्डकं गतम् ॥९६॥

गतगम्यान्तराभ्यस्तं विभजेत्तत्त्वलोचनैः । तदवाप्तफलं योज्यं ज्यापिण्डे गतसंज्ञके ॥९७॥
स्यात्क्रमज्याविधिश्चैवमुत्क्रमज्यागता भवेत् । लिप्तास्तत्त्वयमैर्भक्ता लब्धज्या पिण्डकं गतम् ॥९८॥
गतगम्यान्तराभ्यस्तं विभजेत्तत्त्वलोचनैः । तदवाप्तफलं योज्यं ज्यापिण्डे गतसंज्ञके ॥९९॥
स्यात्क्रमज्याविधिश्चैवमुक्त्रमज्यास्वपि स्मृतः । ज्यां प्रोह्य शेषं तत्त्वताश्वि हन्तं तद्विवरोद्धृम् ॥१००॥
संख्यातत्त्वाश्विसंवर्ग्य संयोज्यं धनुरुच्यते । रवेर्मन्दपरिध्यंशा मनवः शीतगोरदाः ॥१०१॥
युग्मान्ते विषमान्ते तु नखलिप्तो नितास्तयोः । युग्मान्तेऽथाद्रयः खाग्निसुराः सूर्या नवार्णवाः ॥१०२॥
ओजे द्व्यगा च सुयमारदारुद्र ागजाब्धयः । कुजादीनामतः शौघ्न्या युग्मान्तेर्थाग्निदस्रकाः ॥१०३॥
गुणाग्निचन्द्राः खनगाद्विरसाक्षीणि गोऽग्नयः । ओजान्ते द्वित्रियमताद्विविश्वेयमपर्वताः ॥१०४॥
खर्तुदस्रा विपद्वेदाः शीघ्रकर्मणि कीर्तिताः । ओजयुग्मान्तरगु णा भुजज्यात्रिज्ययोद्धृताः ॥१०५॥
युग्मवृत्तेधनर्णश्यादोजाद्नेऽधिके स्फुटम् । तद्गुणे भुजकोटिज्येभ गणांशविभाजिते ॥१०६॥
तद्भुजज्याफलधनुर्मान्दं लिप्तादिकं फलम् । शैघ्र्यकोटिफलं केन्द्रे मकरादौ धनं स्मृतम् ॥१०७॥
संशोध्यं तु त्रिजीवायां कर्कादौ कोटिजं फलम् । तद्बाहुफलवर्गैक्यान्मूलकर्णश्चलाभिधः ॥१०८॥
त्रिज्याभ्यस्तं भुजफलं मकरादौ धनं स्मृतम् । संशोध्यं तु त्रिजीवायां कर्कादौ कोटिजं फलम् ॥१०९॥
तद्बाहुफलवर्गैक्यान्मूलं कर्णश्चलाभिधः । त्रिज्याभ्यस्तं भुजफलं पलकर्णविभाजितम् ॥११०॥
लब्धस्य चापं लिप्तादि फलं शैघ्र्यमिदं स्मृतम् । एतदादौ कुजादीनां चतुर्थे चैव कर्मणि ॥१११॥
मान्द्यं कर्मैकमर्केन्द्वोर्भौमादीनामाथोच्यते । शैघ्र्यं मान्द्यं पुनर्मान्द्यं शैघ्र्यं चत्वार्यनुक्रमात् ॥११२॥
अजादिकेन्द्रे सर्वेषां मान्द्ये शैघ्र्ये च कर्मणि । धनं ग्रहाणां लिप्तादि तुलादावृणमेव तत् ॥११३॥
अर्कबाहुफलाभ्यस्ता ग्रहभुक्तिविभाजिताः । भचक्रकलिकाभिस्तु लिप्ताः कार्या ग्रहेऽर्कवत् ॥११४॥
ग्रहभक्तः फलं कार्यं ग्रहवन्मन्दकर्मणि । कर्कादौ तद्धनं तत्र मकरादावृणं स्मृतम् ॥११५॥
दोर्ज्योत्तरगुणाभुक्रिस्तत्त्वनेत्रोद्धृता पुनः । स्वमन्दपरिधिक्षुण्णा भगणांशोद्धृताः कलाः ॥११६॥
मन्दस्फुटकृता भुक्तिः प्रोह्य शीघ्रोच्चभुक्तितः । तच्छेषं विवरे णाथ हन्यात् त्रिज्याङ्ककर्णयोः ॥११७॥
चक्रकर्णहृतं भुक्तौ कर्णे त्रिज्याधिके धनम् । ऋणमूनेऽधिके प्रोह्य शेषं वक्रगतिर्भवेत् ॥११८॥
कृतर्तुचन्द्रैर्वेदेन्द्रैः शून्यत्र्येकैर्गुणाष्टभिः । शररुद्रैश्चतुर्थांशुकेन्द्रांशैर्भूसुतादयः ॥११९॥
वक्रिणश्चक्रशुद्धैस्तैरंशैरुजुति वक्रताम् । क्रमज्या विषु वद्धाघ्नी क्षितिज्या द्वादशोद्धृता ॥१२०॥
त्रिज्यागुणा दिनव्यासभक्ता चापं च शत्रवः । तत्कार्मुकमुदव्र ान्तौ धनहीनो पृथक्क्षते ॥१२१॥
स्वाहोरात्रचतुर्भागे दिनरात्रिदले स्मृते । याम्यव्र ान्तौ विपर्यस्ते द्विगुणैते दिनक्षये ॥१२२॥
भभोगोऽष्टशतीर्लिप्ताः स्वाश्विशैलोस्तथा तिथेः । ग्रहलिप्ता भगाभोगाभानि भुक्त्यादिनादिकम् ॥१२३॥
रवीन्दुयोगलिप्तास्तु योगाभभोगभाजिताः । गतगम्याश्च षष्टिघ्ना भुक्तियोगाप्तनाडिकाः ॥१२४॥
अर्कोनचन्द्रलिप्तास्तु तिथयो भोगभाजिताः । गतगम्याश्च षष्टिघ्ना नाऽतोभुक्ततरोद्धताः ॥१२५॥
तिथयः शुक्लप्रतिपदो द्विघ्नाः सैका नगाहताः । शेषं बवो बालवश्च कौलवस्तैतिलो गरः ॥१२६॥
वणिजोभ्रे भवेद्विष्टिः कृष्णभूतापरार्द्धतः । शकुनिर्नागाश्च चतुष्पद किंस्तुघ्नमेव च ॥१२७॥
शिलातलेवसंशुद्धे वज्रलेपेति वा समे । तत्र शकाङ्गुलैरिष्टैः सममण्डलमालिखेत् ॥१२८॥
तन्मध्ये स्थापयेच्छङ्कं कल्पनाद् द्वादशाङ्गुलम् । तच्छायाग्रं स्पृशेद्यत्र दत्तं पूर्वापराह्णयोः ॥१२९॥
तत्र बिन्दुं विधायोभौ वृत्ते पूर्वापराभिधौ । तन्मध्ये तिमिना रेखा कर्तव्या दक्षिणोत्तरा ॥१३०॥
याम्योत्तरदिशोर्मध्ये तिमिना पूर्वपश्चिमा । दिग्मध्यमत्स्यैः संसाध्या विदिशस्तद्वदेव हि ॥१३१॥
चतुरस्तं बहिः कुर्यात्सूत्रैर्मध्याद्विनिःसृतैः । भुजसूत्राङ्गुलैस्तत्र दत्तैरिष्टप्रभा मता ॥१३२॥
प्राक्पश्चिमाश्रिता रेखा प्रोच्यते सममण्डलम् । भमण्डलं च विषुवन्मण्डलं परिकीर्तितम् ॥१३३॥
रेखा प्राच्यपरा साध्या विषुवद्भाग्रया तथा । इष्टच्छायाविषुवतोर्मध्ये ग्राह्याभिधीयते ॥१३४॥
शङ्कुच्छायाकृतियुतेर्मूलं कर्णोऽयवर्गतः । प्रोह्य शङ्कुकृते मूलं छाया शङ्कुविपर्ययात् ॥१३५॥
त्रिंशत्कृत्योयुगे भानां चक्रं प्राक्परिलम्बते । तद्गु णाद्भदिनैर्भक्त्याद्युगणाद्यदवाप्यते ॥१३६॥

तद्दोस्त्रिघ्नादशाघ्नांशा विज्ञेया अयनाभिधाः । तत्संस्क्कृताद्ग्रहात् कान्तिच्छायावरदलादिकम् ॥१३७॥
शङ्कुच्छायाहते त्रिज्ये विषुवत्कर्कभाजिते । लम्बाक्षज्ये तयोस्छाये लम्बाक्षौ दक्षिणौ सदा ॥१३८॥
साक्षार्कापक्रमयुतिर्दिक्साम्येऽन्तरमन्यथा । शेषद्यानांशाः सूर्यस्य तद्बाहुज्याथ को टिजाः ॥१३९॥
शङ्कुमानाङ्गुलाभ्यस्ते भुजत्रिज्ये यथाक्रमम् । कोटीज्यया विभज्याप्ते छायाकर्णाबहिर्दले ॥१४०॥
स्वाक्षार्कनतभागानां दिक्साम्येऽन्तरमन्यथा । दिग्भेदोपक्रमः शेषस्तस्य ज्या त्रिज्यया हता ॥१४१॥
परमोपक्रमज्याप्त चापमेषादिगो रविः । कर्कादौ प्रोह्यचक्रार्द्धात्तुलादौ भार्द्धसंयुतात् ॥१४२॥
मृगादौ प्रोह्यचक्रात्तु मध्याह्नेऽर्कः स्फुटो भवेत् । तन्मन्दमसकृद्वामं फलं मध्यो दिवाकरः ॥१४३॥
ग्रहोदयाः प्राणहताः खखाष्टैको द्धता गतिः । चक्रासवो लब्धयुती स्वाहोरात्रासवः स्मृताः ॥१४४॥
त्रिभद्युकर्णार्द्धगुणा स्वाहोरात्रार्द्धभाजिताः । व्र'मादेकद्वित्रिभाज्या तच्चापानि पृथक् पृथक् ॥१४५॥
स्वाधोऽधः प्रविशोध्याथ मेषाल्लङ्कोदयासवः । स्वागाष्टयोऽथगोगैकाः शरत्र्येकं हिमांशवः ॥१४६॥
स्वदेशचरखण्डोना भवन्तीष्टोदयासवः । व्यस्ताव्यस्तैर्युतास्तैस्तैः कर्कटाद्यास्ततस्तु यः ॥१४७॥
उत्क्रमेण षडेवैते भवंतीष्टास्तुलादयः । गतभोग्यासवः कार्याः सायनास्स्वेष्टभास्कराः ॥१४८॥
स्वोदयात्सुहता भक्ता भक्तभोग्याः स्वमानतः । अभिष्टघटिकासुभ्यो भोग्यासून्प्रविशोधयेत् ॥१४९॥
तद्वदेवैष्यलग्नासूनेवं व्याप्तास्तथा क्रमात् । शेषं त्रिंशत्क्रमाद्धयस्तमशुद्धेन विभाजितम् ॥१५०॥
भागयुक्तं च हीनं च व्ययनांशं तनुः कुजे । प्राक्पश्चान्नतनाडीभ्यस्तद्वल्लङ्कोदयासुभिः ॥१५१॥
भानौ क्षयधने कृत्वा मध्यलग्नं तदा भवेत् । भोग्यासूनूनकस्याथ भुक्तासूनधिकस्य च ॥१५२॥
सपिण्डद्यान्तरलग्नासूनेवं स्यात्कालसाधनम् । विराह्वर्कभुजांशाश्चेदिन्द्राल्पाः स्याद् ग्रहो विधोः ॥१५३॥
तेषां शिवघ्नाः शैलाप्ता व्यावर्काजः शरोङ्गुलैः । अर्कं विधुर्विधुं भूभा छादयत्यथ छन्नकम् ॥१५४॥
छाद्यछादकमानार्धं शरोनं ग्राह्यवर्जितम् । तत्स्वच्छन्नं च मानैक्यार्द्धाशषष्टं दशाहतम् ॥१५५॥
छन्नघ्नमस्मान्मूलं तु खाङ्गोनग्लौवपुर्हृतम् । स्थित्यर्द्धं घटिकादि स्याद् व्यङ्गबाह्वंशसम्मितैः ॥१५६॥
इष्टैः पलैस्तदूनाढ्यं व्यगावूनेऽकषड्गुणः । तदन्यथाधिके तस्मिन्नेवं स्पष्टे सुखान्त्यगे ॥१५७॥
ग्रासेन स्वाहतेच्छाद्यमानाप्ते स्युर्विशोपकाः । पूर्णान्तं मध्यमत्र स्याद्दर्शान्तेंजं त्रिभोनकम् ॥१५८॥
पृथक् तत्क्रान्त्यक्षभागसंस्कृतौ स्युर्नतांशकाः । तद्विघ्नांशकृतिद्व्यूनार्द्धार्कयुता हरिः ॥१५९॥
त्रिभानाङ्गार्कविश्लेषांशोंशोनघ्नाः पुरन्दराः । हराप्तालम्बनं स्वर्णवित्रिभेऽर्काधिकोनके ॥१६०॥
विश्वघ्नलम्बनकलाढ्योनस्तु तिथिवद्यगुः । शरोनोलम्बनषडघ्ने तल्लवाढ्योनवित्रिभात् ॥१६१॥
नतांशास्तजांसाने प्राधृतस्तद्विवर्जितः । शब्देन्दुलिप्तैः षड्भिस्तु भक्ता नतिर्नतांशदिक् ॥१६२॥
तयोर्नाटद्योह भिन्नैकदिक्शरः स्फुटतां व्रजेत् । ततश्छन्नस्थितिदले साध्ये स्थित्यर्द्धषट्त्रिभिः ॥१६३॥
अंशस्तैर्वित्रिभं द्विस्थं लम्बने तयोः पूर्ववत् । संस्कृतेस्ताभ्यां स्थित्यर्द्धे भवतः स्फुटे ॥१६४॥
ताभ्यां हीनयुतो मध्यदर्शः कालौ मुखान्तगौ । अर्काद्यूना विश्व ईशा नवपञ्चदशांशकाः ॥१६५॥
कालांशास्तैरूनयुक्ते रवौ ह्यस्तोदयौ विधोः । दृष्ट्वा ह्यादौ खेटबिम्बं दृगौच्चे लम्बमीक्ष्य च ॥१६६॥
तल्लम्बपापबिम्बान्तर्दृगौ व्याप्तरविघ्नभाः । अस्ते सावयवा ज्ञेया गतैष्यास्तिथयो बुधैः ॥१६७॥
व्यस्ते युकान्तिभागैश्च द्विघ्नतिथ्याहृता स्फुटम् । संस्कारदिकलम्बनमङ्गुलाद्यं प्रजायते ॥१६८॥
सेष्वशोनाः सितं तिथ्यो बलन्नाशोन्नतं विधोः । श्रृङ्गमन्यत्र उद्वाच्यं बलनाङ्गुललेखनात् ॥१६९॥
पञ्चत्वे गोङ्कविशिखाः शेषकर्णहताः पृथक् । विकृज्यर्काङ्गसिद्धाग्निभक्ता लब्धोनसंयुताः ॥१७०॥
त्रिज्याधिकोने श्रवणे वपूंषि स्युर्हृताः कुजात् । ऋज्वोरनृज्वोर्विवरं गत्यन्तरविभाजितम् ॥१७१॥
वक्रत्वोंगतियोगामं गम्येऽतीते दिनादिकम् । खनत्यासंस्कृतौव्वेषू दक्साम्येन्येन्तरं युतिः ॥१७२॥
याम्योदक्खेटविवरं मानैक्यार्द्धोल्पकं यदा । यदा भेदो लम्बनाद्यं स्फुटार्थं सूर्यपर्ववत् ॥१७३॥
एकायनगतौ स्यातां सूर्याचन्द्रमसौ यदा । तयुते मण्डले व्र'ान्त्यौ तुल्यत्वे वै धृताभिधः ॥१७४॥
विपटीतायनगतौ चन्द्रार्कौ व्र'ान्तिलिप्तिकाः । समास्तदा व्यतीपातो भगणार्द्धे तपोयुतौ ॥१७५॥
भास्करेन्द्वोर्भचक्रान्त चक्रार्द्धावधिसंस्थयोः । दृक्कल्पसाधितांशादियुक्तयोः स्वावपक्रमौ ॥१७६॥

अथोजपदगम्येन्दोः क्रान्तिर्विक्षेपसंस्कृताः । यदि स्यादधिका भानोः क्रान्तेः पातो गतस्तदा ॥१७७॥
न्यूना चेत्स्यात्तदा भावी वामं युग्मपदस्य च । यदान्यत्वं विधोः क्रान्तिः क्षेपाच्चेद्यदि शु द्ध्यति ॥१७८॥
क्रान्त्योर्ज्ये त्रिज्ययाभिस्ते परमायक्रमो द्धृते । तच्चापान्तमर्द्धवायो ज्र्यभाविनशीतगौ ॥१७९॥
शोध्यं चन्द्राद्गते पाते तत्सूर्यगतिताडितम् । चन्द्रभु क्त्या हृते भानौ लिप्तादिशशिवत्फलम् ॥१८०॥
तद्वच्छशाङ्कपातस्य फलं देयं विपर्ययात् । कर्मैतदसकृत्तावत्क्रान्ती यावत्समेतयोः ॥१८१॥
क्रान्त्योः समत्वे पातोऽथ प्रक्षिप्तांशोनिते विधौ । हीने ऽर्द्धरात्रिकाघातो भावी तात्कालिकेऽधिका ॥१८२॥
स्थिरीकृतार्द्धरात्राद्धौ द्वयोर्विवरलिप्तकाः । षष्टिश्चाचन्द्रभुक्ताप्ता पातकालस्य नाडिकाः ॥१८३॥
रवीन्द्वोर्मानयोगार्द्धं षष्ट्या सङ्गुण्य भाजयेत् । तयोर्भुक्त्यन्तरेणाप्तं स्थित्यमर्द्धं नाडिकादिवत् ॥१८४॥
पातकालः स्फुटो मध्यः सोऽपि स्थित्यर्द्धवर्जितः । तस्य सम्भवकालः स्यात्तत्संयोगेक्तसंज्ञकः ॥१८५॥
आद्यन्तकालयोर्मध्ये कालो ज्ञेयोऽतिदारुणः । प्रज्वलज्ज्वलनाकारः सर्वकर्मसु गर्हितः ॥१८६॥
इत्येतद्गणितो किञ्चित्प्रोक्तं संक्षेपतो द्विज । जातकं वाच्मि समयाद्राशिसंज्ञापुरःसरम् ॥१८७॥

इति श्रीबृहन्नारदीयपुराणे पूर्वभागे बृहदुपाख्याने द्वितीयपादे ज्योतिषवर्णनं नाम चतुःपञ्चाशत्तमोऽध्यायः ॥५४॥
आदितः श्लोकानां समष्ट्यङ्काः-४,९२९+१८७=५,११६



## ॥ अथ पञ्चपञ्चाशत्तमोऽध्यायः ॥

सनन्दन उवाच ॥

मूर्द्धास्यबाहुहृत्क्रोडान्तर्बस्तिव्यञ्जसोनखः । जानुजङ्घाङ्घ्रियुगलं कालाङ्गानि क्रियादयः ॥१॥
भौमास्फुजिबुधेन्दुश्च रविसौम्यसिताः कुजः । गुरुमन्दार्किगुरवो मेषादीनामधीश्वराः ॥२॥
होरे विषमभेर्केन्दोः समये शशिसूर्ययोः । आदिपञ्चनवाधीशा द्रेष्काणेशाः प्रकीर्तिताः ॥३॥
पञ्चेष्टाष्टादिपञ्चाशा कुजार्कीज्यइज्ञशुक्रगाः । ओजे विपर्ययाद्युग्मे त्रिशांशेशाः समीरिताः ॥४॥
क्रियणतौलिककर्काद्या मेषादिषु नवांशकाः । स्वभाद् द्वादशभागेशाः षड्वर्गं राशिपूर्वकम् ॥५॥
गोजाश्च कर्कयुग्मेन रात्र्याख्या पृष्ठकोदयाः । शेषा दिनाख्यास्तूभयं तिमिः क्रूरः सौम्यः पुमान् ॥६॥
पुमांश्च स्त्री च क्लीबश्च चररस्थिरद्विःस्वभावकाः । मेषाद्याः पूर्वतोदिक्स्थाः स्वस्वस्थानचरास्तथा ॥७॥
अजोक्षैणाङ्गनाकीटभषजूका इनादितः । उच्चानि द्वित्रिमनुयुक्तिथीषुभनखांशकैः ॥८॥
तत्तत्सप्तमनीचानि प्राङ्मध्यान्त्यांशकाः क्रमात् । वर्गोत्तमाश्चराधेषु भावादद्वादश मूर्तिमान् ॥९॥
सिंहोक्षाविस्त्रिश्चतौलिकुंभाः सूर्यात्त्रिकोणभम् । चतुरस्रं तूर्यमृत्युत्रिकोणं नवपञ्चमम् ॥१०॥
रिःफाष्टषट्कं त्रिकभं केन्द्रं प्राक्तुर्यसप्तखम् । नृपादः कीटपशवो बलाढ्याः केन्द्रगाः क्रमात् ॥११॥
केन्द्रात्परं पणफरमापोक्लिममतः परम् । रक्तः श्वेतः शुकनिभः पाटलो धूम्रपाण्डुरौ ॥१२॥
चित्रः कृष्णः पीतपिङ्गौ बभ्रुः स्वच्छः प्रभाक्रियात् । साम्याशाख्यप्लवत्वं स्याद् द्वितीये वशिरर्कभात् ॥१३॥
कालात्मार्को मनस्चद्रः कुजः सत्त्वं वचो बुधः । जीवो ज्ञानं सुखं शुक्रः कामो दुःखं दिनेशजः ॥१४॥
नृपौ रवीन्दू नेतासृक् कुमारो ज्ञः कवीज्यकौ । सचिवो सूर्यजः प्रेष्यो मतो ज्योतिर्विदां वरैः ॥१५॥
ताम्रशुक्लरक्तहरित्पीतचित्रासिता रवेः । वर्णा व अव्यहहरीद्रा शचीकौधिपारवेः ॥१६॥
रविशुक्राररराहर्केन्दुविदीज्या दिगीश्वराः । क्षीणेन्द्वर्काररविजाः पापा पापयुतो बुधः ॥१७॥
क्लिबौ बुधार्की शुक्रेन्दू स्त्रियौ शेषा नराः स्मृताः । शिखिभूमिपयोवारिवासिनो भूसुतादयः ॥१८॥
कवीज्यौ कुजसूर्यौ च वेदो ज्ञो वर्णपाः क्रमात् । सौरोऽन्त्यजाधिपः प्रोक्तो राहुम्लेच्छाधिपस्तथा ॥१९॥
चन्द्रार्कजीवाज्ञसितौ कुजार्की सात्त्विकादिकाः । देवतेन्द्वग्निखैलाभूकोसखायोपराधिपाः ॥२०॥
वस्रं स्थलं नवं वह्निकहतं मद्यदं तथा । स्फुटितं रवितस्तांम्रं तारे ताम्रपुनिस्तथा ॥२१॥
हेमकांस्यायसी त्र्यंशैःशिशिराद्याः प्रकीर्तिताः । सौरशुक्रारचन्द्रज्ञगुरुष्वृत्सु च क्रमात् ॥२२॥
त्र्याशत्रिकोणतुर्याष्टसप्तमान्येन वृद्धितः । सौरेज्यारापरे पूर्णे क्रमात्पश्यन्ति नारद ॥२३॥

अयनक्षणघस्रर्तुमासार्द्धशरदो रवेः । कटुतिक्तक्षारमिश्रमधुराम्लकषायकाः ॥२४॥
त्रिकोणात्सान्त्यधाधर्मायुः सुखखोद्यपः सुहृत् । जीवो जीवज्ञौ सितज्ञौ व्यर्का व्याराः क्रमादमी ॥२५॥
वीन्द्वर्का विकुजेन्द्वर्काः सुहृदोऽन्ये रवेर्धृताः । मिथोधनव्ययायत्रिबन्धुव्यापारगः सु हृत् ॥२६॥
ध्येकानुभक्तामयान् ज्ञात्वा मिश्रीदीत्सहजान्मुने । मत्कालोधिसुहृन् मित्रपूर्वकान् कल्पयेत्पुनः ॥२७॥
स्वोच्चत्रिकोणगेहा प्रनवांशैस्थानजं बलम् । दिक्षु सौम्येज्ययोः सूर्यारयोः सौरे सिताब्जयोः ॥२८॥
रवादृतूद्गनेन्ये तु वक्त्रे च समागमे । उत्तरस्था दीप्तकराश्चे ष्टा वीर्ययुता मताः ॥२९॥
निशीन्दुकुजसौराश्च सर्वदा क्षोह्नि चापरे । क्रूराः कृष्णे सिते सौम्याः मतं कालबलं बुधैः ॥३०॥
सौरारज्ञेज्यशुक्रेन्दुसूर्याधिक्यं परस्परम् । पापास्तु बलिनः सौम्या विवक्षाः कण्टकोपगे ॥३१॥
क्लीबे तद्दूशनाद्वापि चन्द्रार्कांशसमं जनुः । स्वांशे पापाः परांशस्थाः सौम्या लग्नं वियोनिजम् ॥३२॥
निर्बलं च तदादेश्यं वियोनेर्जन्म पण्डितैः । शीर्षं वक्रगले पादावंसौ पृष्टमुरस्तथा ॥३३॥
पार्श्वे कुक्षी त्वपानाङ्घ्री मेढ्रमुष्कौ तथा स्फिजौ । पुच्छं चतुष्पदाङ्गेषु मेषाद्या राशयः स्मृताः ॥३४॥
लग्नांशाद्बहयुग्दृष्ट्वा वर्णान् बलयुताद्वदेत् । दृक्समानप्रमाणांश्च इष्टे रेखां स्मरस्थितैः ॥३५॥
खगत्र्यंशे बलाग्नेगे चरमांशे ग्रहान्विते । वांशे स्थलाम्बुजः सौरेर्द्वीक्षायोगभवा द्विजाः ॥३६॥
विप्रलैस्तनुजचन्द्रेज्यार्कैस्तरूणां जनिं वदेत् । स्थलाम्बुभेन्दोशकृतश्चेतरेषामुदाहृतः ॥३७॥
स्थलाम्बु च पतिः खेटो लग्नाद्यावन्मिते गृहे । तावन्त एव तरवः स्थलजा जलजास्तथा ॥३८॥
अन्तःसारा रवौ सौरे दुर्भगाः क्षीरिणो विधौ । भौमे कण्टकिनो वृक्षा ईज्ये ज्ञे सफलाफलौ ॥३९॥
पुष्पिता भार्गवे स्निग्धाश्चन्द्रेऽथ कटुकाः कुजे । अशुभर्क्षे शुभः खेटः शुभं वृक्षं कुभूमिजम् ॥४०॥
कुर्याद्विलोमगो वापि स्वांशोक्तपरगैः समम् । कुजेन्दुहेतुकं स्त्रीणां प्रतिमासमिहार्तवम् ॥४१॥
नेष्टस्थेज्येऽन्यथास्ते स्त्रीयुक्तासन्नरेक्षिते । पापयुक्तेक्षिते द्यूने रुषा प्रीत्या शुभग्रहैः ॥४२॥
शुक्रार्केन्दुजैः स्वांशस्थैरीज्य चाङ्गत्रिकोणगे । भवेददपत्यं विप्रेन्द्र पुंसां सद्वीर्यशालिनाम् ॥४३॥
अस्नेऽकेन्दो कुजार्की चेत्पुंस्त्रियोरामयप्रदौ । व्ययखगो युक्तौ चैकदृष्ट्या मृत्युप्रदौ तयोः ॥४४॥
शुक्रार्कौ मातृपितरौ दिवा नक्तं शशीनजौ । मातृष्वसृपितृव्याख्यौ वा पद्मेजि समे शुभौ ॥४५॥
पापदृष्टे शुभे क्षीणे तुङ्गे वा लग्नगे यमे । क्षीणेन्दुकुजसन्दृष्टे मृत्युमेत्य गता ध्रुवम् ॥४६॥
युगपद्वा पृथक्सस्थौ लग्नन्दू पापमध्यगौ । यदा तदा गर्भयुता नारी मृत्युमवाप्नुयात् ॥४७॥
लग्नाच्चन्द्राच्च तुर्यस्थैः पापैर्निधनगे कुजे । नष्टेन्दौ कुजरव्योश्च बन्धुरिष्फगयोर्मृतिः ॥४८॥
तन्वस्तसंस्थयोर्भौमरव्योः शस्त्रभवः क्षयः । यन्मासाधिपतिर्नष्टस्तन्मासं संस्रवे त्यजेत् ॥४९॥
लग्नेन्दुगैः शुभैः खेटैस्त्रिकोणार्थास्तभूखगैः । पापैस्त्रिषष्ठलाभस्थैः सुखी गर्भो रवीक्षितः ॥५०॥
ओजभे पुरुषांशेऽर्के ज्येन्दुलग्नैर्बलान्वितैः । गुर्वर्कौ विषमस्थौ वा पुंजन्म प्रवदेत्तदा ॥५१॥
युग्मभांशस्थितैस्तैस्तु वक्रेन्दुभृगुभिस्तथा । यामस्थानगतैर्वाच्यं स्त्रियो जन्म मनीषिभिः ॥५२॥
द्व्यङ्गस्था बुधसन्दृष्टाः स्वपक्षे यमलङ्कराः । लग्नं विनौजभावस्थः सौरः पुंजन्मकृत्तथा ॥५३॥
मिथो रवीन्दूर्ज्ञार्की वा पश्यतः समगं रविः । वक्रो वाङ्गविधू ओजे जज्ञौ युग्मौजसंस्थितौ ॥५४॥
कुजेक्षिते पुमांशे तु दुहिता क्लीब जन्मदा । समे सितेन्दू ओजस्था ज्ञाराङ्गेज्या नृवीक्षितौ ॥५५॥
लग्नेन्दुसमगौ युग्मस्थाने वा यमलङ्कराः । ग्रहोदयस्थान्यङ्गांशान्पश्यति ज्ञे स्वभागगे ॥५६॥
त्रितयं ज्ञांशकाद्युग्ममिश्रैः सममादिशेत् । लग्ने चापान्त्यभागस्थे तदंशस्थ बलिग्रहैः ॥५७॥
वीर्याढ्यज्ञार्किसदृष्टैः कोशस्थावहवोगिनः । सितारेज्यार्कचन्द्रार्किज्ञाङ्गेशोर्केन्दवोऽधिपाः ॥५८॥
मासानां तत्समं वाच्यं गर्भस्थस्य शुभाशुभम् । त्रिकोणे ज्ञे परैर्नैष्टैर्द्विमुखाह्विकपान्वितः ॥५९॥
अवागावाटावशुभैर्भसंधिस्थैः प्रजायते । वीरान्सगीश्चदष्टेध्वष्टार्कातभसंहिताः ॥६०॥
आरार्की चेज्यभांशस्थौ सदन्तोगर्भकस्तदा । खभेजे भुवि मन्दारदृ ष्टे कुब्जस्तु गर्भगः ॥
पङ्गुर्मीने यमेद्वारैर्दृष्टैथाङ्गेभघसन्धिगे ॥६१॥
पापैर्जडो विधौ गर्भः शुभदृष्टिविवर्जिते । मृगान्त्यगे वामनकः सौरेन्द्रर्कनिरीक्षिते ॥

धीनयोदपगैस्त्र्यंशैः पापास्तैरसिरोहृदाः ॥६२॥
रवीन्दुयुक्ते सिंहेङ्गे माहेयार्किनिरीक्षिते । नेत्रहीना मिश्रखेटैर्दृष्टे बुद्बुदलोचनाः ॥
व्ययेजो वामनयनं दक्षं सूर्यो विनाशयेत् ॥६३॥
नेष्टा योगाः शुभैर्दृष्टाः पापाः स्युर्नात्र संशयः । मन्देऽस्ते मन्दभांशेङ्गे निषेकेब्दत्रये जनिः ॥६४॥
द्वादशाब्दे शशिन्येवं सुतावपि विचिन्तयेत् ॥६५॥ आधानेन्दुद्वादशांशा पापास्तद्राशिभिः पुरः ॥६६॥
शशाङ्के जन्मभागादिद्विघ्नमिष्टकलाः स्मृताः ॥६७॥ पितुः परोक्षे जन्म स्यादिन्दौ लग्नमपश्यति ॥६८॥
मध्याद्भ्रष्टेर्के विदेशस्थे जन्ने नारिजन्म वै । मन्देङ्गस्थे कुजेस्ते च ज्ञोस्फुजि मध्यगे विधौ ॥६९॥
पापाङ्गेब्जे त्रिभागे लौ स्वायगैः सद्भिरुद्गतः । सूर्यस्तद्दृष्टिगो वापि ज्ञेयो ज्योतिर्विदां वरैः ॥७०॥
चतुष्पदर्क्षगे भानौ शेषैर्बलयुतैः खगैः । कोशादतौ तु यमलौ जायेते मुनिसत्तम ॥७१॥
सार्क्यारसिंहोज्ञाजांसे भांशतुत्याङ्गनालयुक् । लग्नमिन्दुं च सार्केन्दुं न पश्यति यदा गुरुः ॥७२॥
सपापगोऽर्कौ जायो वा परवीर्यप्रसूतिकृत् । पापभस्थौ पापखेटैः सूर्याघानत्रिको णगौ ॥७३॥
विदेशगः पितावृद्धः खेवा राशिवशात्यये । पूर्ण इन्दौ स्वभेशेङ्ग शुभे भुव्यम्बुजे तनौ ॥७४॥
द्यूनस्थे वा विधौ यातेंगना नारी प्रसूयते । अब्धाङ्गमन्भगः पूर्णे ज्यो वा पश्यति नारद ॥७५॥
स्वबंधलग्नगः सूतिः सलिले नात्र संशयः । पापदृष्टे यमे गुप्यां जन्माङ्गाजव्ययस्थिते ॥७६॥
कर्कातिलग्नगेशौरे वटे जन्माब्जवीक्षिते । मन्दे जन्मगते लग्ने बुधसूर्येन्दुवीक्षिते ॥७७॥
क्रीडास्थाने देवगेहेऽप्यूषरे च क्रमाज्जनिः । श्मशाने लग्नदृगसृग्ग्राम्यस्थानेब्जभार्गवौ ॥७८॥
अग्निहोत्रगृहे जीवोऽको भूषाभरणे गृहे । शिल्पालये बुधो जन्म कुर्याद्बलसमन्वितः ॥७९॥
भासमाने सरे मार्गे स्थिरे स्वर्क्षांशगे गृहे । त्रिकोणगेज आराक्योरस्ते वा सृज्यतेऽम्बया ॥८०॥
गुरुदृष्टे तु दीर्घायुः परं च प्राप्यते पुनः । पापदृष्टे विधौ लग्नेऽस्ते कुजे तु विनश्यति ॥८१॥
भवे कुजाक्योः संदृष्टे परहस्तगतः सुखी । पापेद्यतायुर्भवति मासः सार्थैः परैरपि ॥८२॥
पितृमातृगेहे जन्म तदधीशबलान्मुने । तरुगेहे शुभे नीचे नैकस्थदृष्टौ लग्नेन्दुः ॥८३॥
एतल्लक्षणसम्पन्ना प्रसीतिर्विजने तदा । मन्दर्क्षांशे विधौ तुर्ये मन्ददृष्टेऽब्जगेऽपि वा ॥८४॥
मन्दार्चने वा तमसि शयनं नीचगे भुवि । शीर्षे पृ ष्ठोदये जन्म तद्वदेव विनिर्दिशेत् ॥८५॥
चन्द्रास्तसुखगः पापैर्मातुः पीडां समादिशेत् । जीर्णोद्धृतं गृहं मन्दे सृजि दग्धं न वा विधौ ॥८६॥
काष्टाढचमदृढं सूय बहुशिल्पयुतं बुधे । चित्रयुक्तं नवं शुक्रे दृढे रम्ये गुरौ गृहम् ॥८७॥
धटाजकर्क्यलिघटे पूर्वे ज्ञेज्यगृहे ह्युदक् । वृषे पश्चान्मृगे सिंहे दक्षिणे वसतिर्भवेत् ॥८८॥
गृहप्राच्यादिगौ द्वौ द्वौ द्वङ्गाः कोणेष्वजादयः । पर्यङ्के वास्तुवत्पादास्त्रिषदङ्कान्त्यराशयः ॥८९॥
चन्द्रागान्तरगैः खेटैः सूतिकाः समुदाहृताः । चक्राद्धि बहिरन्तश्च दृश्यादृश्योपरेऽन्यथा ॥९०॥
लग्नाशयसमानाङ्गौ बालिखेटंसमोपि वा । चन्द्रनन्दांशवद्वर्णः शीर्षाद्यङ्गविभाग युक् ॥९१॥
शीर्षकं दक्श्रवे नासा कपोलहनवो मुखम् । कण्ठांसपार्श्वहृद्दोषः व्र णोडं नाभिश्च बास्तिकः ॥९२॥
शिश्नापाते च वृषणौ जघने जानुनी तथा । जङ्घे पादौ चोभयत्र त्र्यंशैः समुदितैर्वदेत् ॥९३॥
पापयुक्ते व्रणस्तस्मिन्नङ्गे लक्ष्म च तद्युते । स्वर्क्षांशे स्थिरयुक्ते तु नैज आगन्तुकोऽन्यथा ॥९४॥
मन्देऽनिलाश्मजो भौमे विषशस्त्राग्निजो बुधे । भुजेऽर्के काष्ठपशुजो जेतुः शङ्खयजयोनिजः ॥९५॥
यस्मिन्संज्ञास्त्रयः खेटा अङ्गेस्युस्तत्र निश्चितम् । व्रणोशुभकृतः पृष्ठे तनौ राशिसमाश्रिते ॥९६॥
तिलकृन्मसकृदष्टसौम्यैर्युक्तश्च लक्ष्मवान् । चतुरस्रः पिङ्गदृक् च पैत्तिकोऽल्पकचो रविः ॥९७॥
वृतो वातकफी प्राज्ञो मन्दवाक् शुभदृक् शशी । क्रूरदृक्तरुणो भौमः पैत्तिकश्चपलस्तथा ॥९८॥
त्रिधानुपवृतिर्हास्यरुचिज्ञः श्लिष्टवाक्तथा । पिङ्गके श्लक्ष्णो दीर्घः कफी धीमान्गुरुर्मतः ॥९९॥
सुवपुर्लोचनः कृष्णवक्रकेशो भृगुः सुखी । दीर्घः कपिलदृङ्मन्दो निलीखरकचोलसः ॥१००॥
स्नाय्वस्थिरक्तत्वक्शुक्रवसामज्जास्तु धातवः । मन्दार्कचन्द्रसोम्यास्फुजिज्जीवकुभुवः व्र मात् ॥१०१॥
चन्द्राङ्गपापैर्भात्यस्थैः सेंवुपापचतुष्टयैः । चक्रपूर्वापरे पापसौम्यैः कीटतनौ मृतिः ॥१०२॥

उदयास्तगतौ पापौ चन्द्रः क्रूरयुतैः शुभैः । न चे दृष्टस्तदा मृत्युर्जातस्य भवति ध्रुवम् ॥१०३॥
क्षीणेऽब्जे व्ययगे पापैर्लग्नाष्टस्थैः शुभा न चेत् । के न्द्रेषु वाब्जोसंयुक्तः स्मरान्त्यमृतिलग्नगः ॥१०४॥
केन्द्राद्या हस्त सन्खेटैरदृष्टो मृत्युदस्तथा । षष्टेमेब्जेऽसदृष्टेसद्यो मृत्युः शुभेक्षिते ॥१०५॥
समाष्टके मिश्रखेटैर्दृष्टिर्दृष्टे मृतिः शिशोः । क्षीणेब्जेङ्गे रन्ध्रकेन्दे पापे पापान्तरस्थिते ॥१०६॥
भूद्यूननिधने वाब्जे लग्नेऽप्येवं शिशोर्मृतिः । पापैश्चन्द्रास्तगैर्मात्रा सार्द्धं सदृष्टिमन्तरा ॥१०७॥
शुभादृष्टे भान्त्यगेब्जे त्रिको णोपरतैः खलैः । लग्नस्थे वा विधौ पापैरस्तस्थैर्मृतिमाप्नुयात् ॥१०८॥
ग्रस्तेऽब्जेऽसद्भिरष्टस्थै सृज्यवात्मजयोर्मृतिः । लग्ने रवौ तु शस्त्रेण सवीर्यासद्भिरष्टगैः ॥१०९॥
कर्केन्द्वीज्ययुते लग्ने केन्द्रे सौम्ये च भार्गवे । शेषैस्त्र्यरीशगैरायुरमितं भवति ध्रुवम् ॥११०॥
वर्गोत्तमे मीनलग्ने वृषेऽब्जे तत्त्वलिप्सिके । स्वतुङ्गस्थेष्वशेषेषु परमायुः प्रकीर्तितम् ॥१११॥
शुभैर्दृष्टः सवीर्योगे केन्द्रस्थे चायुरर्थदः । स्वच्चोब्जे स्वर्क्ष गैः सौम्यैः सवीर्येगाधिपे तनौ ॥११२॥
षष्ट्यब्दकेन्द्रसौम्येभेष्टशुद्धे सप्ततिर्गुरौ । मूलत्रिकोणगैः सौम्यैर्गुरो स्वोच्चसमन्विते ॥११३॥
लग्नाधिपे बलयुते शीत्यब्दं त्वायुरीरितम् । सवीर्यैं सत्सु केन्द्रेषु त्रिंशच्छुद्धियुतेऽष्टमे ॥११४॥
लयेशे धर्मगे जीवेष्टस्थे क्रूरेक्षिते जिताः । लग्नाष्टमेशावष्टस्थौ भाब्दमायुः करौ मतौ ॥११५॥
लग्नेऽशुभेज्यौ ग्लौदृष्टौ मृत्यौ कश्चन चाकृतिः । धर्माङ्गस्थे शनौ शुक्रे केन्द्रेऽब्जे व्ययधर्मगे ॥११६॥
शताब्दं गीष्पतौ कर्के कटकस्थसितेज्ययोः । लयेशेङ्गे शुभैर्हीनेऽष्टमे खाब्धिमितं वयः ॥११७॥
लग्ने शेष्टमगेष्टेशे तनुस्थे पञ्चवत्सरम् । कवीज्ययोगे सौम्याब्जौ लग्ने मृत्यौ च स्वेषवः ॥११८॥
एतद्योगजमायुः स्यादथ स्पष्टमुदीर्यते । सूर्याधिक बले पैण्डं निसर्गाञ्च विधोर्बले ॥११९॥
अंशायुः सबले लग्ने तत्साधनमथो श्रृणु । गोब्जास्तत्त्वतिथी सूर्यास्तिथिः स्वर्गा नखाः क्रमात् ॥१२०॥
नखा विधुर्द्वावङ्काश्च धृतिः स्वाक्षिखमार्गणाः ॥१२१॥
पिण्डे निसर्गे रवोच्चे नो ग्रहः षट्भाल्पको यदा । चक्रशु द्धस्तदा ग्राह्येस्यांशा आयुषि संमताः ॥१२२॥
अंशोनाः शत्रुभे कार्या ग्रहं वक्रगतिं विना । मन्दशुक्रौ विनार्द्धो ना ग्रहस्यास्तङ्गतस्य च ॥१२३॥
हानिद्वयेऽधिकाः कार्या यदा क्रूरस्तनौ तदा । विहायारीनंशाद्यैर्हन्यादायुर्लवान् भजेत् ॥१२४॥
भगणांशैर्लब्धहीनास्तेषां कार्या विचक्षणैः । पापस्यांशाः समग्रोना सौम्यस्यार्द्धविवर्जिताः ॥१२५॥
स्पष्टास्तेंशाः खषट्त्र्यासा गुणयित्वा स्वकैर्गणैः । वर्षाणि शेषमर्कघ्नं हारात्संमासकाः स्मृताः ॥१२६॥
तच्छेषश्च त्रिगुणितः तेनैवाप्तं दिनानि च । शेषे षष्ट्या हते भक्ते हारेण घटिकादिकम् ॥१२७॥
हित्वा भाज्यङ्गभागादीन्कलीकृत्य खखाक्षिभिः । भजेद्वर्षाणि शेषे तु गुणिते द्वादशादिभिः ॥१२८॥
द्विसप्तांशे च मासादिलग्नायुर्जायते स्फुटम् । अंशायुषी सलग्नानां खेटानामंशका हृताः ॥१२९॥
खयुगैरायुरंशाः स्युस्तत्संस्कारं वदामि ते । ग्रहोनलग्नं षड्भात्यं चेत्संस्कारोऽन्यथा नहि ॥१३०॥
तदंशः स्वाग्नयो भक्ता लब्धोनोभूर्गुणो भवेत् । यदैकाल्यं तदास्यांशाः स्वाग्यप्तोना च भूर्गुणः ॥१३१॥
सौमयस्यार्द्धेन पापस्य समग्रेणेति निश्चयः । गुमकघ्नाश्चायुरंशाः संस्कारोऽयमुदाहृतः ॥१३२॥
आयुरंशकलाभक्ताद्विंशत्याब्दा इनाहतम् । शेषं द्विशतभक्तं स्युर्मासाः शेषा दिनादिकम् ॥१३३॥
लग्नायुरंशास्त्रिगुणा दिग्भिक्ता स्युः समास्ततः । शेषेऽर्कादिगु णे भक्ते दिग्भर्मासादिकं भवेत् ॥१३४॥
सबलेङ्गेभतुल्याब्दैर्युतमायुर्भवेत्स्फुटम् । अंशद्विघ्नमक्षांशं मासाः खत्र्यादिसङ्गुणात् ॥१३५॥
शेषा दिनादिकं योज्यं नैतत्पिण्डनिसर्गयोः । लग्नार्कचन्द्र मध्ये तु यो बली तद्दशा पुरा ॥१३६॥
ततः केन्द्रादिगानां तु द्वित्र्यादौ सबलस्य च । बह्वायुर्यो वीर्यसाम्येर्काद्युतस्य प्राक् याचकः ॥१३७॥
षड्वर्गार्द्धस्य त्रिंशस्य त्रिकोणगश्च स्मरगः । सप्तमासस्य तूर्यस्य चतुरस्रगतस्य च ॥१३८॥
क्रमः केन्द्रादिकोऽत्रापि द्वित्र्यादौ सबलस्य च । पाकपस्याब्धिनागाश्च ह्यर्णवा सहगस्य च ॥१३९॥
त्रिकोणस्थस्य चाष्टाक्षिसूर्याद्यूनगतस्य च । तुर्याष्टगस्य तु स्वर्गा गु णकाः परिकीर्तिताः ॥१४०॥
दशागुणैर्हता भक्त्या गुणैक्येन समागताः । शेषेऽकादिहते भक्ते मासाद्यैक्येन नारद ॥१४१॥
अन्तर्दशासु विदशास्तासु चोपदशास्तथा । दशेशमित्रस्वोच्चक्षङ्गोब्जोब्ध्येकादिवृद्धिगः ॥१४२॥

शुभगो यद्भगस्तद्धिन्नवादिस्थेन तद्धिकृत् । प्रोक्तेतरस्थानगतस्तत्तद्भावक्षयङ्करः ॥१४३॥
खगस्य यद्भवेद् द्रव्यं भावभे क्षणयोगजम् । जीविकादिफलं सर्वं दशायां तस्य योजयेत् ॥१४४॥
विशन्यापदशायां यो वैरिदृष्टो विपत्तिकृत् । शुभमित्रेक्षितश्रेष्टसद्वर्गस्थश्च यो ग्रहः ॥१४५॥
तत्काले बलवानापन्नाशकृत्समुदाहृतः । यस्याष्टवर्गजं चापि फलं पूर्णशुभं भवेत् ॥१४६॥
यश्च मूर्तितनुग्लावो वृद्धिगः स्वोच्चभस्थितः । स्वत्रिकोणसुहृद्भस्थस्तस्य मध्यमसत्फलम् ॥१४७॥
श्रेष्ठं शुभतरं वाच्यं विपरीतगतस्य तु । नेष्टमुत्कटमिष्टं तु स्वल्पं ज्ञात्वा बलं वदेत् ॥१४८॥
चरे सन्मध्यदुष्टाभ्यामङ्गभङ्गे विपर्ययात् । स्थिरे नेष्टष्टमध्या च होरायास्त्र्यंशकैः फलम् ॥१४९॥
स्वामीज्यज्ञयुता होरा दृष्टा वा सत्फलावहा । विनाश दृष्टयुक्ता च पापान्तरगतान्यथा ॥१५०॥
प्राग्ध्वांक्षा बंधु मृत्याय तयोर्द्यूने रविः स्वभात् । वक्रात्स्वादिवसाच्चार्के शुत्र ाद्यूनां तु षड्गतः ॥१५१॥
धर्मध्यायारिगो जीवादिकत्र्यारिगो विधोः । पृध्यंत्यधीतपाः सुज्ञा ततोवृद्धचंत्यबंधुराः ॥१५२॥
वृद्धिगोंगात्सधनघीतपः स्वाराच्छशी शुभः । स्वद्वृध्यस्तादिषु पृधात्ससाष्टौ पञ्चयोपगः ॥१५३॥
षट्त्र्यायधीस्थो मन्दाच्च ज्ञाद्द्वित्र्यायाष्टकेन्द्रगः । केन्द्र ष्टायांत्य इज्याद्वा ज्ञज्यायास्तत्र स्वे कवेः ॥१५४॥
वृद्धाविनात्सादिधिया मंगा मायारिगो विधोः । केन्द्राष्टापार्थगः स्वर्क्षान्मन्दाद्द्वोष्टायकेन्द्रगः ॥१५५॥
षट् त्रिधी भवतः सौम्यात्षड्वांशाष्टगो भृगोः । कर्मायव्ययषष्ठस्थो जीवाद्भौमः शुभः स्मृतः ॥१५६॥
कवेद्धर्याषष्टमोध्याये सन्ज्ञोमन्दान्सधीत्रये । साक्षास्ते भूमिजाज्जीवाद्ययारिभवमृत्युगः ॥१५७॥
धर्मायारिसतांत्येर्कात्साद्यत्रिस्वगता स्वभात् । षट्खायाष्टाब्धिखोष्विज्यात्सहाद्येषु विलग्नतः ॥१५८॥
दिक्वाष्टाद्यस्तबंध्याये कुजात्खात्सत्रिके गुरुः । सात्र्यं के सन् रवेः शुक्राद्धीखगो दिग्भवारिगः ॥१५९॥
चन्द्राद्धीशार्थगोस्तेषु मन्दाद्धीत्रिषडंत्यगः । गोब्धिधीषट्खखाद्या ये ज्ञात्सद्यूने विलग्नतः ॥१६०॥
आशु तेशाष्टगोष्वंगःत्सांतेष्वब्जात्सितः शुभः । स्वात्सङ्गेषु त्रिधीगोब्धी दिक्छिद्रासिगतोर्कजात् ॥१६१॥
रंध्रायव्यचगः सूर्यादोष्टधीखे सगोर्गुरो । ज्ञाब्धित्र्यायारिगोरात्रिषट्ध्यध्यांत्यगोषु च ॥१६२॥
त्रिधीशारिषु मन्दः खात्साक्षांत्येषु शुभो सृजः । केन्द्रायाष्टधनेर्ष्का लग्नाद्वृद्धद्यायबंधुषु ॥१६३॥
गोध्वष्टापारिखांत्येज्ञाच्चंद्राल्लाभत्रिषद्धतः । षडष्टांत्यगतः शु क्राद्गुरोर्द्धीशांत्यशत्रुषु ॥१६४॥
उक्तस्थानेषु रेखादो ह्यनुक्तेषु तु बिंदुदाः । जन्मभाद्वद्विमित्रोच्चस्वभेधिष्टं परेष्वसत् ॥१६५॥
कष्टमर्थक्षयः क्लेशः समतार्थसुखागमः । धनाप्तिः सुखमिष्टाप्तिरिति रेखाफलं क्रमात् ॥१६६॥
पितृमातृद्विषन्मित्रभ्रातृस्त्रीभृतकाद्रवेः । स्वामिलग्नाजयोः स्वस्थाद्धेन्द्वर्कस्वयशोशयात् ॥१६७॥
तृणस्वर्णाश्वधोरणाद्यैरर्कांशे वृत्तिमादिशेत् । कृष्यंबुजस्त्रीभ्योब्जांशे कौजे धात्वस्त्रसाहसैः ॥१६८॥
काव्यशिल्पादिभिर्बोधे जवे देवद्विजाकरैः । शौक्रे रजतगोरत्नैर्मान्दे हिंसश्रमाधमैः ॥१६९॥
स्वोच्चेष्वार्की तथा ज्यारैरुक्तैकाङ्गे नृपाधिपाः । लग्ने वर्गोत्तमेऽब्जे वा चतुरादिग्रहेक्षिते ॥१७०॥
द्वाविंशभूपास्तुंगेसृक्चापेर्केन्दूयमस्तनौ । भूपकृत्तुंगगोकोर्गेस्तेसाजाकोर्खभे गुरौ ॥१७१॥
यमेंदुतुंगगौ लग्ने षष्टेऽर्कज्ञौ तुलाजगौ । सितासृजो गुरौ कर्को साराजे लग्नगे नृपाः ॥१७२॥
वृषेगेब्जेर्केज्यसौरैः सुहृज्जायाखगैर्नृपः । मन्दे मृगाङ्गेत्र्यर्यकांशस्थैरजादिभिर्नृप ॥१७३॥
सेज्याजेश्वे मृगमुखं कुजे तुंगेर्क्षभार्गवौ । लग्नेऽथ सेज्यकर्कैगे ज्ञाजशु क्रैर्भवोपगैः ॥१७४॥
मेषेऽर्के भूमिपासेंदौ एषे षाङ्गेर्कपपासृजः । सिंहकुंभमृगस्थाश्चेद्भूपः सारेतनावजे ॥१७५॥
आर्केजीवे तनौ वापि नृपोऽथोः कुजभास्करौ । धीस्थौ गुर्विन्दुकवयो भूमौ स्त्र्यगे बुधैर्नृपः ॥१७६॥
मृगास्यलग्नगैः सौरिजाब्जर्क्षहयः सयाः । कविक्षौ तुल युग्मस्थौ वै भूपः कीर्तिमान्भवेत् ॥१७७॥
यस्य कस्यापि तनयः प्रोक्तैर्योगैर्नृपो भवेत् । वक्ष्यमाणैर्नृपसुतो ज्ञेयो भूयो मुनीश्वर ॥१७८॥
स्वोच्चे त्रिकोणभगते स्त्र्याद्यैर्बलयुतैर्नृपः । सिंहि ऽर्के मेषलग्नेऽजे मृगे भौमे घटेऽष्टमे ॥१७९॥
चापे जीवे धरानाथः यादथ स्वर्क्षगे भृगौ । पातालगे धर्मगेऽब्जे शुभदृष्टे युते मुने ॥१८०॥
त्रिलग्नभवगैः शेषैर्धराधीशः प्रजायते । सौम्ये वीर्ययुतेंऽगस्थे बलाढ्येशुभगे शुभे ॥१८१॥
धर्मार्थोपचयस्थैश्च शेषैर्धर्मयुतोनृपः । मेषूरणायतनुगाः शशिसूर्यजसूरयः ॥१८२॥

ज्ञारौ धने शितरवा हिबुके भूपतिस्तदा । वृषेऽगेऽब्जोधनारिस्थो जीवार्की लांभगाः परे ॥१८३॥
सुखे गुरुः खेरवींदूयमो लग्ने भवे करै । लग्ने वव्र ꣿसितौ चन्द्रेज्यसितार्कबुधाः व्रꣿमात् ॥१८४॥
सुखास्तु शुभखाप्तिस्था नरेशं जनयंत्यपि । कर्म लग्नगखेटस्य दशायां राज्यसंगतिः ॥१८५॥
प्रबलस्य दशायां वा शत्रुनीचा दिगार्तिदाः । आसन्नकेन्द्रद्वयगैर्वर्गदाख्यः सकलग्रहैः ॥१८६॥
तन्वस्तगैश्च सकटं विहगो राज्यबंधुगैः । श्रृङ्गाटकं धिगौगस्थैर्लग्नायस्थैर्हलं मतम् ॥१८७॥
वज्रोङ्गेस्थे सत्स्वसत्सु तुर्यखस्थैर्यवोन्यथा । विमिश्रैः कमलं प्राहुर्वायाकंटकबाह्यगैः ॥१८८॥
लग्नाच्चतुर्भगैर्यूपः शरस्तूर्याच्चतुर्भगैः । द्यूनाद्वेदक्षगैः शक्तिं दऽखादिचतुर्भगैः ॥१८९॥
लग्नात्क्रमात्सप्तभगैर्नौकाकूटस्तु नुर्यतः । छत्रमस्तात्स्वभाद्यायोन्यस्मादर्द्धेन्दुनामकः ॥१९०॥
लग्नादेकांतरगतैश्चक्रमर्थात्सरित्पतिः । षड्युस्थानेषु वीणाद्याः समसप्तर्क्षसंस्थितैः ॥१९१॥
वीणादामपाशकेदारभूशूलयुगगोलकाः । ग्रहैः सर्वैश्चरभगै राजयोगः प्रकीर्तितः ॥१९२॥
स्थिरस्थैर्यमुसलं नाम द्विशरीणतैर्नलः । भाला केन्द्रस्थितैः सौम्यैः पापैस्सर्प उदाहृतः ॥१९३॥
ईर्य्युरध्वरुची रज्वां मुसले धनमानयुक् । व्यंगा स्थिरा लोनलजो मोनीस्रग्जोहिजोर्दितः ॥१९४॥
वीणोद्भवोतिनिपुणाः गीतनृत्यरुचिर्भृशम् । दाता समृ द्धो दामास्थः पाशजो धनशीलयुक् ॥१९५॥
केदारोत्थः कृषिकरः शूले शूरोक्षतो धनः । युगं पाषं डयुर्गोले विधनो मलिनस्तथा ॥१९६॥
भूपवंद्यपदश्चक्रे समुद्रे नृपभोगयुक् । सुभगाङ्गो र्द्धचंपात्सुखीशूरश्च चामरः ॥१९७॥
मित्रो पकारकृच्छत्रे कूटे चानृतबंधराट् । तौजः सकीर्तिः सुखभाक् मानवो भवति ध्रुवम् ॥१९८॥
त्यागी यज्वात्मवान् यूथे हिंस्रो गुह्याधिपः शरैः । शक्तौ नीचो ऽलसो निःस्वो दण्डे प्रियवियोगभाक् ॥१९९॥
व्यर्कैः स्वांत्योभयगतैः खेटैः स्यात्सुनफानफा । दुरुधरा चैव विधौ ज्ञेयः केमुद्रुमोऽन्यथा ॥२००॥
स्वोपार्जितार्थभुग्दाता सुनफायां धनी सुखी । नीरोगः शीलवान् ख्यातः सुवेषश्चानफाभवः ॥२०१॥
भोगी सुखी धनी दानी त्यागी दुरुधुरोद्भवः । केमुद्रुमेऽतिमलिनो दुःखी नीचोऽथ निर्धनः ॥२०२॥
यन्त्राश्मकारंशाजोको भौमपुष्करुते ध्वगः सुज्ञः । सुकीर्तिर्निपुणं विद्वांसं धनिनं तथा ॥२०३॥
सेन्योन्यकार्यनिरतं सास्फुजिच्छस्त्रजीविनम् । समन्दो धातुकुशलं तथा भाडंविदं मुने ॥२०४॥
कूटस्न्याश्वपण्याठं नसासृगिंदुः प्रसूद्विषम् । कुर्यात्सज्ञोर्थनिपुणं नम्रं सत्कीर्तिसंयुतम् ॥२०५॥
सज्योऽस्थिरवयं वंश्यं विक्रांतं च समर्थिनम् । ससितोसुकवेत्तारं सार्किपोनभवं मुने ॥२०६॥
आरे सज्ञे वाहुयोधी पुराध्यक्षः सगीष्पतौ । सशुक्रे द्यूतव्र ꣿर्हौयो नृती द्यूति समन्दके ॥२०७॥
सेज्येज्ञे नृत्यगीताढ्यो मायादक्षः सभार्गवे । समन्दे लुब्धकः क्रूरो नरो भवति नारद ॥२०८॥
सशुक्रे वाक्पतौ विद्वान्ससितेऽन्नघटंकरः । कवौ स मन्दमन्दाक्षा व वनिश्रयवित्तवान् ॥२०९॥
एकस्थैश्चतुराद्यैस्तु खवार्थैः खचरैः पृथक् । कुजज्ञेज्याजशुक्रार्किसूर्यैः परिव्रजेन्नरः ॥२१०॥
शाक्याजीवकवृद्धार्थिच रकाखफलाशनः । तत्स्वामिभिः परिजितैः प्रव्रज्याप्रच्युतिर्भवेत् ॥२११॥
अदीक्षिताल्पस्तगतैः सबलैस्तत्स्थभक्तयः । जन्मपोन्यैर्यद्यदृष्टो मन्दं पश्यति नारद ॥२१२॥
मन्दो वा जन्मपं नष्टं तथा च मन्दकागणे । भौमार्कांशे सौरदृष्टे चन्द्रे वा दीक्षितो भवेत् ॥२१३॥
सुरूपो भूषितोऽश्विन्यां दक्षः सत्यवचा यमे । बहूभुग्पदारग्नौ स्थिरधीः प्रियवाक्तथा ॥२१४॥
ब्राह्मो धनी मृगे भोगी रौद्रे हिंस्त्रः शठोऽघकृत् । दांतो रोगी शुभोऽदित्यां पुष्यर्यजन्मा कविः सुखी ॥२१५॥
धूर्तः शठः कृतघ्नोऽह्यौ पापः सर्वाशनो भवेत् । पत्रे भोगी धनी भक्तो दाता प्रियवचा भगे ॥२१६॥
धनी भोगीनरोर्यमर्क्षे स्तेनो धृष्टो घृणी करे । चित्रांबरः सुदृक्त्वाष्ट्रे न च धर्मदयापरः ॥२१७॥
द्वीशे लुब्धः पटुः क्रोधी मैढ्यो आठनोविदेशगः । शाक्रे धर्मपरस्तु ष्टो मूले मानी धनी सुखी ॥२१८॥
आप्ये मानी हृष्टो वैश्वे नम्रश्च धार्मिकः । कर्णे धनी सुखी ख्यातो दाता शूरो धनी वसौ ॥२१९॥
शेतऽरिहंता व्यसनी स्त्रीजितो जाहिभेदिनी । बुन्धे वक्ता सुखी कांतः पौष्णे शूरो धनी शुचिः ॥२२०॥
कामी शूरः कृतज्ञोऽजे कांतस्त्यागी क्षमी वृषे । युग्मे स्त्रीद्यूतशास्त्रज्ञः स्त्रेणो ह्रस्वः स्वभे विधौ ॥२२१॥
स्त्रीद्विट् क्रोधी हरौ मानी विक्रांतः स्थिरधीः सुखी । धर्मी श्लक्ष्णः सुधीः षष्ठे प्राज्ञः प्रांशुर्धनी घटे ॥२२२॥

रोगी पूज्यः क्षती कौर्प्ये कविः शिल्पीज्यभे धनी । मृगेऽलसोऽटनः स्वक्षः परदारार्थहृद्धटे ॥२२३॥
सबलेभैभयेवापि स बलेजेखिलं फलम् । अन्यथा विपरीतं तत्फलमेवं परेऽपि न ॥
ख्यातः स्त्रीद्विट् धनी तीक्ष्णोज्ञः कविः शौंडिको धनी । पूज्यो लुब्धोऽधनसखो मेषादौ भास्करे जनौ ॥२२४॥
निःस्वोऽर्कभे भूमिपुत्रे भूमिपुत्रे धनी चांद्रे स्वभेदनः । बौधे कृतज्ञो जैवे तु ख्यातः शौक्तेऽन्यदारिकः ॥२२५॥
मृगे बह्वात्मजधनः कुंभे दुःख्यनृती खलः । स्त्रीद्वेष्यः स्वजनद्वेषीनियरत्यः सधीयनः ॥२२६॥
समानार्थः सपुत्रस्त्रीसर्णः सूर्यादिभे बुधे । सेनानीः स्त्र्यर्थपुत्राढ्यः दक्षमैश्यः परिच्छदी ॥२२७॥
मण्डलेशः सार्थसुखः सर्णस्वाम्यर्कभाद्गुरौ । स्त्र्याप्तार्थो मन्दशोकाढ्यो बंधुद्वेषी धनाघवान् ॥२२८॥
सार्थः प्राज्ञः समः ख्यातिः स्त्रीजितोऽर्कादिभे मृगौ । व्यंगजार्थो खप्रसूको विधिमित्रो सुखत्रयः ॥२२९॥
सत्पुत्रस्त्रीधनो राजा ग्रामे शोकादिभेर्कजे । भूपज्ञगुणिपौरास्वादृष्टेब्जेजेसृगादिभिः ॥२३०॥
निः स्वस्तेन नृपाः प्रज्ञप्रेष्यामविनृयुग्मगे । धात्वाजीवी नृपज्ञाभीतंतुवायाधनाः स्वभे ॥२३१॥
युयुत्सुकविसूरीज्यधातुजीविद्गामयाः । ज्योतिर्ज्ञाढ्येज्यनु खलु नृपेज्ञादिकर्हरौ ॥२३२॥
षष्टे शुभैर्नृपचमूपनैपुण्यवतिताशयाः । जूके भूपस्वर्णकारवणिजः शेषदृग्युते ॥२३३॥
द्विपैतृकाब्धिध्वजिनो व्यंगा स्वक्षितिपा अलौ । ज्ञातिक्ष्माजनयाश्राये सद्भिर्दर्मी शठस्तथा ॥२३४॥
भूपमंडितसखे ज्यामृगे भूयान्यदारिकौ । कुंभे शेषैश्च हास्यज्ञनृपज्ञाः सद्भिरंत्यभे ॥२३५॥
हारेशर्क्षदलस्थैस्तु दृष्टो युक्तः शशी शुभः । त्र्यंशे तत्पतिमित्रर्क्षगतेर्युक्तेक्षितस्तथा ॥२३६॥
द्वादशांशे फलं प्रोक्तं नवांशेऽप्यथ कीर्त्यते । आरक्षेको वधरुचिर्नियुद्धकुशलोऽर्थवान् ॥२३७॥
कलहः क्षितिजांस्थे शौक्रे मूर्खोऽन्यदारदः । कविः सुखी बुधांशे तु नटचौरज्ञशिल्पिनः ॥२३८॥
स्वांशे त्वल्पतनुः सखस्तपस्वी लोभतत्परः । क्रोधी निधीशो मात्यो वा नृपो हिंस्रो सुतो हरेः ॥२३९॥
जीवांशे हास्यविद्योधा बली मंत्री च धार्मिकः । अल्पापत्यो दुःखितो खो दुष्टस्त्रीसौरिभागगे ॥२४०॥
भानाविंद्वादिदृष्टे नु तद्वदेव फलं वदेत् । वर्गोत्तमे खे परभे फलमुक्तं शुभं क्रमात् ॥२४१॥
पुष्टं मध्यं लघु ज्ञेयं यदि चांशपतिर्बली । राशीक्षणफलं रुद्ध्वा ददात्यंशफलं स्फुटम् ॥२४२॥
शूरस्तब्धो विकलदृग्निघृणो ऽर्के तनुस्थिते । मेषे धनी तैमिरकः सिंहे रात्र्यंध एव च ॥२४३॥
नीचोधोस्वः कर्कगेऽर्के उद्‌बुदाक्षस्तनुस्थिते । द्वितीयेऽर्के बहुधनो नृपदण्ड्यो मुखामयी ॥२४४॥
त्रिगे बुधो विक्रमी च विमुखः पीडितो भुवि । धनापत्योक्तितो धीस्थे बली शत्रुजितोरिगे ॥२४५॥
स्त्री जितो द्यूनसंस्थे च निधनेल्पात्मजोल्पदृक् । सुतार्थसुखभा भाग्ये दशमे श्रुतशौर्यवान् ॥२४६॥
लाभे बहुधनो मानी पतितो खो ऽव्यये रवौ । मूकोंधो बधिरः प्रेष्यो जेगे खाद्याजगे धनी ॥२४७॥
बुद्वर्वा धनवानर्धे हिंस्रो विक्रमगे भवेत् । साधुभावः सुखगते धीस्थे कन्याप्रजोलसः ॥२४८॥
अल्पाग्निकामस्तीक्ष्णोरौईर्ष्युस्तत्रिमदोज्ञखे । व्याधिपीडान्वितो मृत्यौ भानुर्द्धनगे मित्रधनान्वितः ॥२४९॥
धर्मधीधनयुग्राज्ये ख्यातधीधनयुग्भवेत् । क्षुद्रोऽङ्गहीनो व्ययगे चन्द्रे प्रोक्तं फलं बुधैः ॥२५०॥
लग्ने कुजे क्षततनुर्द्धनगे तु कदन्नभुक् । धर्मपापसमाचारोऽन्यत्र सूर्यसमो मतः ॥२५१॥
विद्वान् धनी च प्रवरः पंडितः सचिवोरियुक् । धर्मज्ञो विस्तृतगु णो गाधोज्ञेयरतोऽकवत् ॥२५२॥
विद्वान्स वाच्यः कृपणी सुखाक्षो रिपुगृद्धिमान् । नीचस्तपस्वी चष्णवनी लोभीदुष्टस्तनोर्गुरो ॥२५३॥
स्मरी मुखी विलग्नस्थे कलही सुरतोत्सुकः । सुखितस्तनपस्ये च भृगौ जीववदन्यतः ॥२५४॥
निःस्वो रोगी कामवशो मलिनः शैशवार्तियुक् । अलसो लग्नगे मन्दे धर्मात्स्वो च्चगते नृपः ॥२५५॥
ग्रामाधिपः स विद्वांश्च चार्वंगोऽन्यत्र सूर्यवत् । पूर्णमुच्चेथ पादोनफलं मूलत्रिको णगे ॥२५६॥
शुभग्रहे दलं स्वर्क्षे मित्रभें ऽघ्रिमितं फलम् । शत्रुभेऽल्प तथा नीचास्तंगते फलशून्यता ॥२५७॥
खभराकादिके खेटे कुलतुल्यः कुलाधिकः । बंधुपूज्योऽथधनवान्सुखी भोगी नृपः क्रमात् ॥२५८॥
परिवित्तसुहृद्बंधुपोष्यागणबलाधिपौ । नृ पश्च मित्रभस्थेषु खेटे घ्रेंकादिषु क्रमात् ॥२५९॥
विषमर्क्षेऽर्कहोरायां संस्थिते शुभभेषु च । ख्यातो महोद्यमी चातितेजा धीमान्धनी बली ॥२६०॥
शुभेषु चन्द्रहोरायां स्थितेषु समराशिषु । कांतिमार्दवसौभाग्यभोगधीमान्भवेन्नरः ॥२६१॥

सूर्यहोरागतः पापः समभेषु तु मध्यमाः । विषमर्क्षेषु भास्कर्या सौम्या नोक्तफलप्रदाः ॥२६२॥
स्वमित्रत्र्यंशगश्चन्द्रः सुरूपं गुणिनं नरम् । करोत्यन्नगतस्तद्वत्तत्तुल्यगु णरूपिणम् ॥२६३॥
व्यालायुधे चतुष्पादांऽजेषु च त्र्यंशके च । तीक्ष्णेऽतिहिंस्रश्च भवेद्गुरुतल्पगतोटनः ॥२६४॥
स्तेनो भोक्ता सधनधीर्नृपः क्लीबश्च शत्रुहा । विष्टिकृ द्दासवृत्तिश्च पापो हिंस्रोऽमतिर्भवेत् ॥२६५॥
मेषादिकोत्तमांशेषु द्वादशांशेषु राश्वित् । जायाबलविभूषाढ्यः सत्त्वयुक्तोऽतिसाहसी ॥२६६॥
तेजस्वी च नरः खाये त्रिंशांसे सृजिसंस्थिते । आमयी वा स्वभार्यायां विषमः पारदारिकः ॥२६७॥
दुःखी परिच्छदयुतो मलिनश्चार्कजे स्वके । सुखधीधनकीर्त्यालस्तेजस्वी लोकपूजितः ॥२६८॥
नीरगुह्यभवान्भोगी जीवे खत्रिंशभागगे । मेधाकलाकाव्यशिल्पविवादकपटांचितः ॥२६९॥
शास्त्रार्थसाहसयुतो बुधे स्वत्रिंश भागगे । बह्वपत्यसुखारोग्यरोगरूपार्थसंयुतः ॥२७०॥
ललिताङ्गो विप्रकीर्णेंद्रियः स्याद्भार्गवे स्वके । शूरस्तब्धौ च विषमवधकौ सद्गुणान्वितौ ॥२७१॥
सुखेज्ञो चारु चेष्टाङ्गौ चन्द्रार्क्कौचेत्कुजादिगौ । मूलत्रिकोणस्वर्क्षोच्चे कंठस्थास्तु च ये ग्रहाः ॥२७२॥
अन्योन्यकारकास्ते स्युः कर्मगस्तु विशेषतः । शुभं वर्गोत्तमे जन्म वेसिस्थाने वसद्ग्रहैः ॥२७३॥
अशून्येषु च केन्द्रेषु कारकाख्यगृहेषु च । गुरुजन्मेशलग्नेशाः केन्द्रस्था मध्यसौख्यदाः ॥२७४॥
पृष्ठोभवकोदपर्क्षस्थितास्त्वंत्यांतरादुषु । प्रवेशे भास्करकुजौ भृग्वीज्यौ मध्यगौ तथा ॥२७५॥
चन्द्रार्की फल दावंत्ये सदा ज्ञः फलदायकः । लग्नात्पुत्रे कलत्रे वाब्जाच्छुभेशयुतेक्षिते ॥२७६॥
स्यात्तयोः संपदः स्वत्वमन्यथाथाङ्गतोदयः । रवौ मीनेऽर्कजः स्त्रीघ्नः पुत्रस्थस्तु तथा कुजः ॥२७७॥
सिमातुर्याष्टगैः क्रूरैर्यद्वा क्रूरान्तरे सितः । सद्ग्रहायुतदृष्टश्चेदग्निपातान्मृतिः स्त्रियाः ॥२७८॥
लग्नाद्य पाणिगतयोः शशिरव्योः सह स्त्रिया । एकेन यस्य जन्माहुरथ सप्तमसंस्थयोः ॥२७९॥
नवधीर्गतयोर्वापि विकलस्त्रीसितार्कयोः । को णोदयेऽस्तात्यसन्धौ भृगौ बंध्यापतेर्जनिः ॥२८०॥
सुतभं चेन्न सौम्याढ्यमथांत्यास्तोदयर्क्षगैः । पापे धीस्थे विधौ क्षीणजन्मा सुतकलत्रिणः ॥२८१॥
शनौ खगेऽस्ते सशुक्रे तद्दृष्टे पारदारिकः । तौ चेत्सेंदुस्त्रिया सार्द्धं पुंश्चलो जायते नरः ॥२८२॥
भूग्वब्जयोरस्तगयोर्नरो भार्या सुतोऽपि वा । नृस्त्रियोस्तु शुभैर्दृष्टौ तौ द्वौ परिणताङ्गकौ ॥२८३॥
रवास्तांबुगैरिंदुशुक्रपापैर्वं शविनाशकः । शिल्पी त्र्येशे बुधयुते केन्द्रसंस्थार्किवीक्षिते ॥२८४॥
दास्यां जातः सौरिभागे रिःफगे भृगुनंदने । नीचेऽर्केन्दोरस्तगयोर्दृष्टयोः सूर्यजेन वा ॥२८५॥
पापदृष्टौ शनिकुजावस्तगौ वातरुक्प्रदौ । कर्काल्यंशगते केन्द्रे पापयुक्ते तु गुह्यरुक् ॥२८६॥
पापातरगतेंऽगेब्जे रवौ द्यूने तु कुष्ठयुक् । चन्द्रे खेऽस्तगते भौमे विकलो वेशिगेऽर्कजे ॥२८७॥
मिथो भांशगयोः शूली रवींद्वोर्युतयोः कृशः । निधनारिधनांत्यस्था रवींद्वारयमा यदा ॥२८८॥
चलद्ग्रहेण दोषेण कुर्वंत्यनयनं नरम् । सौम्या दृष्टा न वायत्रिधीगताः पापखेचराः ॥२८९॥
कर्णोपघातका द्यूने रदवैकृत्यकारकाः । लग्ने गुरौ द्युने मन्दे वातरोगादितो भवेत् ॥२९०॥
सुखेऽस्ते वा कुजे जीवे लग्ने वार्कियुतोदये । कुजेन वात्मजे द्यूने संज्ञेंऽत्येऽब्जे च सोन्मदः ॥२९१॥
धीधर्मार्थां त्यगैः पापैर्भसमस्यान्निबंधनम् । सर्पश्रृंखलया शाठ्यैर्दृक्कैर्बल्यशुभेक्षितैः ॥२९२॥
समन्देऽब्जे वक्रदृष्टे पस्मारी दुर्वचाः क्षयी । रविमन्दकुजैः खस्थैः सौम्यदृष्टैः समण्डलैः ॥१९३॥
भृतकाः पूर्वमुदितैर्वरमध्याधमा नराः । पुंजनौ तु फलं पण्यस्त्रीणां योग्यं वदेच्च तत् ॥२९४॥
तत्स्वामिष्वखिलं कार्यं तद्भर्तृमरणं मृतौ । लग्नेंदुगं वपुश्चैव यादयूपपीतद्युने ॥२९५॥
युग्मेषु लग्नशशिनो र्वनिता प्रकृतिस्थिता । सच्छीलभूषणयुता शुभसंदृष्टयोस्तयोः ॥२९६॥
पुरुषाकृति शीलाढ्या तयोरोजस्थयोर्मता । अथ पापा गुणोनाश्च पापवीक्षितयोस्तयोः ॥२९७॥
कुजार्कीज्यज्ञशुक्राणां कुजर्क्षे क्रमशोऽङ्गना । बाल्यदुष्टा तथा दासी साध्वी मायावती त्वरा ॥२९८॥
दुष्टा वाकृतिशीला स्यात्तयोरोजस्थयोर्मता । अथ पापा गुणोनाश्च पापवीक्षितयोस्तयोः ॥२९९॥
दुष्णवाक् पुनर्भूः सगुणा विज्ञा ख्याता स्फुजिद्गृहे । बौधे समा या क्लीवा च सती गुणवती चला ॥३००॥
द्वंद्वभे स्वैरिणीशघ्नी गुणाढ्या शिल्पिकाधमा । वाचाटा कुलटा सिंहे रागी पुंधीरगम्यता ॥३०१॥

जैवे गुणाढ्याऽल्परतिर्गुणज्ञा ज्ञानिनी सती । दासी नीचरता साध्वी मांदि दुष्टा नपत्यका ॥३०२॥
लग्नेंदुयुक्तैस्त्रिंशांशैः फलमेतद् बलानुगम् । दृग्गैः मिथोंशे शुक्रार्की शौक्रे चेद्वा घटांशके ॥३०३॥
स्त्रीभिः स्त्री मैथुनं याति मदनानलदीपिता । शून्ये कापुरुषो द्यूने बले क्लीवो न सदृशि ॥३०४॥
बुधाक्योंश्चरभे नित्यं परदेशपरायणः । तत्सृष्टा मदगे सूर्ये स्त्रीबालविधवा कुजे ॥३०५॥
पापदृष्टे शनौ द्यूने कन्यैवाप्यते जराम् । आग्नेयैर्विधवास्तस्थैः पुनर्भूमिश्रकैर्भवेत् ॥३०६॥
क्रूरे हीनबलेऽस्तस्थे पतित्यक्ता न सदृशि । मिथोंशगैः सितारौ तु कुरुतोऽन्यरतां स्त्रियम् ॥३०७॥
शीतरश्मिर्यदा द्यूने तदा भर्तुरनुसया । सौरारर्क्षे लग्नगते सेंदुशुक्रे तु वंधकी ॥३०८॥
मात्रा सार्द्धमसद्दृष्टे तथा कौजेंशकेऽस्तगे । मन्ददृष्टे व्याधियोनिः सद्ग्रहांशे पतिप्रिया ॥३०९॥
मन्दर्क्षे वांशके द्यूने वृद्धो मूर्खः पतिः स्त्रियाः । स्त्रीलोलः व्र ोधनः कौजे बौधे विद्वांश्च नैपुणः ॥३१०॥
जितेन्द्रियो गृणीजैवे चांद्रे कामी मृदुस्तथा । शौक्रे सौभाग्ययुक्कांतः सौरेति मृदुकर्मकृत् ॥३११॥
शुक्राब्जयोर्लग्नगयोः सुखिनीर्ष्यासमन्विता । ज्ञेंद्वोः कलासु निपुणा सुखिता च गुणान्विता ॥३१२॥
शुक्रज्ञयोस्तु शुभगा कलाज्ञा रुचिराङ्गना । अनेकसौख्यार्थगुणालग्ने सौम्यत्रये स्थिते ॥३१३॥
क्रूरेऽष्टमेऽष्टमेशांशे यस्य स्यात्तद्वयः समे । वैधव्यं च मृतिस्तस्या स्वयंसत्स्वर्थगेषु तु ॥३१४॥
अल्पाप्तयत्वमब्जेऽस्याः कन्यालिहरिगोषु तु । सौरे मध्यबले चन्द्रशुक्रज्ञैर्बलवर्जितैः ॥३१५॥
शेषैः सवीर्यैरोजर्क्षे लग्ने कुरूपिणी भवेत् । जीवारकविसौम्येषु बलिषु समभे तनौ ॥३१६॥
विख्यातानैकशास्त्रज्ञा वनिता ब्रह्मवादिनी । पापे ऽस्ते नवमस्थस्य प्रव्रज्यामेति भामिनी ॥३१७॥
उद्वाहे वरणे प्रश्ने सर्वमेतद्विचिन्तयेत् । मृत्युस्थानं पश्यतां स्याद्बलिना धातुको पतः ॥३१८॥
नृणां मृत्युहितं युक्तं भगात्रोस्थोपथभूरिभिः । सवीर्यैर्बहुजोऽग्न्यक्षतज्वररुगुद्भवः ॥३१९॥
तृट्क्षुद्भवश्चाष्टमस्थैः सूर्याद्यैश्च वरादिषु । परस्वाध्वप्रदेशेषु मृत्युः सूर्यमहीजयोः ॥३२०॥
स्वबंधुस्थितयोः पुंसः शैलाग्राभिरुतस्य च । बंध्वस्तकर्मगैर्मंदभूजैः प्रहौ मृतिः ॥२२१॥
स्त्रियां हिमोष्णकरयोः स्वजनात्पापदृक्तयोः । तोयमृतो रवीदृतुस्यातांया द्युभयोदये ॥३२२॥
शस्त्राग्निजोशुभांतस्थे चन्द्रे भौमगृहगस्थिते । मृत्युश्चाथ मृगे चन्द्रे कर्के मन्दे जलोदरात् ॥३२३॥
स्त्रियामिन्दौ रक्तशौथात्सौरे वाज्वग्निपातजः । पुत्रधर्मस्थस्योर्वंधात्पापयोः सददृष्ट्योः ॥३२४॥
सयासशंयनिगडैर्दृकैर्मृत्यौ तु बंधनैः । स्त्रियां सपापे ऽब्जे द्यूने सिते मेषे रवौ तनौ ॥३२५॥
मरणं स्त्रीकृते गेहे ह्यथ तुर्ये कुजे रवौ । यमे खेंऽगत्रिकोणस्थैः क्षीणचन्द्रांशुभैः सकृत् ॥३२६॥
तुर्येऽर्के खे कुजेक्षीणे चन्द्रदृष्टे समिद्धतः । रं ध्रखाङ्गजलैः क्षीणेंद्वारार्किरविसंयुतैः ॥३२७॥
लकुटेनाथ तैरेव खांकाङ्गतनयस्थितैः । धूमानिबंधनैः कार्यः कुदनैर्मरणं भवेत् ॥३२८॥
बंध्वस्तखस्थैर्भौमार्कमंदैः शस्त्राग्निराजभिः । सौरेंद्वारैः स्वांबुखस्थैः क्षतुक्रेम्यंगया ततः ॥३२९॥
स्वेऽर्के तुर्ये कुजे यानपातादथ कुजेऽस्तगे । यंत्रोसीदुनतः क्षीणचन्द्रयुक्ते मृतिर्भवेत् ॥३३०॥
भौमार्किशीतकिरणैर्जूकाजशनिभस्थितैः । क्षीणेंऽर्ककुजैः खास्तांबुस्थैर्वारकरे मृतिः ॥३३१॥
बल्यारदृष्टे क्षीणेन्दौ मन्दे निधनसंस्थिते । गुह्यरुक्कृमिशस्त्राग्निदारुजो मृत्युरंगिराः ॥३३२॥
सौरेऽर्केऽस्ते मृतो मन्दे क्षीणेंदौ भुव्यसंयुते । लग्नध्यायास्तपः खार्कभौमचन्द्रनिशाकरैः ॥३३३॥
शैलश्रृंगस्वरुग्रपातौनुर्निधनं भवेत् । दृक्कोंत्तरे तुर्द्वाविंशस्तत्पतिर्मृत्युपोपि वा ॥३३४॥
स्वगुणैर्निधनं कुर्याद्बलवान्यो द्वयोर्भवेत् । लग्नांशेशसदृक्स्थाने मृत्युर्योगेक्षणादिभिः ॥३३५॥
मोदोंतेनुदितांशस्य तुल्यो द्विघ्नः स्वपेक्षिते । शुभेक्षिते तु त्रिगुणः कल्प्यमन्यत्स्वबुद्धितः ॥३३६॥
वह्न्यंबुभस्मसक्लेदशोषव्यालैर्मृतिस्थितैः । बिंदुतश्चिंतनीयश्च यथोक्तो मत्युरंगिनः ॥३३७॥
गुरुः शशांकशुक्रौ च सूर्यभौमौ यमेंदुजौ । देवपित्रतिरक्तोथ नारकान्कुर्युरष्टमे ॥३३८॥
रवींदुबलवश्रंशनाथाच्छ्रेष्टसमाधमाः । तुंगगः सांदनूकेनुगतिः षड्भ्रद्दृक्कपः ॥३३९॥
द्यूनस्थितो गुरुर्वापि रिपुकेन्द्रविनाशगः । स्वोच्चस्थोंऽगे व्यये सौम्यभागे मोक्षो बलान्यतः ॥३४०॥
आधाने जन्मा ज्ञाने तु वृक्षतां लग्नतो वदेत् । पूर्वापरार्द्धैर्लग्नस्य सौम्ये वाच्यपनेजनिः ॥३४१॥

लग्नत्रिकोणे धीज्यत्यंशैर्विकल्पावयवाः समाः । ग्रीष्मोगेऽर्के परे रम्यापनतांपृतुरर्कभात् ॥३४२॥
चन्द्रज्ञजीवावृत्यस्याः शुक्रारार्किभिरन्यथा । दृक्कैराद्यैः पूर्वमासस्तिथिस्तत्रानुपातत: ॥३४३॥
विलोमजन्म भागैश्च वेला रात्रिद्युसंज्ञके । त्रिकोणोत्तमवार्थं हि लग्नं वा लभनाभने ॥३४४॥
यावदूनो विधुर्लग्नात्तावचंद्राच्च जन्मभे । गोहरी युग्मवसुभे क्रियजुके मृगाङ्गने ॥३४५॥
दशाष्टसप्तविषये गुण्याः शेषाः खसंख्यया । जीवभौमकविज्ञाः स्यु राघवाद्यायरेज्ञवत् ॥३४६॥
भानां नित्यो विधिः खेटवशावद्वर्गणास्तथा । सप्तघ्नं भहृतं शेषमृक्षं नवघनर्णतः ॥३४७॥
द्विघ्ने समर्तुमासाः स्युः पक्षतिथ्यौ गजाहते । सप्तघ्नं होनिशार्क्षाणीषुघ्नेंगांशेष्टहोरिका ॥३४८॥
पुमान्परशुधृक्कृष्णो रक्तदृग्रक्षितुं क्षमः । हृष्टर्तिकपदाश्वास्या रक्तवस्त्रा घटाकृतिः ॥३४९॥
कपिलो ह्यंधदृक्रूरो रक्तवस्त्रः क्षतव्रतः । क्षुत्तृषार्तोदुग्धपटो लूनकुंचितमूर्धजः ॥३५०॥
मलिनः क्षुत्परोजास्यो दक्षः कृष्यादिकर्मणि । द्विपकायः सरभयात्पिंगलो व्याकुलांतरः ॥३५१॥
शौचिकीरूपिणी साध्वी ह्यप्रजोच्छितपाणिका । उद्याने कवची धन्वी क्रीडेच्छर्गरुडाननः ॥३५२॥
नृत्यादिविद्वरुणवद्बहुरत्नोधनुर्धरः । द्विपास्यकंठः क्रो डास्यः काननेशरमाहिकः ॥३५३॥
आतव्यशाखां पालाशी रौति मूर्द्धाहिकर्कशा । चिपिटास्यो हि संवीतो नौस्थः स्त्र्यर्थं व्रजञ्जले ॥३५४॥
श्वा नरो जंबुकं गृध्रं गृहीत्वा रौति शाल्मलौ । धन्वी कृष्णाजिनी सिंहवाश्वोन्नतमातुरः ॥३५५॥
फलामिषघ्नः कूर्चीना भल्लास्यः कपिचेष्टितः । पुष्पपू र्णच्छटाकन्याविद्येल्ला मलिनांवरा ॥३५६॥
धन्वी व्ययापकृच्छ्यामो लिपिकृद्रामशोनरः । गौरीधौतांशुकात्सुचाकुंभद्रस्तासुरालये ॥३५७॥
मानोन्मान्पापसोतौलीभांडमुत्पविचिन्तकः । क्षुत्तृड्युतो नरः कुंभीगृध्नस्य स्त्रीसुतोपगः ॥३५८॥
धन्वीकिंतरचेष्टस्तुहैमवर्मामृगानुगः । सिंधे कूजंव्रजंतीस्त्रीनानासर्पसित हिका ॥३५९॥
सौख्यस्पृहाह्यावृत्ताङ्गीभत्रर्थकच्छपाकृतिः । कूर्मास्यो मलये सिंहः श्वक्रोंडमृगभीषकः ॥३६०॥
वास्यः श्वकायो धानुष्को रंक्षस्तापसयज्ञिये । चंपकाभासने मध्या सिंधुरत्नविवर्द्धिनी ॥३६१॥
कूर्चासने चंपकाभो दण्डी कौशेयकानिनी । परमोऽथो गृ ध्रमुखः स्नेहमद्याशनस्पृहः ॥३६२॥
दग्धानस्था लोहधरा सभूषाभाञ्जकचरा । भांडी रोमश्रवाः श्यामः किरीटी फलयंत्रधृक् ॥३६३॥
नौस्थोध्वोसंविभूषांर्थं नानारत्नकरोंचितः । नौस्थाब्धेः कूलमायांती सयूथां चम्पकानना ॥३६४॥
गर्ते सर्पावृतो नग्नो रुदंश्चौरानलार्दितः । एतादृशांक्रियांशाः स्तु षट् त्रिंशदुदीताः क्रमात् ॥३६५॥
एतत्संक्षेपतः प्रोक्तं जातकं मुनिसत्तम । निबोध संहितास्कंधं लोककृत्युपयोगिनम् ॥३६६॥

इति श्रीनारदीयपुराणे पूर्वभागे द्वितीयपादे बृहदुपाख्याने जातकनिरूपणन्नाम पञ्चपञ्चाशत्तमोऽध्यायः ॥५५॥

आदितः श्लोकानां समष्ट्यङ्काः-५,११६+३६६=५,४८२



## ॥ अथ षट्पञ्चाशत्तमोऽध्यायः ॥

सनन्दन उवाच ॥

क्रमाच्चैत्रादिमासेषु मेषाद्याः संक्रमा मताः । चैत्रशुक्लप्रतिपदि यो वारः स नृपः स्मृतः ॥१॥
मेषप्रवेशे सेनानीः कर्कटे सस्ययो भवेत् । समोद्यधीश्वरः सूर्यो मध्यमश्चोत्तमो विधुः ॥२॥
नेष्टः कुजो बुधो जीवो भृगुस्त्वतिशुभङ्करः । अधमो रविजो वाच्यो ज्ञात्वा चैषां बलाबलम् ॥३॥
दण्डाकारे कबंधे वा ध्वांक्षाकारेऽथ कीलके । दृष्टेऽर्कमण्डले व्याधिर्भ्रान्तिश्चोरार्थनाशनम् ॥४॥
छत्रध्वजपताकाद्यसन्निभस्तिमितैर्ध्व नैः । रविमण्डलगैर्धूम्रैः सस्फुलिंगैर्जगत्क्षयः ॥५॥
सितरक्तैः पीतकृष्णैर्व र्णैर्विप्रादिपीडनम् । घ्नंति द्वित्रिचतुर्वर्णैर्भुवि राजजनान्मुने ॥६॥
ऊर्द्ध्वैर्भानुकरैस्ताम्रैर्नाशं याति चमूपतिः । पीतैर्नृपसुतः श्वतैः पुरोधाश्चित्रितैर्जनाः ॥७॥
धूम्रैर्नृपपिशंगैस्तु जलदाधोमुखैर्जगत् । शुभोऽर्कः शिशिरे ताम्रः कुंकुमाभा वसन्तिके ॥८॥
ग्रीष्मश्चापांडुरश्चैव विचित्रो जलदागमे । पद्मोदराभः शरदि हेमंते लोहितच्छविः ॥९॥

पीतः शीते वृष्टौ ग्रीष्मे लोहितभा रविः । रोगानावृष्टिभयकृत् क्रमादुक्तो मुनीश्वर ॥१०॥
इन्द्रचापार्द्धमूर्तिस्तु भानुर्भूपविरोधकृत् । शशरक्तनिभे भानौ संग्रामो न चिराद्भुवि ॥११॥
मयूरपत्र सङ्काशो द्वादशाब्दं न वर्षति । चन्द्रमासदृशो भानुः कुर्याद्भूपांतरं क्षितौ ॥१२॥
अर्के श्यामे कीटभयं भस्माभे राष्ट्रजं तथा । छिद्रे ऽर्कमण्डले दृष्टं महाराजविनाशनम् ॥१३॥
घटाकृतिः क्षुद्भयकृत्पुरहा तोरणाकृतिः । छत्राकृते देशहतिः खं डभानुनृपांतकृत् ॥१४॥
उदयास्तमये काले विद्युदुल्काशनिर्यदि । तदा नृपवधो ज्ञेयस्त्वथवा राजविग्रहः ॥१५॥
पक्षं पक्षार्द्धमर्केन्दु परिविष्टावहर्निशम् । राजानमन्यं कुरुतो लोहिताम्बुदयास्तगौ ॥१६॥
उदयास्तमये भानुराच्छिन्नः शस्त्रसन्निभैः । घनैर्युद्धं खरोष्ट्राद्यैः पापरूपैर्भयप्रदम् ॥१७॥
याम्यश्रृङ्गोन्नत्तश्चन्द्रः शुभदी मीनमेषयोः । सौम्यश्रृङ्गोन्नतः श्रेष्ठो नृयुङ्मकरयोस्तथा ॥१८॥
घटोक्ष्णस्तु समः कर्कचापयोः शरसन्निभः । चापवत्कौर्महर्योश्च शूलबत्तुलकर्कयोः ॥१९॥
विपरीतोदितश्चन्द्रो दुर्भिक्षकलहप्रदः । आषाढद्वयमूलेन्द्रधिष्ण्यानां याम्यगः शशी ॥२०॥
अग्निप्रदस्तेयचरवनसर्पविनाशकृत् । विशाखा मित्रयोर्याम्यपार्श्वगः पापगः शशी ॥२१॥
मध्यमः पितृदैवत्ये द्विदैवे सैम्यगः शशी । अप्राप्यपौष्णभाद्रौद्रामदुक्षाविशशी शुभः ॥२२॥
मध्यगो द्वारदक्षाणि अतीत्य नववासवात् । यमेंद्राहीशनोयेशमरुतश्चार्द्धतारकाः ॥२३॥
ध्रुवादितिद्विदैवाः स्युरध्यर्द्धाश्चापराः समाः । याम्यश्रृंगोन्नतो नेष्टः शुभः शुक्ले पिपीलिका ॥२४॥
कार्यहानिः कार्यवृद्धिर्हानिर्वृद्धिर्यथाक्रमम् । सुभिक्षकृद्विशालेंदुरविशालोघनाशनः ॥२५॥
अधोमुखे शस्त्रभयंकलहोदण्डसन्निभे । कुजाद्यैर्निहते श्रृंगे मण्डले वा यथाक्रमम् ॥२६॥
क्षेमाद्यं वृष्टिभूपालजननाशः प्रजायते । सत्याष्टनवमर्क्षेषु सोदयाद्वक्रिमे कुजे ॥२७॥
तद्वक्रमुष्णं संज्ञं स्यात्प्रजापीडाग्निसंभवः । दशमैकादशे ऋक्षे द्वादशर्वाग्रतीपयः ॥२८॥
क्रूकं वक्रमुखं ज्ञेयं सस्यवृष्टिविनाशकृत् । कुजे त्रयोदशे ऋक्षे वक्रिते वा चतुर्दशे ॥२९॥
बालास्यचक्रं तत्तस्मिन्सस्यवृष्टिविनाशनम् । पञ्चदशे षोडशर्क्षे वक्रे स्यादुधिराननम् ॥३०॥
दुर्भिक्षं क्षुद्भयं रोगान्करोति क्षितिनंदनः । अष्टादशे सप्तदशे तद्वक्रं मुशलाह्वयम् ॥३१॥
दुर्भिक्षं धनधान्यादिनाशने भयकृत्सदा । फाल्गुन्योरुदितो भौमो वैश्वदेवे प्रतीपगः ॥३२॥
अस्तगश्चतुरास्यार्क्षे लोकत्रयविनाशकृत् । उदितः श्रवणे पुष्ये वक्तृगोश्चनहानिदः ॥३३॥
यद्दिग्गोऽभ्युदितो भौमस्तद्दिग्भूपभयप्रदः । मधामध्यगतो भौमस्तत्र चैव प्रतीपगः ॥३४॥
अवृष्टिशस्त्रभयदः पीड्यं देवा नृपांतकृत् । पितृद्विदैवधातृणां भिद्यन्ते गंडतारकाः ॥३५॥
दुर्भिक्षं मरणं रोगं करोति क्षितिजस्तदा । त्रिषूत्तरासु रोहिण्यां नैर्ऋते श्रवणे मृगे ॥३६॥
अवृष्टिदश्चरन्भौमो दक्षिणेरोहिणीस्थितः । भूमिजः सर्वधिष्ण्यानामुदगामी शुभप्रदः ॥३७॥
याम्यगोऽनिष्टफलदो भवेद्भेदकरो नृणाम् । विनोत्पातेन शशिनः कदाचिन्नोदयं व्रजेत् ॥३८॥
अनावृष्टाग्निभयकृदनर्थनृपविग्रहः । वसुवैष्णवविश्वेन्दुधातृभेषु चरन्बुधः ॥३९॥
भिनत्ति यदि तत्तारां बाधावृष्टिभयंकरः । आर्द्रादिपितृभांतेषु दृश्यते यदि चन्द्रजः ॥४०॥
तदा दुर्भिक्षकलहरोगानावृष्टिभीतिकृत् । हस्तादिषट्सु तारासु विचरन्निन्दुनंदनः ॥४१॥
क्षेमं सुभिक्षमारोग्यं कुरुते रोगनाशनम् । अहिर्बुध्न्यार्यमाग्नेययाम्यभेषु चरन्बुधः ॥४२॥
भिषक्ररंगवाणिज्यवृत्तीनां नाशकृत्तदा । पूर्वात्रयेचरन्सौम्यो योगतारां भिनत्ति चेत् ॥४३॥
क्षुच्छस्त्रानलचौरेभ्यो भयदः प्राणिनां तदा । याम्याग्निधातृवायव्यधिष्ण्येषु प्राकृता गतिः ॥४४॥
रौद्रेन्दुसार्पपित्र्येषु ज्ञेया मिश्राह्वया गतिः । भाग्यार्यमेज्यादितिषु संक्षिप्ता गतिरुच्यते ॥४५॥
गतितीक्ष्णाजचरणाहिर्बुध्न्यभाश्विभेषुया । योमातिकातिविश्वांबुमूलमत्स्यैन्यजस्य च ॥४६॥
घोरा गतिर्हरित्वाष्ट्रवसुवारुणभेषु च । इंद्राग्निमित्रमार्तंडभेषु पापाह्वयागतिः ॥४७॥
प्राकृताद्यासु गतिषु ह्युदितोऽस्तमितोपिवा । यावंत्येव दिनान्येष दृश्यस्तावत्यदृश्यगः ॥४८॥

चत्वारिंशत्क्रमात्रिंशद्वींदू भूसुतो नव । पञ्चदशैकादशभिर्दिवसैः शशिनंदनः ॥४९॥
प्राकृतायां गतः सौम्यः क्षेमारोग्यसुभिक्षकृत् । मिश्रसंक्षिप्तयोर्मध्ये फलदोऽन्यासु वृष्टिदः ॥५०॥
वैशाखे श्रावणे पौषे आषाढेऽभ्युदितो बुधः । जगतां पापफलदस्त्वितरेषु शुभप्रदः ॥५१॥
इषोर्जमासयोः शस्त्रदुर्भिक्षाग्निभयप्रदः । उदितश्चंद्रजः श्रेष्ठो रजतस्फटिकोपमः ॥५२॥
द्विभाटजोदिमास्तस्य पञ्चमैकादशास्त्रिभात् । यन्नक्षत्रोदितो जीवस्तन्नक्षत्राख्यवत्सरः ॥५३॥
कार्तिको मार्गशीर्षश्च नृणां दुष्टफलप्रदः । शुभप्रदौ पौषमाघौ मध्यमौ फाल्गुनो मधुः ॥५४॥
माधवः शुभदो ज्येष्ठो नृणां मध्यफलप्रदः । शुचिर्मध्यो नभः श्रे ष्ठो भाद्रः श्रेष्ठः क्वचिन्नर ॥५५॥
अतिश्रेष्ठ इषः प्रोक्तो मासानां फलमीदृशम् । सौम्ये भागे चरन्भानां क्षेमारोग्यसुभिक्षकृत् ॥५६॥
विपरीतो गुरुर्याम्ये मध्ये चरति मध्यमम् । पीताग्निश्यामहरितरक्तवर्णेगिराः क्रमात् ॥५७॥
व्याध्यग्निचौरशस्त्रास्त्रभयदः प्राणिनां भवेत् । अनावृष्टिं भूम्ननिभः करोति सुरपूजितः ॥५८॥
दिवादृष्टो नृपवध्यामयंवाराष्ट्रनाशनम् । संवत्सरशरीरं स्यात्कृत्तिका रोहिणी तथा ॥५९॥
नाभिस्त्वापाठयुगलमादी हृत्कुसुमं मघा । दुर्भिक्षाग्निमरुद्भीतिः शरीरं क्रूरपीडिते ॥६०॥
नाभ्यां क्षुत्तृड्भयं पुष्ये सम्यङ्मूलफलक्षयः । हृदयेशस्य निधनं शुभं स्यात्संयुतैः शुभैः ॥६१॥
शस्यवृद्धिः प्रजारोग्यं युद्धं जीवात्यवर्ष णम् । इति द्विजातिमध्यां तु गोनृपस्त्रीसुखं महत् ॥६२॥
निःस्वनावृष्टिफणिभिर्वृष्टिः स्वास्थ्यं महोत्सवः । महार्घमपि संपत्तिर्देशनाशोऽतिवर्ष णम् ॥६३॥
अवैरं रोगमभयं रोगभीः सस्यवर्षणे । रोगो धान्यं नभोऽदृष्टिमघाद्यृक्षगते गुरौ ॥६४॥
सौम्यमध्यमयाम्येषु मार्गेषु वीथिकात्रयम् । शुक्र स्य दस्त्रभाज्ज्ञेयं पर्यायैश्च त्रिभिस्त्रिभिः ॥६५॥
नागेभैरावताश्चैव वृषभोष्ट्रखराह्वयाः । मृगाञ्जदहनाख्याः स्युर्याम्यांता वीथयो नव ॥६६॥
सौम्यमार्गे च तिसृषु चरन्वीथिषु भार्गवः । धान्यार्थवृष्टिसस्यानां परिपूर्तिं करोति हि ॥६७॥
मध्यमार्गे च तिसृषु सर्वमप्यधमं फलम् । पूर्वस्यां दिशि मेघस्तु शुभदः पितृपञ्चके ॥६८॥
स्वातित्रये पश्चिमायां तस्यां शु क्रस्तथाविधः । विपरीते त्वनावृष्टिकृद्बुधसंयुतः ॥६९॥
कृष्णाष्टम्यां चतुर्दश्याममायां च यदा सितः । उदयास्तमनं याति तदा जलमयी मही ॥७०॥
मिथः सप्तमराशिस्थौ पश्चात्प्राग्वीथिसंस्थितौ । गुरुशुक्र ावनावृष्टिदुर्भिक्षसमरप्रदौ ॥७१॥
कुजज्ञजीवरविजाः शु क्रस्याग्रेसरा यदि । युद्धातिवायुर्दुर्भिक्षजलनाशकरामताः ॥७२॥
जलमित्रार्यमाहींद्रनक्षत्रेषु सुभिक्षकृत् । सच्छस्त्रावृष्टिदो मूलेऽहिर्बुध्न्यंत्यभयोर्भयम् ॥७३॥
श्रवणानिलहस्तार्द्राभरणीभाग्यभेषु च । चरञ्छनैश्चरो नृणां सु भिक्षारोग्यस्यकृत् ॥७४॥
मुखे चैकं गुदे द्वे च त्रीणि के नयने द्वयम् । हृदये पञ्च ऋक्षाणि वामहस्ते चतुष्टयम् ॥७५॥
वामपादे तथा त्रीणि दक्षिणे त्रीणे भानि च । चत्वारि दक्षिणे हस्ते जन्मभाद्रविजस्थितिः ॥७६॥
रोगो लाभस्तथा हानिर्लाभः सौख्यं च बंधनम् । आयासः श्रे ष्ठयात्रा च धनलाभः क्रमात्फलम् ॥७७॥
बहुधारविजस्त्वेतद्वक्रगः फलमीदृशम् । करोत्येव समः साम्यं शीघ्रगेषूत्क्रमात्फलम् ॥७८॥
विष्णुचक्रोत्कृत्तशिराः पङ्गुः पीयूषपानतः । अमृत्युतां गतस्तत्र खेटत्वे परिकल्पितः ॥७९॥
वरणधातुरर्केन्दू तुदतेः सर्वपर्वणि । विक्षेपावनतेर्वै गाद्राहुर्दूरगतस्तयोः ॥८०॥
षण्मासवृद्ध्या ग्रहणं शोधयेद्रविचन्द्रयोः । पर्वेशास्तु तथा सत्यदेवा रव्यादितः क्रमात् ॥८१॥
ब्रह्मेनिंद्वद्रधनाधीश्वरुणाग्नियमाह्वयाः । पशुसस्यद्विजातीनां वृद्धिर्ब्राह्मे तु पर्वणि ॥८२॥
तद्वदेव फलं सौम्ये श्लेष्मपीडा च पर्वणि । विरोधो भूभुजां दुःखमैन्द्रे सस्यविनाशनम् ॥८३॥
धनिनां धनहानिः स्यात्कौबेरं धान्यवर्धनम् । नृपाणामशिवं क्षेममितरेषां च वारुणे ॥८४॥
प्रवर्षणं सस्यवृद्धिः क्षेमं हौताशपर्वणि । अनावृष्टिः सस्यहानिर्दुर्भिक्षं याम्यपर्वणि ॥८५॥
वेलाहीने सस्यहानिर्नृपाणां दारुणं रणम् । अतिवेले पुष्पहानिर्भयं सस्यविनाशनम् ॥८६॥
एकस्मिन्नेव मासे तु चन्द्रार्कग्रहणं यदा । विरोधो धरणीशानामर्थवृष्टिविनाशनम् ॥८७॥
ग्रस्तोदितावस्तमितौ नृपधान्यविनाशदौ । सर्वग्रस्ताविनेंदू तु क्षुद्व्याध्यग्निभयप्रदौ ॥८८॥

सौम्यायने क्षत्रविप्रानितरां हन्ति दक्षिणे । द्विजातींश्चक्रमाद्धंति राहुदृष्टेरगादितः ॥८९॥
तथैव ग्रामभेदाः स्युर्मोक्षभेदास्तथा दश । नो शक्ता लक्षितुं देवाः किं पुनः प्राकृता जनाः ॥९०॥
आनीय खेटान्गणितांस्तेषां वारं विचिन्तयेत् । शुभाशुभान्यैः कालस्य ग्राहयामो हि लक्षणम् ॥९१॥
तस्मादन्वेषणीयं तत्कालज्ञानाय धीमता । उत्पातरूपाः केतूनामुदयास्तमया नृणाम् ॥९२॥
दिव्यांतरिक्षा भौमास्ते शुभाशुभफलप्रदाः । यज्ञध्वजास्त्रभवनरक्षवृद्धिंगजोपमाः ॥९३॥
स्तम्भशूलांकुशाकारा आंतरिक्षाः प्रकीर्तिताः । नक्षत्रसंस्थिता दिव्या भौमा ये भूमिसंस्थिताः ॥९४॥
एकोऽपि भिन्नरूपः स्याज्जंतुर्नाम शुभाय वै । यावन्तो दिवसान्केतुर्दृश्यते विविधात्मकः ॥९५॥
तावन्मासैः फलं यच्छत्यष्टौ सारव्यवत्सरैः । ये दिव्याः केतवस्तेऽपि शश्वज्जीवफलप्रदाः ॥९६॥
ह्रस्वः स्निग्धः सुप्रसन्नः श्वेतकेतुः सुवृष्टिकृत् । क्षिप्रादस्तमयं याति दीर्घकेतुरवृष्टिकृत् ॥९७॥
अनिष्टदो धूमकेतुः शक्रचापसमप्रभः । द्वित्रिचतुः शूलरूपः स च राज्यांतकृन्मतः ॥९८॥
मणिहारस्तु वर्णाभा दीप्तिमंतोऽर्कसूनवः । केतवश्चोदिताः पूर्वापरयोर्नृपहानिदाः ॥९९॥
वंसुकबिंबक्षितिजच्छुकतुंडादिसन्निभाः । हुताशनोदितास्तेऽपि केतवः फलदाः स्मृताः ॥१००॥
भूसुता जलतैलाभा वर्तुलाः क्षुद्भयप्रदाः । सुभिक्षक्षेमदाः श्वेतकेतवः सोमसूनवः ॥१०१॥
पितामहात्मजः केतुस्त्रिवर्णस्त्रिदशान्वितः । ब्रह्मदण्डाद्धूमकेतुः प्रजानामंतकृन्मतः ॥१०२॥
एशान्यां भार्गवसुताः श्वेतरूपास्त्वनिष्टदाः । अनिष्टदाः पंगुसुता विशिखाः कमकाह्वयाः ॥१०३॥
विकचाख्या गुरुसुता वेष्टा याम्ये स्थिता अपि । सूक्ष्माः शुक्ला बुधसुताश्चौररोगभयप्रदाः ॥१०४॥
कुजात्मजाः कुंकुमाख्या रक्ताः शूलास्त्वनिष्टदाः । अग्निजा विश्वरूपाख्या अग्निवर्णाः सुखप्रदाः ॥१०५॥
अरुणाः श्यामलाकारा अर्कपुत्राश्च पापदाः । शुक्रजा ऋक्षसदृशाः के तवः शुभदायकाः ॥१०६॥
कृत्तिकासु भवो धूमकेतुर्नूनं प्रजाक्षयः । प्रासादवृक्षशैलेषु जातो राज्ञां विनाशकृत् ॥१०७॥
सुभिक्षकृत्कौमुदाख्यः केतुः कुमुदसन्निभः । आवर्तकेतुसंध्यायां शशिरो नेष्टदायकः ॥१०८॥
ब्रह्मदेवमनोर्मान पित्र्यं सौरं च सावनम् । चांद्रमार्क्षं गुरोर्मानमिति मानानि वै नवः ॥१०९॥
एतेषां नवमानानां व्यवहारोऽत्र पञ्चभिः । तेषां पृथक्पृथक्कार्यं वक्ष्यते व्यवहारतः ॥११०॥
ग्रहाणां निखिलश्चारो गृह्यते सौरमानतः । वृष्टेर्विधानं स्त्रीगर्भः सावनेनैव गृह्यते ॥१११॥
प्रवर्षणां समे गर्भो नाक्षत्रेण प्रगृह्यते । यात्रोद्वाहव्रतक्षौरे तिथिवर्षेशनिर्णयः ॥११२॥
पर्ववास्तूपवासादि कृत्स्नं चांद्रेण गृह्यते । गृह्यते गुरुमानेन प्रभवाद्यब्दलक्षणम् ॥११३॥
तत्तन्मासैर्द्वादशभिस्तत्तदष्टौ भवेत्ततः । गुरुमध्यमचारेणषष्ठ्यब्दाः प्रभावादयः ॥११४॥
प्रभवो विभवः शुक्लः प्रमोदोऽथ प्रजापतिः । अंगिराः श्रीमुखो भावो युवा धाता तथैव च ॥११५॥
ईश्वरो बहुधान्यश्च प्रमाथी विक्रमो वृषः । चित्रभानुस्सुभानुश्च तारणः पार्थिवोऽव्ययः ॥११६॥
सर्वजित्सर्वधारी च विरोधी विकृतः खरः । नंदनो विजयश्चैव जयो मन्मथदुर्मुखौ ॥११७॥
हेमलंबो विलंबश्च विकारी शार्वरी लवः । शुभकृच्छोभनः क्रोधी विश्वावसुपराभवौ ॥११८॥
प्लवंगः कीलकः सौम्यः सामाप्तश्च विरोधकृत् । परिभावी प्रमादी च आनन्दो राक्षसोऽनलः ॥११९॥
पिङ्गलः कालयुक्तश्च सिद्धार्थो रौद्रदुर्मतीः । दुंदुभीरुधिरोद्गारी रक्ताक्षः क्रोधनः क्षयः ॥१२०॥
नामतुल्यफलाः सर्वे विज्ञेयाः षष्टिवत्सराः । युगं स्यात्पञ्चभिर्वर्षैर्युगान्येवं तु द्वादश ॥१२१॥
तेषामीशाः क्रमाज्ज्ञेया विष्णुर्देवपुरोहितः । पुरंदरो लोहितश्च त्वष्टाहिर्बुध्न्यसंज्ञकः ॥१२२॥
पितरश्च ततो विश्वे शशींद्राग्न्यशिनो भगः । तथा युगस्य वर्षे शास्त्वग्निनेंदुविधीश्वराः ॥१२३॥
अथाद्वेश्चमूनाथसस्यपानां बलाबलम् । तत्कालं ग्रहचारं च सम्यक् ज्ञात्वा फलं वदेत् ॥१२४॥
सौम्यायनं मासषट्कं मृगाद्यं भानुभुक्तितः । अहः सुराणां तद्रात्रिः कर्काद्यं दक्षिणायनम् ॥१२५॥
गृहप्रवेशवैवाहप्रतिष्ठामौंजिबंधनम् । मघादौ मंगलं कर्म विधेयं चोत्तरायणे ॥१२६॥
याम्यायने गर्हितं च कर्म यत्नात्प्रशस्यते । माघादिमासौ द्वौ द्वौ च ऋतवः शिशिरादयः ॥१२७॥
मृगाच्छिशिरवसंतश्च ग्रीष्माः स्युश्चोत्तरायणे । वर्षा शरच्च हेमंतः कर्काद्वे दक्षिणायने ॥१२८॥

चांद्रो दर्शावधिः सौरः संक्रान्त्या सावनो दिनैः । त्रिंशद्भिश्चन्द्रभगणो मासो नाक्षत्रसंज्ञकः ॥१२९॥
मधुश्च माधवः शुक्रः शुचिश्चाथ नभस्ततः । नभस्य इष ऊर्जश्च सहाश्चैव सहस्यकः ॥१३०॥
तपास्तपस्य क्रमशश्चैत्रादीनां समाह्वया । यस्मिन्मासे पौर्णमासी येन धिष्ण्येन संयुता ॥१३१॥
तन्नक्षत्राह्वयो मासः पौर्णमासी तदाह्वया । तत्पक्षौ दैव पित्राख्यौ शुक्लकृष्णौ तथापरे ॥१३२॥
शुभाशुभे कर्मणि च प्रशस्तौ भवतः सदा । क्रमात्तिथीनां ब्रह्माग्नी विरिंचिविष्णुशैलजाः ॥१३३॥
विनायकयमौ नागचन्द्रौ स्कंदोऽर्कवासवौ । महेन्द्रवासवौ नागदुर्गादण्डधराह्वयः ॥१३४॥
शिवविष्णू हरिरवीकामः सर्वः कलीततः । चन्द्रविश्वेदर्शसंज्ञातिथीशाः पितरः स्मृताः ॥१३५॥
नंदाभद्राजयारिक्ता पूर्णाः स्युस्तिथयः पुनः। त्रिरावृत्त्या क्रमाज्ज्ञेया नेष्टमध्येष्टदाः सिते ॥१३६॥
कृष्णपक्षे त्विष्टमध्यानिष्टदाः क्रमशस्तदा । अष्टमी द्वादशी षष्ठी चतुर्थी च चतुर्दशी ॥१३७॥
तिथयः पक्षरंध्राख्या ह्यतिरूक्षा प्रकीर्तिताः । समुद्रमनुरं ध्रांकतत्त्वसंख्यास्तु नाडिकाः ॥१३८॥
त्याज्याः स्युस्तासु तिथिषु क्रमात्पञ्च च सर्वदा । अमावास्या च नवमी हित्वा विषमसंज्ञिका ॥१३९॥
तिथयस्तुप्रशस्तास्युर्मध्यमा प्रतिपत्सिता । षष्ठ्यां तैलं तथाष्टम्यां मासं क्षौरं कलेस्तिथौ ॥१४०॥
पूर्णिमादर्शयोर्नारीसेवनं परिवर्जयेत् । दर्शे षष्ठ्यां प्रतिपदि द्वादश्यां प्रतिपर्वसु ॥१४१॥
नवम्यां च न कुर्वीत कदाचिद्दंतधावनम् । व्यतीपाते च संक्रांतावेकादश्यां च पर्वसु ॥१४२॥
अर्कभौमदिने षष्ठ्यां नाभ्यंगो वैधृतौ तथा । यः करोति दशम्यां च स्नानमामलकैर्नरः ॥१४३॥
पुत्रहानिर्भवेत्तस्य त्रयोदश्यां धनक्षयः । अर्थपुत्रक्षयस्तस्य द्वितीयायां न संशयः ॥१४४॥
अमायां च नवम्यां च सप्तम्यां च कुलक्षयः । या पौर्णिमा दिवा चन्द्रमती सानुमती स्मृता ॥१४५॥
रात्रौ चन्द्रवती राकाप्यमावास्या तथा द्विधा । सिनीवाली चेंदुमती कुहूर्नेंदुमती मता ॥१४६॥
कार्तिके शुक्लनवमी त्वादिः कृतयुगस्य च । त्रेतादिर्माधवे शुक्ले तृतीया पुण्यसंज्ञिता ॥१४७॥
कृष्णा पञ्चदशी माघे द्वापरादिमुदीरिता । कल्पादिः स्यात्कृष्णपक्षे नभस्तस्य त्रयोदशी ॥१४८॥
द्वादश्यूर्जे शुक्लपक्षे नवम्यच्छेश्वयुज्यपि । चैत्रे भाद्रपदे चैव तृतीया शुक्लसंज्ञिता ॥१४९॥
एकादशी सिता पौषे ह्याषाढेर्दशमीसिता । माघे च सप्तमी शुक्ला नभस्ये त्वसिताष्टमी ॥१५०॥
श्रावणे मास्यमावास्या फाल्गुने मासि पौर्णिमा । आषाढे कार्तिके मासि ज्इष्टे चैत्रे च पौर्णिमा ॥१५१॥
मन्वादयो मानवानां श्राद्धेष्वत्यंतपुण्यदा । भाद्रे कृष्णत्रयोदश्यां मघामिन्दुः करे रविः ॥१५२॥
गजच्छाया तदा ज्ञेया श्राद्धे ह्यत्यंतपुण्यदा । एकस्मिन्वासरे तिस्रस्तिथयः स्यात्तिथिक्षयः ॥१५३॥
तिथिर्वारत्रये त्वेका ह्यधिका द्वे च निंदिते । सूर्यास्तमनपर्यन्तं यस्मिन्वारे तु या तिथिः ॥१५४॥
विद्यते सा त्वखंडा स्यान्न्यूना चेत्खंडसंज्ञिता । तिथेः पञ्चदशो भागः क्रमात्प्रतिपदादयः ॥१५५॥
क्षणसंज्ञास्तदर्द्धानि तासामर्द्धप्रमाणतः । रविः स्थिरश्चरश्चंद्रः क्रूरो वक्रोखिलो बुधः ॥१५६॥
लघुरीज्यो मृदुः शुक्रस्तीक्ष्णो दिनकरात्मजः । अभ्यक्तो भानुवारे यः स नरः क्लेशवान्भवेत् ॥१५७॥
ऋक्षेशे कांतिभाग्भौमे व्याधि सौभाग्यमिन्दुजे । जीवे नैवं सिते हानिर्मन्दे सर्वसमृद्धयः ॥१५८॥
लंकोदयात्स्याद्वारादिस्तस्मादूर्ध्वमधोऽपिवा । देशांतरस्वचरार्द्धनाडीभिरपरे भवेत् ॥१५९॥
बलप्रदस्य खेटस्य कर्म सिद्ध्यति यत्कृतम् । तत्कर्म बलहीनस्य दुःखेनापि न सिद्ध्यति ॥१६०॥
इंदुज्ञजीवशुक्राणां वासराः सर्वकर्मसु । फलदास्त्वितरे क्रूरे कर्मस्वभिमतप्रदाः ॥१६१॥
रक्तवर्णौ रविश्चन्द्रौ गौरो भौमस्तुलोहितः । दूर्वावर्णो वुधो जीवः पीतः श्वेतस्तु भार्गवः ॥१६२॥
कृष्णः सौरिः स्ववारेषु स्वस्ववर्णक्रिया हिताः । अद्रिवाणाश्च यस्तर्कपातालवसुधाधराः ॥१६३॥
बाणाग्निलोचनानिह्यवेदबाहुशिलीमुखाः । त्र्ये काह्यो नेत्रगोत्ररामाश्चंद्ररसर्तवः ॥१६४॥
कुलिकाश्चोपकुलिका वारवेला स्तथा क्रमात् । प्रहरार्द्धप्रमाणास्ते विज्ञेयाः सूर्यवासरात् ॥१६५॥
यस्मिन्वारे क्षणो वारदृष्टस्तद्वासराधिपः । आद्यः षष्ठो द्वितीयोऽस्मत्तत्षष्ठस्तुतृतीयकः ॥१६६॥
षष्ठः षष्ठश्चेतरेषां कालहोराधिपाः स्मृताः । सार्द्धनाडीद्वयेनैव दिवा रात्रौ यथाक्रमात् ॥१६७॥
वारप्रोक्ते कर्मकार्ये तद्वहस्य क्षणेऽपि सन् । नक्षत्रेशाः क्रमाद्दस्रयमवह्निपितामहाः ॥१६८॥

चन्द्रेशादितिजीवाहिपितरो भगसंज्ञकः । अर्यमार्कत्वष्टृमरुच्छक्राग्निमित्रवासवः ॥१६९॥
नैर्ऋत्युदकविश्वेजगोविंदवसुतोयपाः । अजैकपादहिर्बुध्न्या पूषा चेति प्रकीर्तिताः ॥१७०॥
पूर्वात्रयं मघाद्यग्निविशाखायममूलभम् । अधोमुखं तु नवकं भानौ तत्र विधीयते ॥१७१॥
बिलप्रवेशगणितभूतसाधनलेखनम् । शिल्पकर्मकलाकूपनिक्षेपोद्धरणादि यत् ॥१७२॥
मित्रेन्दुत्वाष्ट्रहस्तेन्द्रादितिभांत्याश्विवायुभम् । तिर्यङ्मुखाख्यं नवकं भानौ तत्र विधीयते ॥१७३॥
हलप्रवाहगमनं गंत्रीपत्रगजोष्ट्र कम् । खरगोरथनौयानालुलायहयकर्म च ॥१७४॥
ब्रह्मविष्णुमहेशार्यशततारावसूत्तराः । ऊर्द्धास्यं नवकं भानां प्रोक्तमत्र विधीयते ॥१७५॥
नृपाभिषेकमाङ्गल्यवारणध्वजकर्म च । प्रासादतोरणारामप्राकाराद्यं च सिद्ध्यति ॥१७६॥
स्थिरं रोहिण्युत्तराख्यं क्षिप्रं सूर्याश्विपुष्यभम् । साधारणं द्विदैवत्यं वह्निभं च प्रकीर्तितम् ॥१७७॥
वस्वदित्यंवुपुष्याणि विष्णुभं चरसंज्ञितम् । मृद्विंदुमित्रचित्रांत्यमुग्रं पूर्वामघात्रिकम् ॥१७८॥
मूलार्द्राहींद्रभं तीक्ष्णं स्वनामसदृशं फलम् । चित्रादित्यंबुविष्ण्वंबांत्याधिमित्रवसूडुषु ॥१७९॥
समृगेज्येषु बालानां कर्णवेधंक्रिया हिता । दस्रेन्द्वदितितिष्येषु करादित्रितये तथा ॥१८०॥
गजकर्माखिलं यत्तद्विधेयं स्थिरभेषु च । वाजिकर्माखिलं कार्यं सूर्यवारे विशेषतः ॥१८१॥
चित्रावरुणवैरिंचत्र्युत्तरासु गमागमम् । दर्शाष्टभ्यां चतुर्दश्यां पशूनां न कदाचन ॥१८२॥
मृदुध्रुवक्षिप्रचरविशाखापितृभेषु च । हलप्रवाहं प्रथमं विदध्यान्मूलभे वृषैः ॥१८३॥
हलादौ वृषानाशाय भत्रयं सूर्यभुक्तभात् । अग्रे वृद्ध्यै त्रयं लक्ष्म्यै सौम्यपार्श्वे च पञ्चकम् ॥१८४॥
शूलत्रयेपि नवकं मरणाय च पञ्चकम् । श्रियै पुष्ट्यै त्रयं श्रेष्ठं स्याच्चक्रे लाङ्गलाह्वये ॥१८५॥
मृदुध्रुवक्षिप्रभेषु पितृवायुवसूडुषु । समूलभेषु बीजोपितरत्युत्कृष्टफलप्रदा ॥१८६॥
भवेद्भत्रितयं मूर्ध्नि धान्यनाशाय राहुभात् । गले त्रयं कज्जलाय वृद्ध्यै च द्वादशोदरे ॥१८७॥
निस्तंडुलत्वं लाङ्गूले भचतुष्टयभीतिदम् । नाभौ वह्निः पञ्चकं यद्बीजोप्ताविति चिन्तयेत् ॥१८८॥
स्थिरेष्वदितिसार्पांत्यपितृमारुतभेषु च । न कुर्याद्रोगमुक्तस्य स्नानमार्हीं दुशुक्रयोः ॥१८९॥
उत्तरात्रयमैत्रेन्द्रवसुवारुणभेषु च । पुष्यार्कपौष्णधिष्ण्येषु नृत्यारंभः प्रशस्यते ॥१९०॥
पूर्वार्द्धयुंजि षड्भानि पौष्णभादुदभात्ततः । मध्ययुंजि द्वादशर्क्षाणीन्द्रभान्नवभानि च ॥१९१॥
परार्द्धयुंजि क्रमशः संप्रीतिर्दम्पते र्मिथः । जघन्यास्तोयपार्द्राहिपवनांतकनाकपाः ॥१९२॥
क्रमादितिद्विदैवत्या बृहत्ताराः पराः समाः । तासां प्रमाणघटिकास्त्रिंशन्नवतिद्यष्टयः ॥१९३॥
क्रमादभ्युदिते चन्द्रे नयत्यर्घसमानि च । अश्वग्रींद्वीज्यनैर्ऋत्यत्वाष्ट्रजत्त्युत्तराभवाः ॥१९४॥
पितृद्विदैववस्वाख्यास्ताराः स्युः कुलसंज्ञिकाः । धातृज्येष्ठादितिस्वातीपौष्णार्कहरिदेवताः ॥१९५॥
अजाह्यंत्यकभौजंगताराश्चैवाकुलाह्वयाः । शेषाः कुलाकुलास्तारास्तासां मध्ये कुलो डुषु ॥१९६॥
प्रयाति यदि भूपालस्तदाप्नोति पराजयम् । भेषूपकुलसंज्ञेषु जयमाप्नोति निश्चितम् ॥१९७॥
संधिर्वापि तयोः साम्यं कुलाकुलगणोडुषु । अर्कार्किभौमवारे चेद्भद्राया विषमांघ्रिभम् ॥१९८॥
त्रिपुष्करं त्रिगुणदं द्विगुणं यमलाहिभम् । तद्यात्तदोषनाशाय गोत्रयं मूल्यमेव वा ॥१९९॥
द्विपुष्करे द्वयं दद्यान्न दोषस्त्वृक्षभोऽपि वा । क्रूरविद्धो युतो वापि पुष्यो यदि बलान्वितः ॥२००॥
विना पाणिग्रहं सर्वमंगलेष्विष्टदः सदा । रामाग्निऋतुबाणाग्निभूवेदाग्निशरेषु च ॥२०१॥
नेत्रबाहुशरेंद्विंदुबाहुवेदाग्निसंकराः । वेदनेत्राब्ध्यग्निशतबाहुनेत्ररदाः क्रमात् ॥२०२॥
तारासंख्याश्च विज्ञेया दस्रादीनां पृथक् पृथक् । या दृश्यंते दीप्तताराः स्वगणे योगतारकाः ॥२०३॥
वृषो वृक्षोश्चभायाम्यधिष्ण्येयमकरस्तरुः । उडुंबरश्चाग्निधिष्ण्ये रोहिण्यां जंबुकस्तरुः ॥२०४॥
इन्दुभात्खदिरो जातः कृष्णप्लक्षश्च रौद्रभात् । संभूतोऽदितिभाद्वंशः पिप्पलः पुष्यसंभवः ॥२०५॥
सर्पधिष्ण्यान्नागवृक्षो वटः पितृ भसंभवः । पालाशो भाग्यभाज्जातः अक्षश्चार्यमसंभवः ॥२०६॥
अरिष्टवृक्षो रविभाच्छ्रीवृक्षस्त्वाष्ट्रसंभवः । स्वात्यृक्षजोऽर्जुनो वृक्षो द्विदैवत्याद्विकंकतः ॥२०७॥
मित्रभाद्बकुलोजातो विष्टिः पौरंदरर्क्षजः । सर्ज्जवृक्षो मूलभाच्च वंजुलो वारिधिष्ण्यजः ॥२०८॥

पनसो वैश्वभाज्जातश्चार्कवृक्षश्च विष्णुभात् । वसुधिष्ण्याच्छमीवृक्षः कदंबो वारुणर्क्षजः ॥२०९॥
अजाहेश्चूतवृक्षोभूद्बुध्न्यजः पिचुमन्दकः । मधुवृक्षः पौष्णधिष्ण्याद्धिष्ण्यवृक्षाः प्रकीर्तिताः ॥२१०॥
यस्मिञ्छनैश्वरो धिष्ण्ये तद्वृक्षो ऽच्यः प्रयत्नतः । योगेशा यमविश्वेंदुधातृजीवनिशाकराः ॥२११॥
इंद्रतोयाहिवह्न्यर्कभूमिरुद्रकतोयपाः । गणेशरुद्रधनदत्वष्टृमित्रषडाननाः ॥२१२॥
सावित्री कमला गौरी नासत्यौ पितरोऽदितिः । वैधृतिश्च व्यतीपातो महापातावुभौ सदा ॥२१३॥
परिघस्य च पूर्वार्द्धं सर्वकार्येषु गर्हितम् । विष्कंभवज्रयोस्तिस्रः षड्वा गं डातिगंडयोः ॥२१४॥
व्याघाते नव शूले तु पञ्च नाड्यो हि गर्हिताः । अदितींदुमघाह्यश्वमूलमैत्रे ज्यभानि च ॥२१५॥
ज्ञेयानि सहचित्राणि मूर्द्ध भानि यथाक्रमम् । लिखेदूर्ध्वगतामेकां तिर्यग्रेखास्त्रयोदश ॥२१६॥
तत्र खार्जूरिके चक्रे कथितं मूर्ध्नि भं न्यसेत् । भाज्यैकरेखागतयोः सूर्याचन्द्रमसोर्मिथः ॥२१७॥
एकार्गलो दृष्टिपातश्चाभिजिद्वर्जितानि वै । विनाडीभिर्द्वादशभी रहितं घटिकाद्वयम् ॥२१८॥
योगं प्रकरणं योगाः क्रमात्तु सप्तविंशतिः । इन्द्रः प्रजापतिर्मित्रस्त्वष्टाभूहरितिप्रिया ॥२१९॥
कीनाशः कलिरुद्राख्यो तिथ्यर्द्धेशास्त्वहिर्मरुत् । बवादिवणिजांतानि शुभानि करणानि षट् ॥२२०॥
परीता विपरीता वा विष्टिर्नेष्टा तु मंगले । मुखे पञ्चगले चैका वक्षस्येकादश स्मृताः॥२२१॥
नाभौ चतस्रः षट् कटयां तिस्रः पुच्छाख्यनाडिकाः । कार्यहानिर्मुखे मृत्युर्गले वक्षासि निःस्वता ॥२२२॥
कटचामुन्मत्तता नाभौ च्युतिः पुच्छे ध्रुवं जयः । स्थिराणि मध्यमान्येषां मध्यनागचतुष्पदौ ॥२२३॥
दिवामुहूर्ता रुद्राहिमित्रपितृवसूदकम् । विश्वेविधातृब्रह्मेंद्ररुद्राग्निवसुतोयपाः ॥२२४॥
अर्यमा भगसंज्ञश्च विज्ञेया दश पञ्च च । ईशाजपादाहिर्बुध्न्यपूषाश्वियमवह्नयः ॥२२५॥
धातृ इन्द्रादितीज्याख्या विष्ण्वर्कत्वष्टृवायवः । अह्नः पञ्चदशो भागस्तथा रात्रिप्रमाणतः ॥२२६॥
मुहूर्तमानं द्वरावक्षणर्क्षा णि समेश्वरम् । अर्यमा राक्षसब्राह्मौ पित्र्याग्नेयौ तथाभिजित् ॥२२७॥
राक्षसाख्यौ ब्राह्मपित्र्यौ भर्गाजांशाविनादिषु । वारेषु वर्जनीयास्ते मुहूर्ताः शुभकर्मसु ॥२२८॥
येषु ऋक्षेषु यत्कर्म कथितं निखिलं च तत् । तद्दैवत्ये मुहूर्तेऽपि कार्यं यात्रादिकं सदा ॥२२९॥
भूकंपः सूर्यभात्सप्तमर्क्षे विद्युच्च पञ्चमे । शूलोऽष्टमे च दशमे शनिरष्टादशे ततः ॥२३०॥
केतुः पञ्चदशे दण्ड उल्का एकोनविंशतौ । निर्घातपातसंज्ञश्च ज्ञेयः स नवपञ्चमे ॥२३१॥
मोहनिर्घातकंपाश्च कुलिशं परिवेषणम् । विज्ञेया एकविंशर्क्षा दारभ्य च यथाक्रमम् ॥२३२॥
चन्द्रयुक्तेषु भेष्वेषु शुभकर्म न कारयेत् । सूर्यभात्सर्वपित्र्यर्क्षं त्वाष्ट्रमित्राप्तभेषु च ॥२३३॥
सविष्णुभेषु क्रमशो हस्तभाश्वं द्रसंयुतः । धिष्ण्ये तावति सत्यत्र दुष्टयोगः पतत्यसौ ॥२३४॥
चंडीशचंडायुधाख्यस्तस्मिन्नैवाचरेच्छुभम् । त्रयोदश स्युर्मिलनसंख्यया तिथिवारयोः ॥२३५॥
क्रकचो नाम योगोऽयं मंगलेष्वतिगर्हितः । सप्तम्यामर्कवारश्चेत्प्रतिपत्सौम्यवासरे ॥२३६॥
संवतयोगो विज्ञेयः शुभकर्मविनाशकृत् । आनन्दः कालदण्डाख्यो धूम्रधातृसुधाकराः ॥२३७॥
ध्वांक्षध्वजाख्यश्रीवत्सवज्रमुद्गरछत्रकाः । मित्रमानसपद्माख्यलुम्बकोत्पातमृत्यवः ॥२३८॥
काणसिद्धिशुभा मृत्युमुशलांतककुंजराः । राक्षसाख्यवरस्थैर्यवर्द्धमानाः क्रमादमी ॥२३९॥
योगाः स्वसंज्ञाफलदा अष्टाविंशतिरीरिताः । रविवारे क्रमादेव दस्रभादिंदुभाद्विधौ ॥२४०॥
सार्पाद्भौमे बुधे हस्तान्मैत्रभात्सुरमंत्रिणि । वैश्वदेवाद्भृगुसुते वारुणाद्भास्करात्मजे ॥२४१॥
हस्तर्क्षं च रवाविन्दौ चन्द्रभं दस्रभं कुजे । सौम्ये मित्रभमाचार्यं तिष्यः पोष्णभृगोः सुते ॥२४२॥
रोहिणी मन्दवारे च सिद्धियोगाह्वया अमी । आदित्यभौमयोर्नन्दा भद्रा शुक्रशशांकयोः ॥२४३॥
जया सौम्ये गुरौ रिक्ता शनौ पू र्णेति नो शुभाः । नंदा तिथिः शुक्रवारे सौम्ये भद्र ा कुजे जया ॥२४४॥
रिक्ता मन्दे गुरोवारे पूर्णा सिद्धाह्वया अमी । एकादश्यामिन्दुवारो द्वादश्यामर्कवासरः ॥२४५॥
षष्ठी गुरौ तृतीया ज्ञेऽष्टमी शु क्रे शनैश्चरे । नवमी पञ्चमी भौमे दग्धयोगाः प्रकीर्तिताः ॥२४६॥
भरण्यर्कदिने चन्द्रे चित्राभौमे तु विश्वभम् । बुधे श्रविष्ठार्यमभे गुरौ ज्येष्टा भृगोर्दिने ॥२४७॥
रेवती मन्दवारे तु ग्रहजन्मर्क्षनाशनम् । विशाखादिचतुर्वर्गमर्कमर्कवारादिषु क्रमात् ॥२४८॥

उत्पातमृत्युकारणाख्यसिद्धियोगाः प्रकीर्तिताः । तिथिवारोद्भवा ने ष्टा योगा वारर्क्षसंभवाः ॥२४९॥
हूणवंगखसेष्वन्यदेशेष्वतिशुभप्रदाः । घोराष्टाक्षीमहोदर्यो मन्दा मन्दाकिनी तथा ॥२५०॥
मिश्रा राक्षसिका सूर्यवारादिषु यथाक्रमम् । शूद्रतस्करवैश्यक्ष्मादेवभूपगवां क्रमात् ॥२५१॥
अनुक्तानां च सर्वेषां घोराद्याः सुखदाः स्मृताः । पूर्वाह्णे नृपतीन्हन्ति विप्रान्मध्यंदिने विशः ॥२५२॥
अपराह्णेऽस्तगे शूद्रान्प्रदोषे च पिशाचकान् । निशि रात्रिचरान्नाटयकारानपररात्रिके ॥२५३॥
गोपानुषसि संध्यायां लिंगिनो रविसंक्रमः । दिवा चेन्मेषसंक्रांतिरनर्थकलहप्रदा ॥२५४॥
रात्रौ सुभिक्षमतुलं संध्ययोर्वृष्टिनाशनम् । हरिशार्दूलवाराहखरकुंजरमाहिषाः ॥
अश्वश्वाजवृषाः पादायुधाः करणवाहनाः ॥२५५॥ भुशुडी च गदा खड्गौ दण्ड इष्वासतोमरौ ॥२५६॥
कुन्तपाशांकुशास्त्रेषूनिबिभर्तिं करयोस्त्विनः । अन्नं च पायसं भैक्ष्यं सयूषं च पयो दधि ॥२५७॥
मिष्टान्नं गुडमध्वाज्यशर्करा ववतो हविः । ववोवीवणिजेविश्वां बालवे गोचरस्थितौ ॥२५८॥
कौलवे शकुनौ भानुः किंस्तुघ्ने चोर्द्धसंस्थितः । चतुः पादे तिले नागे सुप्तः क्रांतिं करोति हि ॥२५९॥
धर्मायुर्वृष्टिषु समं श्रृष्टं नष्टं फलं क्रमात् । आयुधं वाहनाहारौ यज्जातीयं जनस्य च ॥२६०॥
स्वापोपविष्टास्तिष्ठंतस्ते लोकाः क्षेममाप्नुयुः । अंधकं मन्दसंज्ञं च मध्यसंज्ञं सुलोचनम् ॥२६१॥
पपीयाद्गणयोद्धानि रोहिण्यादिचतुर्विधम् । स्थिरभेष्वर्कसंक्रांतिर्ज्ञेया विष्णुपदाह्वया ॥२६२॥
षडशीतिमुखा ज्ञेया द्विस्वभावेषु राशिषु । तुलाघटाजयोर्ज्ञेयो विषुवत्सूर्यसंक्रमः ॥२६३॥
याम्यायने स्थिरे त्वाद्याः पराः सौम्येन्दुमूर्तिभैः । मेध्या विषुवति प्रोक्ताः पुण्यनाडयस्तु षोडश ॥२६४॥
संध्या त्रिनाडी प्रमितार्कबिंबोर्द्धोदयास्ततः । प्राक्पश्चाद्याम्यसौम्ये चेत्पुण्यं पूर्वां परेऽहनि ॥२६५॥
यादृशेनेंदुना भानोः संक्रांतिस्तादृशं फलम् । नरः प्र प्नोति तद्राशौ शीतांशोः साध्वसाधु च ॥२६६॥
संक्रांतेः परतो भानुर्भुक्त्वा यावद्भिरंशकैः । रवेरयनसंक्रांतिस्तदा तद्र ाशिसंक्रमात् ॥२६७॥
सक्रांतिग्रहगर्क्षं वा जन्मन्युभयपार्श्वयोः । व्रतोद्वाहादिकेष्वेव द्वयं नेष्टं तु तत्क्रमात् ॥२६८॥
तिलोपरिलिखेच्चक्रं त्रित्रिशूलं त्रिकोणकम् । तत्र हेम विनिक्षिप्य दद्याद्दोषापवृत्तये ॥२६९॥
ताराबलेन शीतांशुर्बलवांस्तद्वशाद्रविः । बली संक्रममाणस्तु तद्वत्खेटा बलाधिकाः ॥२७०॥
शुभोऽर्को जन्मतस्त्र्यायदशषट्सु मुनीश्वर । नवपञ्चांबुरिष्फस्थैर्व्यर्किभिर्विध्यते न चेत् ॥२७१॥
शुभो जन्मर्क्षतश्चंद्रो द्यूनाङ्गायारिस्वत्रिषु । यथेष्टांत्यांबुधर्मस्थैविबुधैर्विध्यते न चेत् ॥२७२॥
त्र्यायारिषु कुजः श्रेष्ठो जन्मना चेन्न विध्यते । व्ययेष्वंकस्थितैः सौरिसौम्यसूर्यैः शुभौषधात् ॥२७३॥
ज्ञः स्वायार्यष्टखायेषु जन्मतश्चेन्न विध्यते । धीत्र्यकादिगजांतस्थैः शशांकरहितैः शुभैः ॥२७४॥
जन्मराशेर्गुरुः श्रेष्ठः स्वायगोऽध्यस्तगो न चेत् । विध्यतेंत्याष्टखांबुत्रिगतैः खेटैर्मुनीश्वर ॥२७५॥
जन्मभादासुताष्टांकांत्यायेष्विष्टो भृगोःसुतः । चेन्न विद्धोऽष्टसप्ताङ्गम् खांकाद्यायारिरामगैः ॥२७६॥
न ददाति शुभं किंचिद्गोचरे वेधसंयुते । तस्माद्वेधं विचार्याथ कथनीयं शुभाशुभम् ॥२७७॥
वामभेदविधानेन दुष्टोऽपि स्याच्छुभङ्करः । सौम्येक्षितोऽनिष्टफलः शुभदः पापवीक्षितः ॥२७८॥
निष्फलौ तौ ग्रहौ स्वेन शत्रुणा च विलोकितौ । नीचराशिगतः स्वस्य शत्रोः क्षेत्रगतोऽपि वा ॥२७९॥
शुभाशुभफलं नैव दद्यादस्तमितोपि वा । ग्रहेषु विषमस्थेषु शांतिं कुर्यात्प्रयत्नतः ॥२८०॥
हानिर्वृद्धिर्ग्रहाधीना तस्मात्पूज्यतमा ग्रहाः । मणिर्मुक्ताफलं विद्रुमाख्यं मरकतं तथा ॥२८१॥
पुष्परागं तथा वज्रं नीलं गोमेदसंज्ञितम् । दूर्य्यं भास्करादीनां तुष्ट्यै धार्यं यथाक्रमम् ॥२८२॥
शुक्लपक्षादिदिवसे चन्द्रो यस्य शुभप्रदः । स पक्षस्तस्य शुभदः कृष्णपक्षोन्यथाऽशुभः ॥२८३॥
शुक्लपक्षे शुभश्चंद्रो द्वितीयनवपञ्चमे । रिःफरं ध्रांबुसंस्थैश्चेन्न विद्धो गगने चरैः ॥२८४॥
जन्म संपद्विपत् क्षेम प्रत्यरिः साधको वधः । मित्रं परममित्रं च जन्मभात्तु पुनः पुन ॥२८५॥
जन्मत्रिपञ्चसप्ताख्यास्तारा नेष्ट फलप्रदाः । शाकं गुडं च लवणं सतिलं कांचनं क्रमात् ॥२८६॥
अनिष्टफलनाशाय दद्यादेतद्द्विजातये । कृष्णे बलवती तारा शुक्लपक्षे बली शशी ॥
चन्द्रस्य द्वादशावस्था राशौराशौ यथाक्रमम् ॥२८७॥

यात्रोद्वाहादिकार्येषु नामतुल्यफलप्रदाः । षष्टिघ्नं गतचन्द्रर्क्षं तत्कालघटिकान्वितम् ॥
वेदघ्नमिषुवेदांत्यमवस्था भानुभागतः ॥२८८॥
प्रवासनष्टाख्यमृता जयो हास्यं रतिर्मुदा । शिनिभुक्तिर्ज्वरः कंपः सुस्थितिर्नामसन्निभाः ॥२८९॥
पट्टबंधनयानोग्रसंधिविग्रहभूषणम् । धात्वाकरं युद्धकर्म मेषलग्ने प्रसिद्ध्यति ॥२९०॥
मंगलानि स्थिराण्यंवुवेश्मकर्मप्रवर्तनम् । कृषिवाणिज्यपश्वादिदुष्टलग्ने प्रसिद्ध्यति ॥२९१॥
कलाविज्ञानशिल्पानि भूषणाहवसंश्रवम् । गजोद्वाहाभिषेकाद्यं कर्त्तव्यं मिथुनोदये ॥२९२॥
वापीकूपतडागादि वारिबंधनमोक्षणम् । पौष्टिकं लिपिलेखादि कर्तव्यं कर्कटोदये ॥२९३॥
इक्षुधान्यवणिक्पण्यकृषिसेवादयस्स्थिरे । साहसाहवभूपाद्यं सिंहलग्ने प्रसिद्ध्यति ॥२९४॥
विद्याशिल्पौषधं कृत्यं भूषणं च चरस्थिरम् । कन्या लग्ने विधेयं च पौष्टिकाखिलमंगलम् ॥२९५॥
कृषिवाणिज्ययानं च पशूद्वाहव्रतादिकम् । तुलायामखिलं कर्म तुलाभाराश्रिते च यत् ॥२९६॥
स्थिरकर्माखिलं कार्यं राजसेवाभिषेचनम् । चौर्यकर्मस्थिरारंभाः कर्तव्या वृश्चिकोदये ॥२९७॥
व्रतोद्वाहप्रयाणाश्वगजशिल्पकलादिकम् । चरस्थिरविमिश्रं च कर्तव्यं कार्मुकोदये ॥२९८॥
चापबंधनमोक्षास्त्रकृषिगोश्वादिकर्म यत् । प्रस्थानं पशुदासादि कर्तव्यं मकरोदये ॥२९९॥
कृषिवाणिज्यपश्वंबुशिल्पंकर्मकलादिकम् । जलपात्रास्त्राशस्त्रादि कर्तव्यं कलशोदये ॥३००॥
व्रतोद्वाहाभिषेकांबुस्थाप्नं सन्निवेशनम् । भूषणं जलपात्राश्वकर्म मीनोदये शुभम् ॥३०१॥
मेषादिषु विलग्नेषु शु द्धेष्वेवं प्रसिद्ध्यति । क्रूरग्रहेक्षितेषूग्रसंयुतेषूग्रमेव हि ॥३०२॥
गोयुग्मकर्ककन्यांत्यतुलाचापधराः शुभाः । शुभर्क्षत्वाशुभासत्य इतरा पापराशयः ॥३०३॥
ग्रहयोगावलोकाभ्यां राशिर्धत्ते ग्रहोद्भवम् । फलं ताभ्यां विहीनो ऽसौ स्वभावमुपसर्पति ॥३०४॥
आदौ संपूर्णफलदं मध्ये मध्यफलप्रदम् । अंते तुच्छफले लग्ने सर्वस्मिन्नेवमेव हि ॥३०५॥
सर्वत्र प्रथमं लग्नं कर्तुश्चंद्र बलं ततः । कल्प्यामदिंदौ बलिनि सप्तमे बलिनो ग्रहाः ॥३०६॥
चन्द्रस्य वलिमाधारमाधेय चान्यखेटकम् । आधारभूतेनाधेयं धीयते परिधिष्ठिनम् ॥३०७॥
चेदिन्दुः शुभदः सर्वे ग्रहाः शुभफलप्रदाः । अशु भश्चेदशुभदा वर्जयित्वा धनाधिपम् ॥३०८॥
लग्नस्याभ्युदिता येंशास्तेष्वंशेषु स्थितो ग्रहः । लग्नोद्भवं फलं धत्ते धनातीतो द्वितीयकम् ॥३०९॥
एवं स्थानेषु शेषेषु चैवमेवं प्रकल्पयेत् । लग्नं सर्वगुणोपेतं लभ्यतेऽल्पैर्दिनैर्नहि ॥३०॥
दोषाल्पत्वं गुणाधिक्यं बहु संततमिष्यते । दोषादुष्टो हि कालस्तमपि मार्ष्टुं पितामहः ॥३११॥
अप्यशौचतुणाधिक्यं दोषान्यत्ते ततो हि ते । अमारिक्ताष्टमीषष्ठीद्वादशीप्रतिपत्स्वपि ॥३१२॥
परिघस्य च पूर्वार्द्धं व्यतीपाते सवैधृतौ । संध्यासूपप्लवे विष्ट्यामशुभं प्रथमार्त्त वम् ॥३१३॥
रुग्णा पतिप्रिया दुःखी पुत्रिणी भोगनी तथा । पतिव्रता केशयुक्ता सूर्यवारादिषु क्रमात् ॥३१४॥
यामाग्निरौद्रभाग्ययाहिद्वीशेंद्रादिद्युपद्विषाः । तारका न हिता मासा मधूर्जशुचिपौषकाः ॥३१५॥
भद्रा च संक्रमो निद्रा रात्रिश्चन्द्रार्कयोर्ग्रहः । कुलटा पापभोगेषु निंद्यर्क्षे निंद्यवासरे ॥३१६॥
तिलाज्यदूर्वा जुहुयाद्गायत्र्याष्टशतं बुधः । सुवर्णगोतिलान्दद्यात्सर्वदोषापनुत्तये ॥३१७॥
आद्या निशाश्चतस्रस्तु त्याज्या ह्यपि समाः परैः । ओजराश्यंशगे चन्द्रे लग्ने पुंग्रहवीक्षिते ॥३१८॥
उपवीती युग्मतिथावनग्नः कामयेत्स्त्रियम् । पुत्रार्थी पुरुषशस्त्यक्त्व पौष्णमूलाहिपित्र्यभम् ॥३१९॥
प्रसिद्धे प्रथमे गर्भे तृतीये वा द्वितीयके । मासे पुंसवनं कार्यं सीमंतं च यथा तथा ॥३२०॥
चतुर्थे मासि षष्ठे वाप्यष्टमे वा तदीश्वरे । बलोपपन्ने दंपत्योश्चंद्रताराबलान्विते ॥३२१॥
अरिक्तापर्वदिवसे कुजजीवार्कवासरे । तीक्ष्णमिश्रार्कवर्ज्येषु पुंभांशे रात्रिनायके ॥३२२॥
शुद्धेऽष्टमे जन्मलग्नात्तयोर्लग्ने न नैधने । शुभग्रहयुते दृष्टे पापदृष्टिविवर्जिते ॥३२३॥
शुभग्रहेषु धीधर्मकेन्द्रेष्वरिभवे त्रिषु । पापेषु सत्सु चन्द्रेंत्यनिधनाद्यरिवर्जिते ॥३२४॥
क्रूरग्रहाणामेकोपि लग्नादंत्यात्मजाष्टगः । सीमंतिनीं वा तद्गर्भं बली हंति न संशयः ॥३२५॥
तस्मिञ्जन्ममुहूर्तेऽपि सूतकांतेपि वा शिशोः । जातकर्म प्रकर्तव्यं पितृपूजनपूर्वकम् ॥३२६॥

सूतकांते नामकर्म विधेयं तत्कुलोचितम् । नामपूर्वं प्रशस्तं स्यान्मंगलैः सुसमीक्षितैः ॥३२७॥
देशकालोपघाताद्यैः कालातिक्रमणं यदा । अनस्तगे भृगावीज्ये तत्कार्यं चोत्तरायणे ॥३२८॥
चरस्थिरमृदुक्षिप्रनक्षत्रे शुभवासरे । चन्द्राताराबलोपेते दिवसे च शिशोः पितुः ॥३२९॥
शुभलग्ने शुभांशे च निधने शुद्धिसंयुते । षष्ठे मास्यष्टमे वापि पुंसां स्त्रीणां तु पञ्चमे ॥३३०॥
सप्तमे मासि वा कार्यं नवान्नप्राशनं शुभम् । रिक्तां दिनक्षयं नन्दां द्वादशीमष्टमीमथ ॥३३१॥
त्यक्त्वावान्यतिथिषु प्रोक्तं प्र ाशनं शुभवासरे । चरस्थिरमृदुक्षिप्रनक्षत्रे शुभनैधने ॥३३२॥
दशमे शुद्धिसंयुक्ते शुभलग्ने शुभांशके । पूर्वार्द्धे सौम्यखेटेन संयुक्ते वीक्षितेऽपि वा ॥३३३॥
त्रिषष्ठलाभगैः क्रूरैः केन्द्रधीधर्मगैः शुभैः । व्ययारिनिधनस्थे च चन्द्रे ऽन्नप्राशनं शुभम् ॥३३४॥
तृतीये पञ्चमे चाब्दे स्वकुलाचारतोऽपि वा । बालानां जन्मतश्चौलं स्वगृह्योक्तविधानतः ॥३३५॥
सौम्यायने नास्तगयोः सुरारिसुरमन्त्रिणोः । अपर्वरिक्तातिथिषु शुक्रेज्यज्ञेंदुवासरे ॥३३६॥
दस्रादितीज्यचन्द्रेन्द्रपूषभानि शुभानि च । चौलकर्मणि हस्तर्क्षात्त्रीणित्रीणि च विष्णुभात् ॥३३७॥
पट्टबंधनचौलान्नप्राशने चोपनायने । शुभदं जन्मनक्षत्रमशुभं त्वन्यकर्मणि ॥३३८॥
अष्टमे शुद्धिसंयुक्ते शुभलग्ने शुभांशके । जन्माष्टमे न शीतांशौ षष्ठाष्टांत्यविवर्जिते ॥३३९॥
धनत्रिकोणकेन्द्रस्थैः शुभैस्त्र्यायारिगैः परैः । अभ्यक्ते सन्ध्ययोर्नारि निशि भुक्त्वा न वाहवे ॥३४०॥
नोत्कटे भूषिते नैव याने न नवमेऽह्नि च । क्षौरकर्म महीपानां पञ्चमेपञ्चमेऽहनि ॥३४१॥
कर्तव्यं क्षौरनक्षत्रेऽप्यथ वास्योदये शुभम् । नृपविप्राज्ञया यज्ञे मरणे बन्धमोक्षणे ॥३४२॥
उद्वाहेऽखिलवारर्क्षतिथिषु क्षौरमिष्टदम् । कर्तव्यं मङ्गलेष्वादौ मङ्गलाय क्षुरार्पणम् ॥३४३॥
नवमे सप्तमे वापि पञ्चमे दिवसे ऽपि वा । तृतीये बीजनक्षत्रे शुभवारे शुभोदये ॥३४४॥
सम्यग्गृहाण्यलंकृत्य वितानध्वजतोरणैः । आशिषो वाचनं कार्यं पुण्यं पुण्याङ्गनादिभिः ॥३४५॥
सहवादित्रनृत्याद्यैर्गत्वा प्रागुत्तरां दिशम् । तत्र मृदततस्तीक्ष्णा गृहीत्वा पुनरागतः ॥३४६॥
मृण्ययेऽप्यथ वा वैणवेऽपि पात्रे प्रपूरयेत् । अनेकबीजसंयुक्तं तोयं पुष्पाभिशोभितम् ॥३४७॥
आधानादष्टमे वर्षे जन्मतो वाग्रजन्मनाम् । राज्ञामेकादशे मौंजीबंधनं द्वादशे विशाम् ॥३४८॥
जन्मतः पञ्चमे वर्षे वेदशास्त्रविशारदः । उपवीती यतं श्रीमान्कार्यं तत्रोपनायनम् ॥३४९॥
बालस्य बलहीनोऽपरि सितो जीवः शुभप्रदः । यथोक्तवत्सरे कार्यमनुक्ते नोपनायनम् ॥३५०॥
दृश्यमानगुरौ शुक्रे शाखेशे चोत्तरायणे । वेदानामधिपा जीवशुक्रभौमबुधाः क्रमात् ॥३५१॥
शरद्ग्रीष्मवसंतेषु व्युत्क्रमात्तु द्विजन्मनाम् । मुख्यं साधारणं तेषां तपोमासादिपञ्चसु ॥३५२॥
स्वकुलाचारधर्मज्ञो माघमासे तु फल्गुने । विधिज्ञश्चार्थवांश्चैत्रे वेदवेदाङ्गपारगः ॥३५३॥
वैशाषे धनवान्वेदशास्त्रविद्याविशारदः । उपनीतो बलाढ्यश्च ज्ये ष्ठे विधिविदां वरः ॥३५४॥
शुक्लपक्षे द्वितीया च तृतीया पञ्चमी तथा । त्रयोदशी च दशमी सप्तमी व्रतबंधने ॥३५५॥
श्रेष्ठा त्वेकादशी षष्ठी द्वादश्यन्यास्तु मध्यमाः । कृष्णे द्वित्रीषुसंख्याश्च तिथ्योऽन्या ह्यतिनिंदिताः ॥३५६॥
धिष्णान्यर्कत्रयांतेज्यरुद्रादित्युत्तराणि च । विष्णुत्रयाश्विमित्राब्जयोनिभान्युपनायने ॥३५७॥
जन्मभाद्दशमं कर्म संघातर्क्षं तु षो डशम् । अष्टादशं समुदयं त्रयोविंशं विनाशनम् ॥३५८॥
मानसं पञ्चविंशर्क्षं नाचरेच्छुभमेषु तु । आचार्यसौम्यकाव्यानां वाराः शस्ताः शशीनयोः ॥३५९॥
वारौ तु मध्यमौ चैव व्रतेऽन्यौ निंदितौ मतौ । त्रिधा विभज्य दिवसं तत्रादौ कर्म दैविकम् ॥३६०॥
द्वितीये मानुषं कार्यं तृतीयेंशे च पैतृकम् । स्वनीचगे तदंशे वा स्वारिभे वा तदंशके ॥३६१॥
गुरुशिखिनोश्च शाखेशे कलाशीलविवर्जितः । स्वाधिशत्रुगृहस्थे वा तदंशस्थेऽथ वा व्रती ॥३६२॥
शाखेशे वा गुरौ शुक्रे महापातककृद्भवेत् । स्वोच्चसंस्थे तदंशे वा स्वराशौ राशिगे गणे ॥३६३॥
शाखेशे वा गुरौ शुक्रे केन्द्रगे वा त्रिको णगे । अतीव धनवांश्चैव वेदवेदाङ्गपारगः ॥३६४॥
परमोच्चगते जीवे शाखेशे वाथ वा सिते । व्रती विशुद्धे निधने वेदशास्त्रविशारदः ॥३६५॥

स्वाधिमित्रगृहस्थे वा तस्योच्चस्थे तदंशगे । गुरौ भृगौ वा शाखेशे विद्याधनसमन्वितः ॥३३६॥
शाखाधिपतिवारश्च शाखाधिपबलं शिशोः । शाखाधिपतिलग्नं च दुर्लभं त्रितयं व्रते ॥३६७॥
तस्माद्वेद्वांशगे चन्द्रे व्रती विद्याविशारदः । पापांशगे स्वांशगे वा दरिद्रो नित्यदुःखितः ॥३६८॥
श्रवणादिनि नक्षत्रे कर्कांशस्थे निशाकरे । तदा व्रती वेदशास्त्रधनधान्यसमृद्धिमान् ॥३६९॥
शुभलग्ने शुभांशे च नैधने शुद्धिसंयुते । लग्ने तु निधने सौम्यैः संयुते वा निरीक्षिते ॥३७०॥
इष्टैर्जीवार्कचन्द्राद्यैः पञ्चभिर्बलिभिर्ग्रहै । स्थानादिबलसंपूर्णैश्चतुर्भिर्वा शुभान्वितैः ॥३७१॥
ईक्षन्नैवात्रैकविंशमहादोषविवर्जिते । राशयः सकलाः श्रे ष्ठाः शुभग्रहयुतेक्षिताः ॥३७२॥
शुभनवांशकगता ग्राह्यास्ते शुभराशयः । न कदाचित्कर्कटांशशुभेक्षितयुतोऽपि वा ॥३७३॥
तस्माद्गोमिथुनांशाश्च तुलाकन्यांशकाः शुभाः । एवंविधे लग्नगते नवांशे व्रतमीरितम् ॥३७४॥
त्रिषडायगतैः पापैः षडष्टांत्यविवर्जितैः । शुभैः षष्ठाष्टलग्नांत्यवर्जितेन हिमांशुना ॥३७५॥
स्वोच्चसंस्थोऽपि शीतांशुर्व्रतिनो यदि लग्नगः । न करोति शिशुं निःस्वं सर्वतः क्षयरोगिणम् ॥३७६॥
स्फूर्जिते केन्द्रगे भानौ व्रतिनां पितृनाशनम् । पञ्चदोषोनितं लग्नं शुभदं चोपनायने ॥३७७॥
विना वसंतऋतुना कृष्णपक्षे गलग्रहे । अनध्याये विष्टिषष्ठ्योर्न तु सस्कारमर्हति ॥३७८॥
त्रयोदश्यादिचत्वारि सप्तम्यादिदिनत्रयम् । चतुर्थी वा शुभाः प्रोक्ता अष्टावेते गलग्रहाः ॥३७९॥
क्षुरिकाबंधनं वक्ष्ये नृपाणां प्राक्करग्रहात् । विवाहोक्तेषु मासेषु शुक्लपक्षेऽप्यनस्तगे ॥३८०॥
जीवे शुक्रे च भूपुत्रे चन्द्रताराबलान्विते । मौंजीबंधोक्ततिथिषु कुजवर्जितवासरे ॥३८१॥
नचेन्नवांशके कर्तुरष्टमोदयवर्जिते । शुद्धेऽष्टमे विधौ लग्ने षष्ठाष्टांत्यविवर्जिते ॥३८२॥
धनत्रिकोणकेन्द्रस्थैः शुभैस्त्र्यायारिगैः परैः । क्षुरिकाबंधनं कार्यमर्चयित्वामरान्पितृन् ॥३८३॥
अर्चयेत्क्षुरिकां सम्यग्देवतानां च सन्निधौ । ततः सुलग्ने बध्नीयात्कटयां लक्षणसंयुताम् ॥३८४॥
आयामार्द्धाग्रविस्तारप्रमाणेनैवच्छेदयत् । तच्छेदखंडान्यायाः स्युर्ध्वजाये रिपुनाशनम् ॥३८५॥
धूम्राये मरणं सिंहे जयः शुनि च रोगिता । धनलाभो वृषेऽत्यंतं दुःखी भवति गर्दभे ॥३८६॥
गजायेऽत्यंतसंप्रीतिर्ध्वांक्षे वित्तविनाशनम् । खड्गपुत्रिकयोर्मानं गणयेत्स्वाङ्गुलेन तु ॥३८७॥
मानाङ्गुलेषु पर्यायामेकादशमितां त्यजेत् । शेषाणामगुलीनां च फलानि स्युर्यथाक्रमम् ॥३८८॥
पुत्रलाभः शत्रुवधः स्त्रीलाभो गमन शुभम् । अर्थहानिश्चार्थवृद्धिः प्रीति सिद्धिजयः स्तुतिः ॥३८९॥
स्थितो ध्वजे वृषाये वा नष्टाचेत्पूर्वतो व्रणम् । सिंहे गजे मध्यभागे त्वंतभागे श्वकाकयोः ॥३९०॥
धृम्रगर्द्दभयोर्नैव व्रणं श्रयोंत्यभागगम् । अथोत्तरायणे शुक्रजीवयोर्दृश्यमानयोः ॥३९१॥
द्विजातीनां गुरोर्गेहान्निवृत्तानां यतात्मनाम् । चित्रोत्तरादितीज्यांत्यहरिमित्रविधातृषु ॥३९२॥
भेष्वर्केंदुज्ञेज्यशुक्रवारलग्नांशकेषु च । प्रतिपत्पर्वरिक्तामा चाष्टमी च दिनत्रयम् ॥३९३॥
हित्वान्यदिवसे कार्यं समावर्तनमुंडनम् । सर्वाश्रमाणां विप्रेंद्र ह्युत्तमोऽयं गृहाश्रमः ॥३९४॥
सुखं तत्रापि भामिन्यां शीलवत्यां स्थितं ततः । तस्याः सच्छीललब्धिस्तु सुलग्नवशतः खलु ॥३९५॥
पितामहोक्तं संवीक्ष्य लग्नशुद्धिं प्रवच्म्यहम् । पुण्येऽह्निलक्षणोपेतं सुखासीनं सुचेतसम् ॥३९६॥
प्रणम्य देववत्पृच्छेद्दैवज्ञं भक्तिपूर्वकम् । तांबूलफलपुष्पाद्यैः पूर्णांजलिरुपागतः ॥३९७॥
तत्र चेल्लग्नगः क्रूरस्तस्मात्सप्तमगः कुजः । दंपत्योर्मरणं वाच्यं वर्षाणामष्टकात्पुरा ॥३९८॥
यदि लग्नगतश्चंद्रस्तस्मात्सप्तमगः कुजः । विज्ञेयं भर्तृमरणमष्टवर्षात्तरे बुधैः ॥३९९॥
लग्नात्पञ्चमगः पापः शत्रुदृष्टश्च नीचगः । मृतपुत्राथ वा कन्या कुलटा वा न संशयः ॥४००॥
तृतीयपञ्चसप्तायकर्मगो वा निशाकरः । लग्नात्करोति संबंधं दंपत्योर्गुरुवीक्षितः ॥४०१॥
तुलागोकर्कटा लग्नसंस्थः शुक्रेंदुसंयुताः । वीक्षिताः पृच्छतां नृणां कन्यालाभो भवेत्तदा ॥४०२॥
स्त्रीद्रेष्काणः स्त्रीनवांशे युग्मलग्नं समागतम् । वीक्षितं चन्द्रशुक्राभ्यां कन्यालाभो भवेत्तदा ॥४०३॥
एवं स्त्रीणां भर्तृलब्धिः पुंलग्ने पुंनवांशके । पृच्छकस्य भवेल्लग्नं पुंग्रहैरवलोकितम् ॥४०४॥
कृष्णपक्षे प्रश्नलग्नाद्यस्य राशौ राशी यदा । पापदृष्टोऽथ वा रं ध्रे न संबंधो भवेत्तदा ॥४०५॥

पुण्यैर्निमित्तशकुनैः प्रश्नकाले तु मंगलम् । दंपत्योरशुभैरेतैरशुभं सर्वतो भवेत् ॥४०६॥
पञ्चाङ्गशुद्धिदिवसे चन्द्रताराबलान्विते । विवाहभस्योदये वा कन्यावरणमन्वयैः ॥४०७॥
भूषणैः पुष्पतांबूलफलैर्गंधाक्षतादिभिः । शुक्लांबरैर्गीतवाद्यैर्विघ्नाशीर्वचनैः सह ॥४०८॥
कारयेत्कन्यकागेहे वरः प्रणवपूर्वकम् । तदा कुर्यात्पिता तस्याः प्रदानं प्रीतिपूर्वकम् ॥४०९॥
कुलशीलवयोरूपवित्तविद्यायुताय च । वराय च रूपवतीं कन्यां दद्याद्यवीयसीम् ॥४१०॥
संपूज्य प्रार्थयित्वा च शचीं देवीं गुणाश्रयाम् । त्रैलोक्यसुन्दरीं दिव्यगन्धमाल्यांबरावृताम् ॥४११॥
सर्वलक्षणसंयुक्तां सर्वाभरणभूषिताम् । अनर्घमणिमालाभिर्भासयंतीं दिगंतरान् ॥४१२॥
विलासिनीसहस्राद्यैः सेवमानामहर्निशम् । एवंविधां कुमारीं तां पूजांते प्रार्थयेदिति ॥४१३॥
देवींद्राणि नमस्तुभ्यं देवेंद्रप्रियभामिनि । विवाहे भाग्यमारोग्यं पुत्रलाभं च देहि मे ॥४१४॥
युग्मेऽब्दे जन्मतः स्त्रीणां प्रीतिदं पाणिपीडनम् । एतत्पुंसामयुग्मेऽब्दे व्यत्ययेनाशनं तयोः ॥४१५॥
माघफाल्गुनवैशाखज्येष्ठमासाः शुभप्रदाः । मध्यमा कार्तिको मार्गशीर्षो वै निंदिताः परे ॥४१६॥
न कदाचिद्दशर्क्षेषु भानोरार्द्राप्रवेशनात् । विवाहो देवतानां च प्रतिष्ठां चोपनायनम् ॥४१७॥
नास्तंगते सिते जीवे न तयोर्बालवृद्धयोः । न गुरौ सिंहराशिस्थे सिंहांशकगतेपि वा ॥४१८॥
पश्चात्प्रागुदितः शुक्रो दशत्रिदिवसं शिशुः । बुद्धः पञ्चदिनं पक्षं गुरुः पक्षं च सर्वतः ॥४१९॥
अप्रबुद्धो हृषीकेशो यावत्तावन्न मंगलम् । उत्सवे वासुदेवस्य दिवसे नान्यमंगलम् ॥४२०॥
न जन्ममासे जन्मर्क्षे न जन्मदिवसेऽपि च । आद्य गर्भसुतस्याथ दुहितुर्वा करग्रहः ॥४२१॥
नैवोद्वाहो ज्येष्ठपुत्रीपुत्रयोश्च परस्परम् । ज्येष्ठमासे तयोरेकज्येष्ठे श्रेष्ठश्च नान्यथा ॥४२२॥
उत्पातग्रहणादूर्ध्वं सप्ताहाखिलग्रहे । नाखिले त्रिदिनं नेष्टं त्र्युस्पृक् च क्षयं तथा ॥४२३॥
ग्रस्तास्ते त्रिदिनं पूर्वं पश्चाद्ग्रस्तोदयेऽथवा । संध्यायां त्रिदिनं तद्वन्निशीथे सप्त एव च ॥४२४॥
मासान्ते पञ्च दिवसांस्त्यजेद्रिक्तां तथाष्टमीम् । व्यतीपातं वैधृतिं च संपूर्णं परिघार्द्धकम् ॥४२५॥
पौष्णभत्र्युत्तरामैत्रमरुच्चंद्रार्कपित्र्यभैः । समूलभैरविद्धैस्तैः स्त्रीकरग्रह इष्यते ॥४२६॥
विवाहे बलमावश्यं दंपत्योर्गुरुसूर्ययोः । चेत्पूजा यत्नतः कार्या दुर्बल ग्रहयोस्तयोः ॥४२७॥
गोचरं वेधजं चाष्टवर्गजं रूपजं बलम् । यथोत्तरं बलाधिक्यं स्थूलं गोचरमार्गजम् ॥४२८॥
चन्द्रताराबलं वीक्ष्य ततः पञ्चाङ्गजं बलम् । तिथिरेकगुणा वारो द्विगुणस्त्रिगुणं च भम् ॥४२९॥
योगश्चतुर्गुणः पञ्चगुणं तिथ्यर्द्धसंज्ञितम् । ततो मुहूर्तो बलवांस्ततो लग्नं बलाधिकम् ॥४३०॥
ततो बलवती होरा द्रेष्काणो बलवांस्ततः । ततो नवांशो बलवान्द्वादशांशो बली ततः ॥४३१॥
त्रिंशांशो बलवांस्तस्माद्वीक्ष्यमेतद्बलाबलम् । शुभेक्षितयुताः शस्ता उद्वाहेऽखिलराशयः ॥४३२॥
चन्द्रार्केज्यादयः पंच यस्य राशेस्तु खेचराः । इष्टास्तच्छुभदं लग्नं चत्वारोऽपि बलान्विताः ॥४३३॥
जामित्रशुद्धचैकविंशन्महादोषविवर्जितम् । एकविंशतिदोषाणां नामरूपफलानि च ॥४३४॥
वक्ष्यंतेऽत्र समासेन श्रृणु नारद सांप्रतम् । पञ्चाङ्गशुद्धिराहित्यं दोषस्त्वाद्यः प्रकीर्तितः ॥४३५॥
उदयास्तशुद्धिर्हानिर्द्वितीयः सूर्यसंक्रमः । तृतीयः पापषड्वर्गो भृगुः षष्ठः कुजोऽष्टमः ॥४३६॥
गंडांतं कर्तरी रिष्फषडष्टेन्दुगतो ग्रहः । दंपत्योरष्टमं लग्नं राशिर्विषघटी तथा ॥४३७॥
दुर्मुहीर्तो वारदोषः खार्जूरिकसमाङ्घ्रिभम् । ग्रहणोत्पातभं क्रूरविद्धर्क्षं क्रूरसंयुतम् ॥४३८॥
कुनवांशो महापातो वैधृतिश्चैकविंशतिः । तिथिवारर्क्षयोगानां करणस्य च मेलनम् ॥४३९॥
पञ्चाङ्गमस्य शुद्धिस्तु पञ्चाङ्गशुद्धिरीरिता । यस्मिन्पञ्चाङ्गदोषो ऽस्ति तस्मिँल्लग्ने निरर्थकम् ॥४४०॥
त्यजेत्पञ्चेष्टिकं चापि विषसंयुक्तदुग्धवत् । लग्नलग्नांशकौ स्वस्वपतिना वीक्षितौ युतौ ॥४४१॥
न चेद्वान्योन्यपतिना शुभमित्रेण वा तथा । वरस्य मृत्युः स्यात्ताभ्यां सप्तसप्तोदयांशकौ ॥४४२॥
एवं तौ न युतौ दृष्टौ मुत्युर्वध्वाः करग्रहे । त्याज्याः सूर्यस्य संक्रांतेः पूर्वतः परतस्तथा ॥४४३॥
विवाहादिषु कार्येषु नाड्यः षोडशषोडश । षड्वर्गः शुभदः श्रेष्ठो विवाहस्थापनादिषु ॥४४४॥
भृगुषष्ठाह्वयो दोषो लग्नात्षष्ठगते सिते । उच्चगे शुभसंयुक्ते तल्लग्नं सर्वदा त्यजेत् ॥४४५॥

कुजोऽष्टमो महादोषो लग्नादष्टमगे कुजे । शुभत्रययुतं लग्नं न त्यजेत्तुंगगो यदि ॥४४६॥
पूर्णानंदांख्ययोस्तिथ्योः संधिर्नाडीद्वयं यदा । गंडांतं मृत्युदं जन्मयात्रोद्वाहव्रतादिषु ॥४४७॥
कुलीरसिंहयोः कीटचापयोर्मिनमेषयोः । गं डातंमंतरालं स्याद् घटिकार्द्धं मृतिप्रदम् ॥४४८॥
सार्पैन्द्रपौष्णोभेष्वंत्यषोडशेशा भसंधयः । तदग्रि मेष्वाद्यपादा भानां गंडातसंज्ञकाः ॥४४९॥
उग्रं च संधित्रितयं गंडातं त्रिविधं महत् । लग्नाभिमुखयोः पापग्रहयोर्ऋजुवक्रयोः ॥४५०॥
सा कर्तरीति विज्ञेया दंपत्योर्गलकर्तरी । कर्तरीयोगदुष्टं यल्लग्नं तत्परिवर्जयेत् ॥४५१॥
अपि सौम्यग्रहैर्युक्तं गुणैः सर्वैः समन्वितम् । षडष्टरिष्फगे चन्द्रे लग्नदोषः स्वसंज्ञकः ॥४५२॥
तल्लग्नं वर्जयेद्यत्राज्जीवशुक्रसमन्वितम् । उच्चगे नीचगे वापि मित्रभे शत्रुराशिगे ॥४५३॥
अपि सर्वगुणोपेतं दंपत्योर्निधनप्रदम् । शशांके ग्रहसंयुक्ते दोषः संग्रहसंज्ञकः ॥४५४॥
तस्मिन्संग्रहदोषे तु विवाहं नैव कारयेत् । सूर्येण संयुते चन्द्रे दारिद्र्यं भवति स्फुटम् ॥४५५॥
कुजेन मरणं व्याधिः सौम्येन त्वनपत्यता । दौर्भाग्यं गुरुणा युक्ते सापत्यं भार्गवे ण तु ॥४५६॥
प्रव्रज्या सूर्यपुत्रेण राहुणा मूलसंक्षयः । केतुना संयुते चन्द्रे नित्यं कष्टं दरिद्रता ॥४५७॥
पापग्रहयुते चन्द्रे दंप्तयोर्मरणं भवेत् । शुभग्रहयुते चन्द्रे स्वोच्चस्थे मित्रराशिगे ॥४५८॥
दोषायनं भवेल्लग्नं दंपत्योः श्रेयसे सदा । स्वोच्चगो वा स्वर्क्षगो वा मित्र क्षेत्रगतोपि वा ॥४५९॥
पापग्रहयुतश्चंद्रः करोति मरणं तयोः । दंपत्योरष्टमं लग्नमष्टमो राशिरेव च ॥४६०॥
यदि लग्नगतः सोपि दंपत्योर्मरणप्रदः । स राशिः शुभसंयुक्तो लग्नं वा शुभसंयुतम् ॥४६१॥
लग्नं विवर्जयेद्यत्नात्तदंशांशतदीश्वराम् । दंपत्योर्द्वादशं लग्नं राशिर्वा यदि लग्नगः ॥४६२॥
अर्थहानिस्तयोरस्मात्तदंशस्वामिनं त्यजेत् । जन्मराश्युदयश्चैव जन्मलग्नोदयः शुभः ॥४६३॥
तयोरूपचयस्थानं लग्नेत्यंतशुभप्रदम् । खमार्गणा वेदपक्षाः खरामा वेदमार्गणाः ॥४६४॥
वह्निचन्द्रा रूपदस्राः खरामा व्योमबाहवः । द्विरामाः स्वाग्नयः शून्यदस्राः कुंजरभूमयः ॥४६५॥
रूपपक्षा व्योमदस्रा वेदचन्द्राश्चतुर्दश । शून्यचन्द्रा वेदचन्द्रा षड्ऋक्षा वेदबाहवः ॥४६६॥
शून्यदस्राः शून्यचन्द्राः पूर्णचन्द्र ा गतेंद्रवः । तर्कचन्द्रा वेदपक्षाः खरामाश्चाश्विभात्क्रमात् ॥४६७॥
आभ्याः परास्तु घटिकाश्चतस्रो विषसंज्ञिताः । विवाहादिषु कार्येषु विषनाडीं विवर्जयेत् ॥४६८॥
भास्करादिषु वारेषु ये मुहूर्ताश्च निन्दिताः । विवाहादिषु ते वर्ज्या अपिलक्षगुणैर्युताः ॥४६९॥
निहितावारदोषा ये सूर्यवारादिषु क्रमात् । अपि सर्वगुणोपेतास्ते वर्ज्याः सर्वमंगले ॥४७०॥
एकार्गलांघ्रितुल्यं यत्तल्लग्नं च विवर्जयेत् । अपि शुक्रेज्यसंयुक्तं विषसंयुक्तदुग्धवत् ॥४७१॥
ग्रहणोत्पातभं त्याज्यं मंगलेषु ऋतुत्रयम् । यावच्च शशिना भुक्त्वा मुक्तभं दग्धकाष्ठवत् ॥४७२॥
मंगलेषु त्यजेत्खेटैर्विद्धं च क्रूरसंयुतम् । अखिलर्क्षं पञ्चगव्यं सुराबिंदुयुतं यथा ॥४७३॥
पाद एव शुभैर्विद्धमशुभं नैव कृत्स्नभम् । क्रूरविद्धं युतं धिष्ण्यं निखिलं नैव मंगलम् ॥४७४॥
तुलामिथुनकन्यांशा धनुरंत्यार्द्धसंयुताः । एते नवांशाः शुभदा वृषभस्यांशकाः खलु ॥४७५॥
अंत्यांशास्तेपि शुभदा यदि वर्गोत्तमाह्वयाः । अन्ये नवांशा न ग्राह्या यतस्ते कुनवांशकाः ॥४७६॥
कुनवांशकलग्नं यत्त्याज्यं सर्वगुणान्वितम् । यस्मिन्दिने महापातस्तद्दिनं वर्जयेच्छुभे ॥४७७॥
अपि सर्वगुणोपेतं दम्पत्योर्मृत्युदं यतः । अनुक्ताः स्वल्पदोषाः स्युर्विद्युन्नीहारवृष्टयः ॥४७८॥
प्रत्यर्कपरिवेषेंद्रचापांबुधरगर्जनाः । लत्तोपग्रहपाताख्या मासदग्धाह्वया तिथिः ॥४७९॥
दग्धलग्नांधबधिरपंगुसंज्ञाश्च राशयः । एवमाद्यास्ततस्तेषां व्यवस्था क्रियतेऽधुना ॥४८०॥
अकालजा भवंत्येते विद्युन्नीहारवृष्टयः । दोषाय मंगले नूनमदोषायैव कालतः ॥४८१॥
बृहस्पतिः केन्द्रगतः शुक्रो वा यदि वा बुधः । एकोऽपि दोषनिचयं हरत्येव न संशयः ॥४८२॥
तिर्यक्पञ्चोर्द्धगाः पञ्च रेखा द्वे द्वे च को णयोः । द्वितीये शंभुकोणेऽग्निधिष्ण्यं चक्रे प्रविन्यसेत् ॥४८३॥
भान्यत्र साभिजित्येकरेखाखेटेन विद्धभम् । पुरतः पृष्टतोऽकाद्या दिनर्क्षं लत्तयन्ति यत् ॥४८४॥
अर्काकृतिगुणाद्यङ्गबाणाष्टनवसंख्यभम् । सूर्यभात्सार्प्पपित्र्यान्यत्वाष्ट्रमित्रोडुविष्णुभम् ॥४८५॥

संख्याया दिनभे तावदश्विभात्पातदुष्टभम् । सौराष्ट्रे साल्वदेशे तु लत्तितं भं विवर्जयेत् ॥४८६॥
कलिंगवंगदेशेषु पातितं न शुभप्रदम् । बाह्लिके कुरुदेशे चान्यस्मिन्देशे न दूषणम् ॥४८७॥
तिथयो मासदग्धाश्च दग्धलग्नानि यान्यपि । मध्यदेशे विवर्ज्यानि न दुष्टानीतरेषु च ॥४८८॥
पङ्ग्वन्धकाणलग्नानि मासशून्याश्च राशयः । गौडमालवयोस्त्याज्या अन्यदेशे न गर्हिताः ॥४८९॥
दोषदुष्टं सदा कालं सन्निमार्ष्टुं न शक्यते । अपि धातुरतो ग्र ाह्यं दोषाल्पत्वं गुणाधिकम् ॥४९०॥
एवं सुलग्ने दंपत्योः कारयेत्सम्यगीक्षणम् । हस्तोच्छ्रितां चतुर्हस्तैश्चतुरस्रां समंततः ॥४९१॥
स्तंभश्चतुर्भिः सुश्लक्ष्णैर्वामभागे तु सन्नताम् । समण्डपां चतुर्दिक्षु सोपानैरतिशोभिताम् ॥४९२॥
प्रागुदक्प्रवणां रंभास्तंभैर्हंसशुकादिभिः । विचित्रितां चित्रकुंभैर्विविधैस्तोरणाङ्कुरैः ॥४९३॥
श्रृङ्गारपुष्पनिचयैर्वर्णकैः समलंकृताम् । विप्राशीर्वचनैः पुण्यस्त्रीभिर्दिव्यैर्मनोरमाम् ॥४९४॥
वादित्रनृत्यगीताद्यैर्हृयानंदिनीं शुभाम् । एवंविधां समारोहेन्मिथुनं स्वाग्निवेदिकाम् ॥४९५॥
अष्टधा राशिकूटं च स्वादूडुगणराशयः । राशीशयोनिवर्णाख्यऋतवः पुत्रपौत्रदाः ॥४९६॥
एकराशौ पृथग्धिष्ण्ये दंपत्योः पाणिपीडनम् । उत्तमं मध्यमं भिन्नं राश्यैकत्वं ययोस्तयोः ॥४९७॥
एकर्क्षे त्वेकराशौ हि विवाहः प्राणहानिदः । स्त्रीधिष्ण्यादाद्यनवके स्त्रीदूरमतिनिंदितम् ॥४९८॥
द्वितीये मध्यमं श्रेष्ठं तृतीये नवके नृभम् । तिस्रः पूर्वोत्तरा धातृयाम्यमाहेशतारकाः ॥४९९॥
इति मर्त्यगणे ज्ञेयः स्यादमर्त्यगणः परः । हर्यादित्यार्कवाय्वंत्यमित्राश्वीज्येन्दुतारकाः ॥५००॥
रक्षोगणः पितृत्वाष्ट्रद्विदैवाग्नीन्द्रतारकाः । वसुवारीशमूलाहितारकाभिर्युतास्ततः ॥५०१॥
दंपत्योर्जन्मभे चैकगणे प्रीतिरनेकधा । मध्यमा देवमर्त्यानां राक्षसानां तयोर्मृतिः ॥५०२॥
मृत्युः षष्ठाष्टके पञ्चनवमे त्वनपत्यता । नैःस्व्यं द्विर्द्वादशेऽन्येषु दंपत्योः प्रीतिरुत्तमा ॥५०३॥
एकाधिपे मित्रभावे शुभदं पाणिपीडनम् । द्विर्दादशे त्रिको णे च न कदाचित्षडष्टके ॥५०४॥
अश्वेभमेषसर्पाहिद्द्योतुमेषोतुमूषकाः । आखुगोमहिषव्याघ्रकालीव्याघ्रमृगद्वयम् ॥५०५॥
श्वानः कपिर्बभ्रुयुगं कपिसिंहतुरङ्गमाः । सिंहगोदंतिनो भानां योनयः स्युर्यथाश्विभात् ॥५०६॥
श्वैणं बभ्ररगं मेषवानरौ सिंहवारणम् । गोव्याघ्रमाखुमार्जारं महिषाश्वं च शात्रवम् ॥५०७॥
झषालिकर्कटा विप्रास्त दूर्ध्वा : क्षत्रियादयः । पुंवर्णराशेः स्त्रीराशौ सतिहीने यथाशुभम् ॥५०८॥
चतुस्त्रिद्व्यङ्घ्रिभोत्थायाः कन्यायाश्चाश्विभात्क्रमात् । वह्निभादिन्दुभान्नाडीत्रिचतुःपञ्चपर्वसु ॥५०९॥
गणयेत्संख्यया चैकनाड्यां मृत्युर्न पार्श्वयोः । प्राजापत्यब्राह्मदैवा विवाहाश्चार्षसंयुताः ॥५१०॥
उक्तकाले तु कर्तव्याश्चत्वारः फलदायकाः । गन्धर्वासुरपैशाचराक्षसाख्यास्तु सर्वदा ॥५११॥
चतुर्थमभिजिल्लग्नमुदयर्क्षाच्च सप्तमम् । गोधूलिकं तदुभयं विवाहे पुत्रपौत्रदम् ॥५१२॥
प्राच्या न च कलिङ्गानां मुख्यं गोधूलिकं स्मृतम् । अभिजित्सर्वदेशेषु मुख्यो दोषविनाशकृत् ॥५१३॥
मध्यन्दिनगते भानौ मुहूर्तोऽभिजिदाह्वयः । नाशयत्यखिलान्दोषान्पिनाकी त्रिपुरं यथा ॥५१४॥
पुत्रोद्वाहात्परं पुत्रीविवाहो न ऋतुत्रये । न तयोर्व्रतमुद्वाहान्मङ्गले नान्यमङ्गलम् ॥५१५॥
विवाहश्चैकजन्यानां षण्मासाभ्यन्तरे यदि । असंशयं त्रिभिर्वर्षैस्तत्रैका विधवा भवेत् ॥५१६॥
प्रत्युद्वाहो नैव कार्यो नैकस्मै दुहितृद्वयम् । न चैकजन्ययोः पुंसोरेकजन्ये तु कन्यके ॥५१७॥
नैवं कदाचिदुद्वाहो नैकदा मुंडनद्वयम् । दिवाजातस्तु पितरं रात्रौ तु जननीं तथा ॥५१८॥
आत्मानं संध्ययोर्हन्ति नास्ति गंडे विपर्ययः । सुतः सुता वा नियतं श्वसुरं हन्ति मूलजः ॥५१९॥
तदन्त्यपादजो नैव तथाश्लेषाद्यपादजः । ज्येष्ठान्त्यपादजौ ज्येष्ठं बालो हन्ति न बालिका ॥५२०॥
न बालिकाम्बुमूलर्क्षे मातरं पितरं तथा । सैन्द्री धवाग्रजं हन्ति देवरं तु द्विदैवजा ॥५२१॥
आरभ्योद्वाहदिवसात् षष्ठे वाप्यष्टमे दिने । वधूप्रवेश संपत्त्यै दशमे सप्तमे दिने ॥५२२॥
हायनद्वितयं जन्मभलग्नदिवसानपि । संत्यज्य ह्यतिशुक्रेऽपि यात्रा वैवाहिकी शुभा ॥५२३॥
श्रीप्रदं सर्वगीर्वाणस्थापनं चोत्तरायणे । गीर्वाणपूर्वगीर्वा णमत्रिणोर्दृश्यमानयोः ॥५२४॥
विचैत्रेष्वेव मासेषु माघादिषु च पञ्चसु । शुक्लपक्षेषु कृष्णेषु तदादिष्वष्टसु शुभम् ॥५२५॥

दिनेषु यस्य देवस्य या तितिस्तत्र तस्य च । द्वितीयादिद्वये पञ्चम्यादितस्तिसृषु क्रमात् ॥५२६॥
दशम्यादेष्चतसृषु पौर्णमास्यां विशेषतः । त्र्युत्तरादितिचन्द्रान्त्यहस्तत्रयगुरूडुषु ॥५२७॥
साश्विधातृजलाधीशहरिमित्रवसुष्वपि । कुजवर्जितवारेषु कर्तुः सूर्ये बलप्रदे ॥५२८॥
चन्द्रताराबलोपेते पूर्वाह्णे शोभने दिने । शुभलग्ने शुभांशे च कर्त्तुर्न निधनोदये ॥५२९॥
राशयः सकलाः श्रेष्ठाः शुभग्रहयुतेक्षिताः । पञ्चाष्टके शुभे लग्ने नैधने शुद्धिसंयुते ॥५३०॥
लग्नस्थाश्चंद्रसूर्याराराहुकेत्वर्कसूनवः । कर्त्तुर्मृत्युप्रदाश्चान्ये धनधान्यसुखप्रदाः ॥५३१॥
द्वितीये नेष्टदाः पापाः सौम्याश्चन्द्रश्च वित्तदाः । तृतीये निखिलाः खेटाः पुत्रपौत्रसुखप्रदाः ॥५३३॥
चतुर्थे सुखदाः सौम्याः क्रूराः खेटाश्च दुःखदाः । ग्लानिदाः पञ्चमे क्रूराः सौम्याः पुत्रसुखप्रदाः ॥५३३॥
षष्ठे शुभाः शत्रुदाः स्युः पापाः शत्रुक्षयङ्कराः । व्याधिदाः सप्तमे पापाः सौम्याः शुभफलप्रदाः ॥५३४॥
अष्टमस्थाः खगाः सर्वे कर्तुर्मृत्युप्रदायकाः । धर्मे पापा घ्नन्ति सौम्याः शुभदा मङ्गलप्रदाः ॥५३५॥
कर्मगा दुःखदाः पापा सौम्याश्चन्द्रश्च कीर्तिदाः । लाभस्थानगताः सर्वे भूरिलाभप्रदा ग्रहाः ॥५३६॥
व्ययस्थानगताः शश्वद्बहूव्ययकरा ग्रहाः । हन्त्यर्थहीनाः कर्तारं मन्त्रहीनास्तु ऋत्विजम् ॥५३७॥
स्त्रियं लक्षणहीनास्तु न प्रतिष्ठासमो रिपुः । गुणाधिकतरे लग्ने दोषः स्वल्पतरो यदि ॥५३८॥
सुराणां स्थापनं तत्र कर्तुरिष्टार्थसिद्धिदम् । निर्माणायतनग्रामगृहादीनां समासतः ॥५३९॥
क्षेत्रमादौ परीक्षेत गन्धवर्णरसांशकैः । मधुपुष्पाम्लपिशितगन्धं विप्रानुपूर्वकम् ॥५४०॥
सितं रक्तं च हरितं कृष्णवर्णं यथाक्रमम् । मधुरं कटुकं तिक्तं कषायकरसं क्रमात् ॥४४१॥
अत्यन्तवृद्धिदं नृणामीशानप्रागुदग्प्लवम् । अन्यदिक्षुप्लवे तेषां शश्वदत्यन्तहानिदम् ॥५४२॥
समगर्तारत्निमात्रं खनित्वा तत्र पूरयेत् । अत्यन्तवृद्धिरधिके हीने हानिः समे समम् ॥५४३॥
तथा निशादौ तत्कृत्वा पानीयेन प्रपूरयेत् । प्रातर्दृष्टे जले वृद्धिः समं पङ्के क्षयः क्षये ॥५४४॥
एवं लक्षणसंयुक्तं सम्यक् क्षेत्रं समीक्ष्यते । दिक्साधनाय तन्मध्ये समं मण्डलमालिखेत् ॥५४५॥
द्वादशाङ्गुलकं शङ्कुं स्थाप्येक्षेत्तत्र दिक्त्रमम् । चतुरस्रीकृते क्षेत्रे षड्वर्गपरिशोधिते ॥५४६॥
रेखामार्गे च कर्त्तव्यं प्राकारं सुमनोहरम् । आयामेषु चतुर्दिक्षु प्रागादिषु च सत्स्वपि ॥५४७॥
अष्टावष्टौ प्रतिदिशं द्वाराणि स्युर्यथाक्रमम् । प्रदक्षिणक्रमात्तेषाममूनि च फलानि वै ॥५४८॥
हानिर्नैः स्व्यंधनप्राप्तिर्नृपपूजा महद्धनम् । अतिचौर्यमतिक्रोधो भीतिर्दिशि शचीपतेः ॥५४९॥
निधनं बन्धनं भीतिरर्थाप्तिर्द्धनवर्द्धनम् । अनातङ्कं व्याधिभयं निःसत्त्वं दक्षिणादिशि ॥५५०॥
पुत्रहानिः शत्रुवृद्धिर्लक्ष्मीप्राप्तिर्द्धनागमः । सौभाग्यमतिदौर्भाग्यं दुःखं शोकश्च पश्चिमे ॥५५१॥
कलत्रहानिर्निःसत्त्वं हानिर्द्धान्यधनागमः । संपद्वृद्धिर्मासभीतिरामयं दिशि शीतगोः ॥५५२॥
एवं गृहादिषु द्वारविस्ताराद्द्विगुणोच्छ्रितम् । पश्चिमे दक्षिणे वापि कपाटं स्थापयेद्गृहे ॥५५३॥
प्राकारान्तः क्षितिं कुर्यादिकाशीतिपदं यथा । मध्ये नवपदे ब्रह्मस्थानं तदतिनिन्दितम् ॥५५४॥
द्वात्रिंशदंशाः प्राकारसमीयांशाः समन्ततः । पिशाचांशे गृहारम्भे दुःखशोकभयप्रदः ॥५५५॥
शेषांशाः स्युश्च निर्माणे पुत्रपौत्रधनप्रदाः । शिराः स्युर्वास्तुनो रेखा दिग्विदिग्मध्यसंभवाः ॥५५६॥
ब्रह्मभागाः पिशाचांशाः शिराणां यत्र संहतिः । तत्र तत्र विजानीयाद्वास्तुनो मर्मसंधयः ॥५५७॥
मर्माणि संधयो नेष्टाः स्वस्थेऽप्येवं निवेशने । सौम्यफाल्गुनवैशाखमाघश्रावणकार्तिकाः ॥५५८॥
मासाः स्युर्गृहनिर्माणे पुत्रारोग्यधनप्रदाः । अकारादिषु भागेषु दिक्षु प्रागादिषु क्रमात् ॥५५९॥
खरोश्वोथ हरिः श्वाख्यः सर्पाखुगजशाशकाः । दिग्वर्गाणामियं योनिः स्ववर्गात्पञ्चमो रिपुः ॥५६०॥
साध्यवर्गः पुरः स्थाप्य पृष्ठतः साधकं न्यसेत् । व्यत्यये नाशनं तस्य ऋणमध्यं धनाच्छुभम् ॥५६१॥
आरभ्य साधकं धिष्ण्यं साध्यं यावच्चतुर्गुणम् । विभेजेत्सप्तभिः शेषं साधकस्य धनं तदा ॥५६२॥
विस्तार आयामगुणो गृहस्य पदमुच्यते । तस्माद्धनाधनायर्क्षवारांशाः संख्यया क्रमात् ॥५६३॥
धनाधिकं गृहं वृद्ध्यै ऋणाधिकमशोभनम् । विषमायः शुभायैव समायो निर्धनाय च ॥५६४॥

नमः प्रभावरूपाय प्रभावार्थाय वै नमः ॥६५॥
नमो नमः कारणकारणाय ते मृत्युञ्जयायात्मभवस्वरूपिणे । त्रियंबकाय शितिकण्ठभार्गिणे गौरीयुजे मङ्गलहेतवे नमः ॥६६॥
नाम्नां शतमिदं विप्र पिनाकिगुणकीर्तनम् । पठित्वा दक्षिणीकृत्य प्रायान्निजनिकेतनम् ॥६७॥
एवं कृत्वा व्रतं विप्र महादेवप्रसादतः । भुक्त्वेह भोगानखिलानन्ते शिवपदं लभेत् ॥६८॥
मार्गशुक्लत्रयोदश्यां योऽनगं विधिना यजेत् । त्रिकालमेककालं वा शिवसङ्गमसम्भवम् ॥६९॥
गन्धाद्यैरूपचारैस्तु पूजयित्वा विधानतः । घटे मङ्गलपट्टे वा भोजयेद्द्विजदंपती ॥७०॥
ततश्च दक्षिणां दत्वा स्वयमेकाशनं चरेत् । एवं कृते तु विधिवद्व्रती सौभाग्यभाजनः ॥
जायते भुवि विप्रेन्द्र महादेवप्रसादतः ॥७१॥
पौषशुक्लत्रयोदश्यां समभ्यर्च्याच्युतं हरिम् । घृतपात्रं द्विजेन्द्राय प्रदद्यात्सर्वसिद्धये ॥७२॥
माघशुक्लत्रयोदश्यां समारभ्य दिनत्रयम् । माघस्नानव्रतं विप्र नानाकामफलावहम् ॥७३॥
प्रयागे माघमासे तु त्र्यहं स्नातस्य यत्फलम् । नाश्वमेधसहस्रेण तत्फलं लभते भुवि ॥७४॥
तत्र स्नानं जपो होमो दानं चानन्त्यमश्नुते । फाल्गुने तु सिते पक्षे त्रयोदश्यामुपोषितः ॥७५॥
नमस्कृत्य जगन्नाथं प्रारंभे धनदव्रतम् । महाराजं यक्षपतिं गन्धाद्यैरूपचारकैः ॥७६॥
लिखितं वर्णकैः पट्टे पूजयेद्भक्तिभावतः । एवं शुक्लत्रयोदश्यां प्रतिमासं द्विजोत्तम ॥७७॥
सम्पूजयेत्सोपवासश्चैकभुक्तो भवेन्नरः । ततो व्रतान्ते तु पुनः सौवर्णं धननायकम् ॥७८॥
विधाय निधिभिः सार्द्धं सौवर्णाभिर्द्विजोत्तम । उपचारैः षोडशभिः स्नानैः पञ्चामृतादिभिः ॥७९॥
नैवेद्यैर्विविधैर्भक्त्या पूजयेत्तु समाहितः । ततो धेनुमलङ्कृत्य वस्त्रस्रग्गन्धभूषणैः ॥८०॥
सवत्सां दापयेद्विप्र सम्यग्वेदविदे शुभाम् । सम्भोज्य विप्रान्मिष्टान्नै र्द्वादशाथ त्रयोदश ॥८१॥
गुरुं समर्च्य वस्त्राद्यैः प्रतिमां तां निवेदयेत् । द्विजेभ्यो दक्षणां शक्त्या दत्वा नत्वा विसृज्य च ॥८२॥
स्वयं भुञ्जीत मतिमानिष्टैः सह समाहितः । एवं कृते व्रते विप्र निर्धनः प्राप्य वैभवम् ॥८३॥
मोदते भुवि विख्यातो राजराज इवापरः ॥८४॥

इति श्रीबृहन्नारदीयपुराणे पूर्वभागे बृहदुपाख्याने द्वादशमासस्थितत्रयोदशीव्रतकथनं नाम द्वाविंशदधिकशततमोऽध्यायः ॥१२२॥
आदितः श्लोकानां समष्ट्यङ्काः-१२,८६६+८४=१२,९५०



## ॥ अथ त्रयोविंशत्यधिकशततमोऽध्यायः ॥

सनातन उवाच ॥
शृणु नारद वक्ष्यामि चतुर्दश्या व्रतानि ते । यानि कृत्वा नरो लोके सर्वान्कामानवाप्नुयात् ॥१॥
चैत्रशुक्ल चतुर्दश्यां कुंकुमागरुचन्दनैः । गन्धाद्यैर्वस्त्रमणिभिः कार्यार्या महती शिवे ॥२॥
वितानध्वजछत्राणि दत्वा पूज्याश्च मातरः । एवं कृत्वार्चनं विप्र सोपवासोऽथवैकभुक् ॥३॥
अश्वमेधाधिकं पुण्यं लभते मानवो भुवि । अत्रैव दमनार्चा च कारयेद्गंधपुष्पकैः ॥४॥
समर्पयेत्सुपूर्णायां शिवाय शिवरूपिणे । राधकृष्णचतुर्दश्यां सोपवासो निशागमे ॥५॥
लिङ्गमभ्यर्चयेच्चैवं स्नात्वा धौतांबरः सुधीः । गन्धाद्यैरूपचारैश्च बिल्वपत्रैश्च सर्वतः ॥६॥
दत्वा मन्त्रं द्विजाग्य्राय भुञ्जीत च परेऽहनि । एवमेव तु कृष्णासु सर्वासु द्विजसत्तम ॥७॥
शिवव्रतं प्रकर्तव्यं धनसंतानमिच्छता । राधशुक्लचतुर्दश्यां श्रीनृसिंहव्रतं चरेत् ॥८॥
उपवासविधानेन शक्तोऽशक्तस्तथैकभुक् । निशागमे तु सम्पूज्य नृसिंहं दैत्यसूदनम् ॥९॥
उपचारैः षोडशभिः स्नानैः पञ्चामृतादिभिः । ततः क्षमापयेद्देवं मन्त्रेणानेन नारद ॥१०॥
तप्तहाटककेशान्त ज्वलत्पावकलोचन । वज्राधिकनखस्पर्शदिव्यसिंह नमोऽस्तु ते ॥११॥
इति सम्प्रार्थ्य देवेशं व्रती स्यात्स्थंडिलेशयः । जितेन्द्रियो जितक्रोधः सर्वभोगविवर्जितः ॥१२॥
एवं यः कुरुते विप्र विधिवद्व्रतमुत्तमम् । वर्षे वर्षे स लभते भुक्तभोगो हरेः पदम् ॥१३॥

ॐकारेश्वरयात्रा च कार्यात्रैव मुनीश्वर । दुर्लभं वार्चनं तत्र दर्शनं पापनाशनम् ॥१४॥
किमत्र बहुनोक्तेन पूजाध्यानजपेक्षणम् । यद्भवेत्तत्समुद्दिष्टं ज्ञानमोक्षप्रदं नृणाम् ॥१५॥
अत्र लिङ्गव्रतं चापि कर्त्तव्यं पापनाशनम् । पञ्चामृतैस्तु संस्नाप्य लिङ्गमालिप्य कुंकुमैः ॥१६॥
नैवेद्यैश्च फलैर्धूपैर्दीपैर्वस्त्रविभूषणैः । एवं यः पूजयेत्पैष्टं लिङ्गं सर्वार्थसिद्धिदम् ॥१७॥
भुक्तिं मुक्तिं स लभते महादेवप्रसादतः । ज्येष्ठशुक्लचतुर्दश्यां दिवा पञ्चतपा निशः ॥१८॥
मुखे ददेद्धेमधेनुं रुद्रव्रतमिदं स्मृतम् । शुचिशुक्लचतुर्दश्यां शिवं सम्पूज्य मानवः ॥१९॥
देशकालोद्भवैः पुष्पैः सर्वसम्पदमाप्नुयात् । नभः शुक्लचतुर्दश्यां पवित्रारोपणं मतम् ॥२०॥
तत्स्वशाखोक्तविधिना कर्तव्यं द्विजसत्तम । शताभिमन्त्रितं कृत्वा ततो देव्यै निवेदयेत् ॥२१॥
पवित्रारोपणं कृत्वा नरो नार्यथवा यदि । महादेव्याः प्रसादेन भुक्तिं मुक्तिमवाप्नुयात् ॥२२॥
भाद्रशुक्लचतुर्दश्यामनन्तव्रतमुत्तमम् । कर्त्तव्यमेकभुक्तं हि गोधूमप्रस्थपिष्टकम् ॥२३॥
विपाच्य शर्कराज्याक्तमनन्ताय निवेदयेत् । गन्धाद्यैः प्राक् समभ्यर्च्यः कार्पासं पट्टजं तु वा ॥२४॥
चतुर्दशग्रंथियुतं सूत्रं कृत्वा सुशोभनम् । ततः पुराणमुत्तार्य सूत्रं क्षिप्त्वा जलाशये ॥२५॥
निबध्नीयान्नवं नारी वामे दक्षे पुमान्भुजे । विपाच्य पिष्टपक्वं तत्प्रदद्याद्दक्षिणान्वितम् ॥२६॥
स्वयं च तन्मितं चाद्यादेवं कुर्याद्व्रतोत्तमम् । द्विसप्तवर्षपर्यन्तं तत उद्यापयेत्सुधीः ॥२७॥
मण्डलं सर्वतोभद्रं धान्यवर्णैः प्रकल्प्य च । सुशोभने न्यसेत्तत्र कलशं ताम्रजं मुने ॥२८॥
तस्योपरि न्यसेद्धैमीमनन्तप्रतिमां शुभाम् । पीतपट्टांशुकाच्छन्नां तत्र तां विधिना यजेत् ॥२९॥
गणेशं मातृकाः खेटाँल्लोकपांश्च यजेत्पृथक् । ततो होमं हविष्येण कृत्वा पूर्णाहुतिं चरेत् ॥३०॥
शय्यां सोपस्करां धेनुं प्रतिमां च द्विजोत्तम । प्रदद्याद्गुरवे भक्त्या द्विजानन्यांश्चतुर्दश ॥३१॥
सम्भोज्य मिष्टपक्वान्नैर्दक्षिणाभिः प्रतोषयेत् । एवं यः कुरुतेऽनन्तव्रतं प्रत्यक्षमादरात् ॥३२॥
सोऽप्यनन्तप्रसादेन जायते भुक्तिमुक्तिभाक् । कदलीव्रतमप्यत्र तद्विधानं च मे श्रृ णु ॥३३॥
नरो वा यदि वा नारी रंभामुपवनस्थिताम् । स्नात्वा सम्पूजयेद्गंधपुष्पधान्याङ्कुरादिभिः ॥३४॥
दधिदूर्वाक्षतैर्दद्वीपैर्वस्त्रपक्वान्नसंचयैः । एवं सम्पूज्य मन्त्रेण ततः सम्प्रार्थयेद्व्रती ॥३५॥
अप्सरो मरकन्याभिर्नागकन्याभिरार्चिते । शरीरारोग्यलावण्यं देहि देवि नमोऽस्तु ते ॥३६॥
इति सम्प्रार्थ्य कन्यास्तु चतस्रो वा सुवासिनीः । सम्भोज्यां शुकसिंदूरकज्जलालक्तचर्चिताः ॥३७॥
नमस्कृत्य निजं गेहं समाप्य नियमं व्रजेत् । एवं कृते व्रते विप्र लब्ध्वा सौभाग्यमुत्तमम् ॥३८॥
इह लोके विमानेन स्वर्गलोके व्रजेत्परम् । इषकृष्णचतुर्दश्यां विषशस्त्रांबुवह्निभिः ॥३९॥
सर्पश्वापदवज्राद्यैर्हतानां ब्रह्मघातिनाम् । चतुर्दश्यां क्रियाश्राद्धमेकोद्दिष्टविधानतः ॥४०॥
कर्तव्यं विप्रवर्गं च भोजयेन्मिष्टपक्वकैः । तर्पणं च गवां ग्रासं बलिं चैव श्वकाकयोः ॥४१॥
कृत्वाचम्य स्वयं पश्चाद्भुञ्जीयाद्बन्धुभिः सह । एवं यः कुरुते विप्र श्राद्धं सम्पन्नदक्षिणम् ॥४२॥
स उद्धृत्य पितृन्गच्छेद्देवलोकं सनातनम् । इषशुक्ल चतुर्दश्यां धर्मराजं द्विजोत्तम ॥४३॥
गन्धाद्यैः सम्यगभ्यर्च्य सौवर्णं भोज्य वाडवम् । दद्यात्तस्मै धर्मराजस्त्रायते भुवि नारद ॥४४॥
एवं यः कुरुते धर्मप्रतिमादानमुत्तमम् । स भुक्त्वेह वरान्भोगान्दिवं धर्माज्ञया व्रजेत् ॥४५॥
ऊर्ज्जकृष्णचतुर्दश्यां तैलाभ्यङ्गं विधूदये । कृत्वा स्नात्वार्चयेद्धर्मं नरकादभयं लभेत् ॥४६॥
प्रदोषे तैलदीपांस्तु दीपयेद्यमतुष्टये । चतुष्पथे गृहाद्बाह्यप्रदेशे वा समाहितः ॥४७॥
वत्सरे हेमलम्बयाख्ये मासि श्रीमति कार्तिके । शुक्लपक्षे चतुर्दश्यामरुणाभ्युदयं प्रति ॥४८॥
स्नात्वा विश्वेश्वरो देवो देवैः सह मुनीश्वर । मणिकर्णि क तीर्थे च त्रिपुंड्रं भस्मना दधत् ॥४९॥
स्वात्मानं स्वयमभ्यर्च्य चक्रे पाशुपतव्रतम् । ततस्तत्र महापूजां लिङ्गे गन्धादिभिश्चरेत् ॥५०॥
द्रोणपुष्पैर्बिल्वदलैरर्कपुष्पैश्च केतकैः । पुष्पैः फलैर्मिष्टपक्वैर्नैवेद्यैर्विविधैरपि ॥५१॥
एवं कृत्वैकभुक्तं तु व्रतं विश्वेशतोषणम् । लभते वांछितान्कामानिहामुत्र च नारद ॥५२॥
ब्रह्मकूर्चव्रतं चात्र कर्तव्यमृद्धिमिच्छता । सोपवासः पञ्चगव्यं पिबेद्रात्रौ जितेन्द्रियः ॥५३॥

कपिलायास्तु गोमूत्रं कृष्णाया गोमयं तथा । श्वेतायाः क्षीरमुदितं रक्तायाश्च तथा दधि ॥५४॥
गृहीत्वा कर्बुरायाश्च घृतमेकत्र मेलयेत् । कुशां बुना ततः प्रातः स्नात्वा सन्तर्प्य देवताः ॥५५॥
ब्रह्मणांस्तोषयित्वा च भुञ्जीयाद्वाग्यतः स्वयम् । ब्रह्मकूर्चव्रतं ह्येतत्सर्वपातकनाशनम् ॥५६॥
यच्च बाल्ये कृतं पापं कौमारे वार्द्धकेऽपि यत् । ब्रह्मकूर्चोपवासेन तत्क्षणादेव नश्यति ॥५७॥
पाषाणव्रतमप्यत्र प्रोक्तं तच्छृणु नारद । सोपवासो दिवा नक्तं पाषाणाकारपिष्टकम् ॥५८॥
प्राच्यर्य गन्धादिभिर्गौरीं घृतपक्वमुपाहरेत् । व्रतमेतच्चरित्वा तु यथोक्तं द्विजसत्तम ॥५९॥
ऐश्वर्यसौख्यसौभाग्यरूपाणि प्राप्नुयान्नरः । मार्गशुक्लचतुर्दश्यामेकभुक्तः पुरोदितम् ॥६०॥
निराहारो वृषं स्वर्णं प्राच्यर्य दद्याद्द्विजातये । परेऽह्नि प्रातरुत्थाय स्नात्वा सोमं महेश्वरम् ॥६१॥
पूजयेत्कमलैः पुष्पैर्गंधमाल्यानुलेपनैः । द्विजान्सम्भोज्य मिष्टान्नैस्तोषयेद्दक्षिणादिभिः ॥६२॥
एतच्छिवव्रतं विप्र भुक्तिमुक्तिप्रदायकम् । कर्तृणामुपदेष्टॄणां साह्यानामनुमोदिनाम् ॥६३॥
पौषशुक्लचतुर्दश्यां विरूपाक्षव्रतं स्मृतम् । कपर्दीश्वरसांनिध्यं प्राप्स्याम्यत्र विचिन्त्य च ॥६४॥
स्नात्वागाधजले विप्र विरूपाक्षं शिवं यजेत् । गन्धमाल्यनमस्कारधूपदीपान्नसम्पदा ॥६५॥
तत्स्थं द्विजातये दत्त्वा मोदते दिवि देववत् । माघकृष्णचतुर्दश्यां यमतर्पणमीरितम् ॥६६॥
अनर्काभ्युदिते काले स्नात्वा संतर्पयेद्यमम् । द्विसप्तनामभिः प्रोक्तैः सर्वपापविमुक्तये ॥६७॥
तिलदर्भांबुभिः कार्यं तर्प्पणं द्विजभोजनम् । कृशरान्नं स्वयं चापि तदेवाश्नीत वाग्यतः ॥६८॥
अंत्यकृष्णचतुर्दश्यां शिवरात्रिव्रतं द्विज । निर्जलं समुपोष्यात्र दिवानक्तं प्रपूजयेत् ॥६९॥
स्वयंभुवादिकं लिङ्गं पार्थिवं वा समाहितः । गन्धाद्यैरूपचारैश्च सांबुबिल्वदलादिभिः ॥७०॥
धूपैर्दीपैश्च नैवेद्यैः स्तोत्रपाठैर्जपादिभिः । ततः परेऽह्नि सम्पूज्य पुनरेवोपचारकैः ॥७१॥
सम्भोज्य विप्रान्मिष्टान्नैर्विसृजेल्लब्धदक्षिणान् । एवं कृत्वा व्रतं मर्त्यो महादेवप्रसादतः ॥७२॥
अमर्त्यभोगान् लभते दैवतैः सुसभाजितः । अंत्यशुक्लचतुर्दश्यां दुर्गां सम्पूज्य भक्तितः ॥७३॥
गन्धाद्यैरूपचारैस्तु विप्रान्सम्भोजयेत्ततः । एवं कृत्वा व्रतं विप्र दुर्गायाश्चैकभोजनः ॥७४॥
लभते वांछितान्कामानिहामुत्र च नारद । चैत्रकृष्णचतुर्दश्यामुपवासं विधाय च ॥७५॥
केदारोदकपानेन वाचिमेधफलं भवेत् । उद्यापने तु सर्वासां सामान्यो विधिरुच्यते ॥७६॥
कुंभाश्चतुर्दशैवात्र सपूगाक्षतमोदकाः । सदक्षिणांशुकास्ताम्राम्रामृन्मयाश्चाव्रणा नवाः ॥७७॥
तावंतो वशदण्डाश्च पवित्राण्यासनानि च । पात्राणि यज्ञसूत्राणि तावत्येव हि कल्पयेत् ॥७८॥
शेषं प्रागुक्तवत्कुर्याद्वित्तशाठ्यविवर्जितः ॥७९॥

इति श्रीबृहन्नारदीयपुराणे पूर्वभागे बृहदुपाख्याने चतुर्थभागे द्वादशमासस्थितचतुर्दशीव्रतवर्णनं नाम त्रयोविंशत्यधिकशततमोऽध्यायः ॥१२३॥

आदितः श्लोकानां समष्ट्यङ्काः-१२,९५०+७९=१३,०२९



## ॥ अथ चतुर्विंशत्यधिकशततमोऽध्यायः ॥

सनातन उवाच ॥

अथ नारद वक्ष्यामि श्रृणु पूर्णाव्रतानि ते । यानि कृत्वा नरो नारी प्राप्नुयात्सुखसंततिम् ॥१॥
चैत्रपूर्णा तु विप्रेन्द्र मन्वादिः समुदाहृता । अस्यां सान्नोदकं कुंभं प्रदद्यात्सोमतुष्टये ॥२॥
वैशाख्यामपि पूर्णायां दानं सर्वस्य सर्वदम् । यद्यद्द्रव्यं ददेद्विप्रे तत्तदाप्नोति निश्चितम् ॥३॥
धर्मराजव्रतं चात्र कथितं तन्निशामय । श्रृतान्नमुदकुंभं च वैशाख्यां वै द्विजोत्तमे ॥४॥
दद्याद्गोदानफलदं धर्मराजस्य तुष्टये । अत्र कृष्णाजिनं दद्यात्सखुरं च सश्रृङ्गकम् ॥५॥
तिलैः सह समाच्छाद्य वस्त्रैर्हेम्ना द्विजातये । यस्तु कृष्णाजिनं दद्यात्सत्कृत्य विधिपूर्वकम् ॥६॥
सर्वशास्त्रविदे सप्तद्वीपभूमिप्रदः स वै । मोदते विष्णु लोके हि यावच्चन्द्रार्कतारकम् ॥७॥

कुंभान्स्वच्छजलैः पूर्णान्हिरण्येन समन्वितान् । यः प्रदद्याद्द्विजाग्रेभ्यः स न शोचति कर्हिचित् ॥८॥
अथ ज्येष्ठस्य पूर्णायां वटसावित्रिकं व्रतम् । सोपवासा वटं सिञ्चेत्सलिलैरमृतोपमैः ॥९॥
सूत्रेण वेष्टयेच्चैव सशताष्टप्रदक्षिणम् । ततः सम्प्रार्थयद्देवीं सावित्रीं सुपतिव्रताम् ॥१०॥
जगत्पूज्ये जगन्मातः सावित्रि पतिदैवते । पत्या सहावियोगं मे वटस्थे कुरु ते नमः ॥११॥
इति सप्रार्थ्य या नारी भोजयित्वा परेऽहनि । सुवासिनीः स्वयं भुञ्ज्यात्सा स्यात्सौभाग्यभागिनी ॥१२॥
आषाढस्य तु पूर्णायां गोपद्मव्रतमुच्यते । चतुर्भुजं महाकायं जांबूनदसमप्रभम् ॥१३॥
शङ्खचक्रगदापद्मरमागरुडशोभितम् । सेवितं मुनिभिर्देवैर्यक्षगन्धर्वकिन्नरैः ॥१४॥
एवंविधं हरिं तत्र स्नात्वा पूजां समाचरेत् । पौरुषेणैव सूक्तेन गन्धाद्यैरूपचारकैः ॥१५॥
आचार्यं वस्त्रभूषाद्यैस्तोषयेत्स्निग्धमानसः । भोजयेन्मिष्टपक्वान्नैर्द्विजानन्यांश्च शक्तितः ॥१६॥
एवं कृत्वा व्रतं विप्र प्रसादात्कमलापतेः । ऐहिकामुष्मिकान्कामांल्लभते नात्र संशयः ॥१७॥
कोकिलाव्रतमप्यत्र प्रोक्तं तद्विधिरुच्यते । पूर्णिमायां समारभ्य व्रतं स्नायाद्बहिर्जले ॥१८॥
पूर्णान्तं श्रावणे मासि गौरीरूपां च कोकिलाम् । स्वर्णपक्षां रत्ननेत्रां प्रवालमुखपङ्कजाम् ॥१९॥
कस्तूरीवर्णसंयुक्तामुत्पन्नां नन्दने वने । चूतचंपकवृक्षस्थां कलगीतनिनादिनीम् ॥२०॥
चिन्तयेत्पार्वतीं देवीं कोकिलारूपधारिणीम् । गन्धाद्यैः प्रत्यहं प्राच्येल्लिखितां वर्णकैः पटे ॥२१॥
ततो व्रतान्ते हैमीं वा तिलपिष्टमयीं द्विज । दद्याद्विप्राय मन्त्रेण भक्त्या सस्वर्णदक्षिणाम् ॥२२॥
देवीं चैत्ररथोत्पन्ने कोकिले हरवल्लभे । सम्पूज्य दत्ता विप्राय सर्वसौख्यकरी भव ॥२३॥
द्विजं सुवासिनीस्त्रिंशदेकां वा भोजयेत्ततः । वस्त्रादिदक्षिणां शक्त्या दत्वा नत्वा विसर्जयेत् ॥२४॥
एवं या कुरुते नारी कोकिलाव्रतमुत्तमम् । सा लभेत्सुखसौभाग्यं सप्तजन्मसुनारद ॥२५॥
अथ श्रावणपूर्णायां वेदोपाकरणं स्मृतम् । यजुर्भिस्तत्र कर्त्तव्यं देवर्षिपितृतर्पणम् ॥२६॥
ऋषीणां पूजनं चापि स्वशाखोक्तविधानतः । बह्वृचैस्तु चतुर्दश्यां सामगैर्भाद्रगे करे ॥२७॥
रक्षाविधानं च तथा कर्तव्यं विधिपूर्वकम् ॥२८॥
सिद्धार्थाक्षतराजिकाश्च विधृता रक्तांशुकांशे सिताः कौसुंभेन च तन्तुनाथ सलिलैः प्रक्षाल्य कांस्ये धृताः ।
गन्धाद्यैरभिपूज्य देवनिकरान्सम्प्रार्थ्य विष्ण्वादिकान्बध्नीयाद्द्विजहस्ततः प्रमुदितो नत्वा प्रकोष्ठे स्वके ॥२९॥
ततस्तु दक्षिणां दत्वा द्विजेभ्योऽध्यायमाचरेत् । विसृज्य च ऋषीन्सप्त धारयेद्ब्रह्मसूत्रकम् ॥३०॥
रंजितं कुंकुमाद्यैश्च नवीनं निर्मितं स्वयम् । शक्त्या सम्भोज्य विप्राग्र्यानेकभुक्तं समाचरेत् ॥३१॥
कृते ह्यस्मिन्व्रते विप्र वार्षिकं कर्म वैदिकम् । विस्मृतं विधिहीनं च न कृतं सुकृतं भवेत् ॥३२॥
प्रौष्ठपद्यां पौर्णमास्यामुमामाहेश्वरव्रतम् । एकभुक्तश्च यस्तां तु शिवं सम्पूज्य यत्नतः ॥३३॥
कृताञ्जलिः प्रार्थयेच्छ्वः करिष्ये च व्रतं प्रभो । एवं विज्ञाप्य देवं तु गृह्णीयाद्व्रतमुत्तमम् ॥३४॥
रात्रौ देवांतिके सुप्वा उत्थायापरयामके । कृतमैत्रादिनित्यस्तु भस्मरुद्राक्षधृक् ततः ॥३५॥
पूजयेच्छंकरं सम्यगुपचारैः पृथग्विधैः । बिल्वपत्रैः सुगन्धाढ्यैर्नैवेद्यैर्धूपदीपकैः ॥३६॥
ततश्चोपवसेद्विद्वानाप्रदोषं विधूदये । पुनः सम्पूज्य तत्रैव रात्रौ जागरणं चरेत् ॥३७॥
एवं पञ्चदशाब्दान्तं कृत्वा व्रतमतन्द्रितः । वर्षे वर्षे तदुत्सर्गे विदध्याद्विधिपूर्वकम् ॥३८॥
उमायाश्च महेशस्य सौवर्णी प्रतिमाद्वयम् । हैमा रौप्या मृन्मयाश्च घटाः पञ्चदशोत्तमाः ॥३९॥
तत्रैकस्मिन्घटे स्थाप्यं सवस्त्रं प्रतिमाद्वयम् । पञ्चामृतेन संस्नाप्य जलैः शुद्धैस्ततोऽर्चयेत् ॥४०॥
उपचारैः षोडशभिस्ततः पञ्चदश द्विजान् । भोजयेच्चैव मिष्टान्नैर्दद्यात्तेभ्यश्च दक्षिणाम् ॥४१॥
कुंभमेकैकमीशस्य मूर्त्याढ्यं गुरवे ऽर्पयेत् । एवं कृत्वा व्रतं चैव उमामाहेश्वराभिधम् ॥४२॥
जायते भुवि विख्यातो निधानं सर्वसम्पदाम् । अथास्मिन्नेव दिवसे शक्रव्रतमपि स्मृतम् ॥४३॥
प्रातः स्नात्वा विधानेन सम्पूज्य सुरनायकम् । गन्धाद्यैरूपचारैस्तु नैवेद्यानां च राशिभिः ॥४४॥
ततो निमन्त्रितान्विप्रान्सम्भोज्य विधिवद्द्विज । समागतांस्तथैवान्यान्दीनानाथांश्च भोजयेत् ॥४५॥
एतच्छक्रव्रतं विप्र कर्तव्यं प्रतिवार्षिकम् । राज्ञा वा धनिनान्येन धान्यनिष्पत्तिमिच्छता ॥४६॥

आश्विने मासि पूर्णायां व्रतं कोजागराभिधम्। तेन स्नात्वा विधानेन सोपवासो जितेन्द्रियः ॥४७॥
लक्ष्मीमभ्यर्च्य सौवर्णीं घटे सं स्थाप्य ताम्रजे । मृन्मये वा सवस्त्रान्तामुपचारैः पृथग्विधम्॥४८॥
ततः सायन्तने कालेऽभ्युदिते तारकाधिपे । हैमान्रौप्यान्मृन्मयान्वा घृतपूर्णान्प्रदीपयेत्॥४९॥
लक्षं तदर्धमयुतं सहस्रं शतमेव वा । घृतशर्करसंमिश्रं विपाच्य बहु पायसम्॥५०॥
बहुपात्रेषु संस्थाप्य कौमुद्यां शीतदीधितेः । याममात्रे गते रात्र्या लक्ष्म्यै तद्विनिवेदयेत्॥५१॥
ततः सम्भोजयेत्तेन विप्रान्भक्त्या ततश्च तैः । सहैव जागरं कुर्यान्नृत्यगीतसुमङ्गलैः ॥५२॥
ततोऽरुणोदये स्नात्वा तां मूर्तिं गुरवेऽर्पयेत्। अस्यां रात्रौ महालक्ष्मीर्वराभयकरांबुजा ॥५३॥
निशीथे चरते लोके को जागर्ति धरातले । तस्मै वित्तं प्रयच्छामि जाग्रते पूजकाय मे ॥५४॥
वर्षे वर्षे कृतं चैतद्व्रतं लक्ष्मीप्रतोषणम् । समृद्धिमैहिकीं दद्याद्देहान्ते पारलौकिकीम्॥५५॥
कार्तिक्यां पूर्णिमायां तु कुर्यात्कार्तिकदर्शनम्। विप्रत्वलब्धये भूयः सर्वशत्रुजयाय च ॥५६॥
अत्रैव दीपदानेन विधेयस्त्रिपुरोत्सवः । निशामुखे द्विजश्रेष्ठ सर्वजीवसुखावहः ॥५७॥
कीटाः पतंगा मशकाश्च वृक्षा जले स्थले ये विचरन्ति जीवाः । दृष्ट्वा प्रदीपान्नहि तेऽपि जन्मिनः पुनश्च मुक्तिं हि लभंत एव च ॥५८॥
अत्र चन्द्रोदये विप्र सम्पूज्याः कृत्तिकाश्च षट् ॥५९॥
कार्तिकेयस्तथा खड्गी वरुणश्च हुताशनः । गन्धपुष्पैस्तथा धूपदीपैर्नैवेद्यविस्तरैः ॥६०॥
परमान्नैः फलैः शाकैर्वह्निब्र ाह्मणतर्पणैः । एवं देवान्समभ्यर्च्य दीपो देयो गृहाद्बहिः ॥६१॥
दीपोपान्ते तथा गर्तश्चतुरस्रो मनोहरः । चतुर्दशाङ्गुलः कार्यः सेच्यश्चंदनवारिणा ॥६२॥
गवां क्षीरेण सम्पूर्य हैमं तत्र विनिक्षिपेत्। मुक्तानेत्रसमायुक्तं मत्स्यं सर्वांगशोभनम्॥६३॥
महामत्स्याय च नम इति मन्त्रं समुच्चरन्। गन्धाद्यैस्तत्र सम्पूज्य द्विजाय प्रतिपादयेत्॥६४॥
क्षीरसागरदानं ते मयोक्तं द्विजसत्तम । दानस्यास्य प्रभावेण मोदते हरिसन्निधौ ॥६५॥
अत्र कृत्वा वृषोत्सर्गं व्रतं नक्तं च नारद । रुद्रलोकमवाप्नोति नात्र कार्या विचारणा ॥६६॥
मार्गशीर्ष्यां पूर्णिमायां स्वर्णाढ्यं लवणाढकम्। देवं विप्राय शान्ताय सर्वकामसमृद्धये ॥६७॥
इदं जगत्पुरा लक्ष्म्या त्यक्तमासीत्ततो हरिः । पु रन्दरश्च सोमश्च तथा तिष्यो बृहस्पतिः ॥६८॥
पञ्चैते पुष्ययुक्तायां पौ र्णमास्यां जगद्बलात्। अलङ्कृतं पु नश्चक्रुः सौभाग्योत्सवकेलिभिः ॥६९॥
तस्मान्नरः पुष्ययोगे सर्वसौभाग्यवृद्धये । गौरसर्षपकल्केन समालभ्य स्वकां तनुम्॥७०॥
स्नायात्सर्वौषधिजलैर्धारयेच्च नवांशुके । दृष्ट्वा च मङ्गलं द्रव्यं स्पृष्ट्वा नत्वा ततोऽर्चयेत्॥७१॥
हरिशुक्रेंदुपुष्येज्यान्गन्धाद्यरूपचारकैः । विधाय होमं विप्रांश्च तर्पयेत्पायसाशनैः ॥७२॥
एतत्कृत्वा व्रतं विप्र रमाप्रीतिविवर्द्धनम्। अलक्ष्मीनाशनं चैव मोदतेह परत्र च ॥७३॥
पौर्णमास्यां ततो माघ्यां तिलकार्पासकंबलम्। रत्नानि कंचुकोष्णीषपादत्राणानि वा धनम्॥७४॥
दत्वा प्रमोदते स्वर्गे दानं वित्तानुसारतः । यस्त्वत्र शंकरं देवं पूजयेद्विधिपूर्वकम्॥७५॥
सोऽश्वमेधफलं प्राप्यविष्णुलोके महीयते । फाल्गुने पूर्णिमायां तु होलिकापूजनं मतम्॥७६॥
सञ्चयं सर्वकाष्ठानामुपलानां च कारयेत्। तत्राग्निं विधिवद्धुत्वा रक्षोघ्नैर्मन्त्रविस्तरैः ॥७७॥
“असृक्पाभयसंत्रस्तैः कृता त्वं होलि बालिशैः । अतस्त्वां पूजयिष्यामि भूते भूतिप्रदा भव” ॥७८॥
इति मन्त्रेण सन्दीप्य काष्ठादिक्षेपणैस्ततः । परिक्रम्योत्सवः कार्यो गीतवादित्रनिःस्वनैः ॥७९॥
होलिका राक्षसी चेयं प्रह्लादभयदायिनी । ततस्तां प्रदहन्त्येवं काष्ठाद्यैर्गीतमङ्गलैः ॥८०॥
संवत्सरस्य दाहोऽयं कामदाहो मतान्तरे । इति जानीहि विप्रेन्द्र लोके स्थितिरनेकधा ॥८१॥
पक्षान्ते द्वे पृथग्वैवे ततोऽमाव्रतमुच्यते । पृथक्छृ णुष्व मे विप्र पितृणामतिवल्लभम् ॥८२॥
चैत्रवैशाखयोस्तत्र दर्शे पितृसमर्चनम्। पार्व णेन विधानेन श्राद्धं वित्तानुसारतः ॥८३॥
द्विजानां भोजनं दानं गवादीनां विशेषतः । सर्वमासेष्वमायां वै बहुपुण्यप्रदं यतः ॥८४॥
ज्येष्ठामायां व्रतं प्रोक्तं सावित्र्याः कस्य नारद । विधानं ज्येष्ठपूर्णावदिहापि परिकीर्तितम्॥८५॥
शुचौ नभसि भाद्रे च मासे पूर्णां तिके द्विज । पितृश्राद्धं दानहोमसुरार्चानन्तयश्नुते ॥८६॥

भाद्रदर्शेऽपराह्ने तु तिलक्षेत्रसमुद्भवान् । विरिञ्चिमनुनामंत्र्य हुंफट् छिन्नान्कुशान् द्विज ॥८७॥
सर्वदा सर्वकार्येषु योजयेदेकदाऽपरान् । इषामायां विशेषेण पितृणां श्राद्धतर्पणम् ॥८८॥
विधेयं जाह्नवीतोये मुक्तिदं च गयास्थले । ऊर्जामायां दीपदानं देवा गारगृहेषु च ॥८९॥
नद्यारामतडागेषु चैत्यगोष्ठापणेषु च । समर्चनं तथा लक्ष्म्याः स्वर्णरौप्ये कृताकृते ॥९०॥
द्यूतं च वर्षफलदं जये चापिपराजये । गवां पूजात्र विहिता शृंगाद्यङ्गानुरंजनैः ॥९१॥
यवसान्नादिदानैश्च नमस्कारप्रदक्षिणैः । मार्गेऽपि पितृपूजा स्याच्छ्द्धैर्ब्राह्मणभोजनैः ॥९२॥
ब्रह्मचर्यादि नियमैर्जपहोमार्चनादिभिः । पौषे माघे च विप्रेन्द्र पितृश्राद्धं फलाधिकम् ॥९३॥
अमायां कर्णपातार्कयुक्तायां तु गयाधिकम् । फाल्गुने केवलं श्राद्धं द्विजानां भोजनं तथा ॥९४॥
दानादि सर्वफलदं दर्शे सोमेऽधिकं फलम् । इत्थं संक्षेपतः प्रोक्तं तिथिकृत्यं मुने तव ॥९५॥
सर्वत्रापि विशेषोऽस्ति स पुराणान्तरे स्थितः ॥९६॥

इति श्रीबृहन्नारदीयपुराणे पूर्वभागे बृहदुपाख्याने चतुर्थपादे द्वादशमासस्थितपौर्णमास्यमावास्याव्रतकथनं नाम चतुर्विंशत्यधिकशततमोऽध्यायः ॥१२४॥

आदितः श्लोकानां समष्ट्यङ्काः-१३,०२९+९६=१३,१२५



## ॥ अथ पञ्चविंशत्यधिकशततमोऽध्यायः ॥

सूत उवाच ॥

इत्येवमुक्त्वा मुनिना हि पृष्टास्ते वै कुमाराः किल नारदेन । सम्पूजिताः शास्त्रविदां वरिष्ठाः कृताह्निका जग्मुरुमेशलोकम् ॥१॥
तत्रेशमभ्यर्कनिभैर्मुनींद्रैः श्रीवामदेवादिभिरर्चितांघ्रिम् । सुरासुरेन्द्रैरभिवंद्यमुग्रं नत्वाज्ञया तस्य निषेदुरुर्व्याम् ॥२॥
श्रुत्वाथ तत्राखिलशास्त्रसारं ईश्वागमं ते पशुपाशमोक्षणम् । जग्मुस्ततो ज्ञानघनस्वरूपा नत्वा पुरारिं स्वपितुर्निकाशम् ॥३॥ ।
तत्पादपद्मे प्रणतिं विधाय पित्रापि सत्कृत्य सभाजितास्ते । लब्ध्वाशिषोऽद्यापि चरन्ति शश्वल्लोकेषु तीर्थानि च तीर्थभूताः ॥४॥
जग्मुस्ततो वै बदरीवनान्ते सुरेन्द्रवर्गैरूपसेव्यमानम् । दध्युश्चिरं विष्णुपदाब्जमव्ययं ध्यायन्ति यद्यतयो वीतरागाः ॥५॥
नारदोऽपि ततो विप्रा कुमारेभ्यः समीहितम् । लब्ध्वा ज्ञानं सविज्ञानं भृशं प्रीतमना ह्यभूत् ॥६॥
स तस्मात्स्वर्णदीतीरादागत्य पितुरन्तिके । प्रणम्य सत्कृतः पित्रा ब्रह्मणा निषसाद च ॥७॥
कुमारेभ्यः श्रुतं यच्च ज्ञानं विज्ञानसंयुतम् । वर्णयामास तत्त्वेन सोऽपि श्रुत्वा मुमोद च ॥८॥
अथ प्रणम्य शिरसा लब्धाशीर्मुनिसत्तमः । आजगाम च कैलासं मुनिसिद्धनिषेवितम् ॥९॥
नानाश्चर्यमयं शश्वत्सर्वर्त्तुकुसुमद्रुमैः । मन्दारैः पारिजातैश्च चंपकाशोकवंजुलैः ॥१०॥
अन्यैश्च विविधैर्वृक्षैर्नानापक्षिगणावृतैः । वातो द्धूतशिखैः पांथानाह्वयद्भिरिवावृतम् ॥११॥
नानामृगगणाकीर्णं सिद्धकिन्नरसङ्कुलम् । सरोभिः स्वच्छसलिलैर्लसत्कांचनपङ्कजैः ॥१२॥
शोभितं सारसैर्हंसैश्चक्राह्वाद्यैर्निनादितम् । स्वर्द्धनीपातनिर्घुष्टं क्रीडद्भिश्चाप्सरोगणैः ॥१३॥
सलिलेऽलकनन्दायाः कुचकुंकुमपिङ्गले । आमोदमुदितैर्नागैः सलिलैः पुष्करो द्धृतैः ॥१४॥
स्नापयद्भिः करेणूश्च कलभांश्च समाकुले । अथ श्वेताभ्रसदृशे श्रृङ्गे तस्य च भूभृतः ॥१५॥
वटं कालाभ्रसदृशं ददर्श शतयोजनम् । तस्याधस्तात्समासीनं योगिमण्डलमध्यगम् ॥१६॥
कपर्दिनं विरूपाक्ष व्याघ्रचर्मांबरावृतम् । भूतिभूषितसर्वांगं नागभूषणभूषितम् ॥१७॥
रुद्राक्षमालया शश्वच्छोभितं चन्द्रशेखरम् । तं दृ ष्ट्वा नारदो विप्रा भक्तिनम्रात्मकन्धरः ॥१८॥
ननाम शिरसा तस्य पादयोर्जगदीशितुः । ततः प्रसन्नमनसा स्तुत्वा वाग्भिर्वृषध्वजम् ॥१९॥
निषसादाज्ञया स्थाणोः सत्कृतो योगिभिस्तदा । अथापृच्छच्च कुशलं नारदं जगतां गुरुः ॥२०॥
स च प्राह प्रसादेन भवतः सर्वमस्ति मे । सर्वेषां योगिवर्याणां श्रृण्वतां तत्र वाडवाः ॥२१॥
पप्रच्छ शाम्भवं ज्ञानं पशुपाशविमोक्षणम् । स शिवः सादरं तस्य भक्त्या संतुष्टमानसः ॥२२॥
योगमष्टाङ्गसंयुक्तं प्राह प्रणतवत्सलः । स लब्ध्वा शाम्भवं ज्ञानं शंकराल्लोकशंकरात् ॥२३॥

सुप्रसन्नमना नत्वा ययौ नारायणांतिकम् । तत्रापि नारदोऽभीक्ष्णं गतागतपरायणः ॥२४॥
सेवितं योगिभिः सिद्धैर्नारायणमतोषयत् । एतद्वः कीर्तितं विप्रा नारदीयं महन्मया ॥२५॥
उपाख्यानं वेदसमं सर्वशास्त्रनिदर्शनम् । चतुष्पादसमायु क्तं श्रृण्वतां ज्ञानवर्द्धनम् ॥२६॥
य एतत्कीर्तयेद्विप्रा नारदीयं शिवालये । समाजे द्विजमुख्यानां तथा केशवमन्दिरे ॥२७॥
मथुरायां प्रयागे च पुरुषोत्तमसन्निधौ । सेतौ काञ्च्यां कुशस्थल्यां गङ्गाद्वारे कुशस्थले ॥२८॥
पुष्करेषु नदीतीरे यत्र कुत्रापि भक्तिमान् । स लभेत्सर्वयज्ञानां तीर्थानां च फलं महत् ॥२९॥
दानानां चापि सर्वेषां तपसां वाप्यशेषतः । उपवासपरो वापि हविष्याशी जितेन्द्रियः ॥३०॥
श्रोता चैव तथा वक्ता नारायणपरायणः । शिवभक्तिरतो वापि श्रृण्वन् सिद्धिमवाप्नुयात् ॥३१॥
अस्मिन्ननशेषपुण्यानां सिद्धीनां च समुद्भवः । कथितः सर्वपापघ्नः पठतां श्रृण्वतां सदा ॥३२॥
कलिदोषहरं पुंसां सर्वसम्पत्तिवर्द्धनम् । सर्वेषामीप्सितं चेदं सर्वज्ञानप्रकाशकम् ॥३३॥
शैवानां वैष्णवानां च शाक्तानां सूर्यसेविनाम् । तथैव गाणपत्यानां वर्णाश्रमवतां द्विजाः ॥३४॥
तपसां च व्रतानां च फलानां सम्प्रकाशकम् । मन्त्राणां चैव यंत्राणां वेदाङ्गानां विभागशः ॥३५॥
तथागमानां सांख्यानां वेदानां चैव सङ्ग्रहम् । य एतत्पठते भक्त्या श्रृणुयाद्वा समाहितः ॥३६॥
स लभेद्वांछितान्कामान्देवादिष्वपि दुर्लभान् । श्रुत्वेदं नारदीयं तु पुराणं वेदसंमितम् ॥३७॥
वाचकं पूजयेद्भक्त्या धनरत्नांशुकादिभिः । भूमिदानैर्गवां दानै रत्नदानैश्च संततम् ॥३८॥
हस्त्यश्वरथदानैश्च प्रीणयेत्सततं गुरुम् । यस्तु व्याकुरुते विप्राः पुराणं धर्मसङ्ग्रहम् ॥३९॥
चतुर्वर्गप्रदं नृणां कोऽन्यस्तत्सदृशो गुरुः । कायेन मनसा वाचा धनाद्यैरपि संततम् ॥४०॥
प्रियं समाचरेत्तस्य गुरोर्द्धर्मोपदेशिनः । श्रुत्वा पुराणं विधिवद्धोमं कृत्वा सुरार्चनम् ॥४१॥
ब्राह्मणान्भोजयेत्पश्चाच्छतं मिष्टान्नपायसैः । दक्षिणां प्रददेच्छक्त्या भक्त्या प्रीयेत माधवः ॥४२॥
यथा श्रेष्ठा नदी गङ्गा पुष्करं च सरो यथा । काशी पुरी नगो मेरुर्देवो नारायणो हरिः ॥४३॥
कृतं युगं सामवेदो धेनुर्विप्रोऽन्नमंबु च । मार्गो मृगेंद्रः पुरुषोऽश्वत्थः प्रह्लाद आननम् ॥४४॥
उच्चैः श्रवा वसंतश्च जपः शेषो ऽर्यमा धनुः । पावको विष्णुरिन्द्रश्च कपिलो वाक्पतिः कविः ॥४५॥
अर्जुनो हनुमान्दर्भश्चित्तं चित्ररथोंऽबुजम् । उर्वशी कांचनं यद्वच्छ्रेष्ठाश्चैते स्वजातिषु ॥४६॥
तथैव नारदीयं तु पुराणेषु प्रकीर्तितम् । शान्तिरस्तु शिवश्चं चास्तु सर्वेषां वो द्विजोत्तमाः ॥४७॥
गमिष्यामि गुरोः पांर्श्वं व्यासस्यामिततेजसः । इत्युक्त्वाभ्यर्चितः सूतः शौनकाद्यैर्महात्मभिः ॥४८॥
आज्ञप्तश्च पुनः सर्वैर्दर्शनार्थं गुरोर्ययौ । तेऽपि सर्वे द्विजश्रेष्ठाः शौनकाद्याः समाहिताः ॥
श्रुतं सम्यगनुष्ठाय तत्र तस्थुश्च सत्रिणः ॥४९॥
कलिकल्मषविषनाशनं हरिं यो जपपूजनविधिभेषजोपसेवी । स तु निर्विषमनसा समेत्य यागं लभते सतमभीप्सितं हि लोकम् ॥५०॥

इति श्रीबृहन्नारदीयपुराणे बृहदुपाख्याने चतुर्थपादे पुराणमहिमावर्णनं नाम पञ्चविंशोत्तरशततमोऽध्यायः ॥१२५॥

आदितः श्लोकानां समष्ट्यङ्काः-१३,१२५+५०=१३,१७५



## ॥ समाप्तोयं बृहन्नारदीयपुराणस्य पूर्वभागः ॥



## ॥ अथोत्तरभागः ॥

## ॥ श्रीगणेशाय नमः ॥

## ॥ श्रीकृष्णाय नमः ॥

## ॥ अथ प्रथमोऽध्यायः ॥

पान्तु वो जलदश्यामाः शार्ङ्गज्याघातकर्कशाः । त्रैलोक्यमण्डपस्तंभाश्चत्वारो हरिबाहवः ॥१॥
सुरा सुरशिरो रत्ननिघृष्टमणिरञ्जितम् । हरिपादांबुजद्वन्द्वमभीष्टप्रदमस्तु नः ॥२॥
मान्धातोवाच ।
पापेन्धनस्य घोरस्य शुष्कार्द्रस्य द्विजोत्तम । को वह्निर्दहते तस्य तद्भवान्वक्तुमर्हति ॥३॥
नाज्ञातं त्रिषु लोकेषु चतुर्मुखसमुद्भव । विद्यते तव विप्रेन्द्र त्रिविधस्य सुनिश्चितम् ॥४॥
अज्ञातं पातकं शुष्कं ज्ञातं चार्द्रमुदाहृतम् । भाव्यं वाप्यथवातीतं वर्तमानं वदस्व नः ॥५॥
वह्निना केन तद्भस्म भवेदेतन्मतं मम ।
वसिष्ठ उवाच ॥
श्रूयतां नृपशार्दूल वह्निना येन तद्भवेत् ॥६॥ भस्म शुष्कं तथार्द्रं च पापमस्य ह्यशेषतः ॥७॥
अवाप्य वासरं विष्णोर्यो नरः संयतेन्द्रियः । उपवासपरो भूत्वा पूजयेन्मधुसूदनम् ॥८॥
स धात्रीस्नानसहितो रात्रौ जागरणान्वितः । विशोधयति पापानि कितवो हि यथा धनम् ॥९॥
एकदाशीसमाख्येन वह्निना पातकेन्धनम् । भस्मतां याति राजेंद्र अपि जन्मशतोद्भवम् ॥१०॥
नेदृश पावनं किञ्चिन्नराणां भूप विद्यते । यादृशं पद्मनाभस्य दिनं पातकहानिदम् ॥११॥
तावत्पापानि देहेऽस्मिंस्तिष्ठन्ति मनुजाधिप । यावन्नोपवसेज्जन्तुः पद्मनाभदिमं शुभम् ॥१२॥
अश्वमेधसहस्राणि राजसूयशतानि च । एकादश्युपवासस्य कलां नार्हन्ति षोडशीम् ॥१३॥
एकादशेन्द्रियैः पापं यत्कृतं भवति प्रभो । एकादश्युपवासेन तत्सर्वं विलयं व्रजेत् ॥१४॥
एकादशीसमं किंचित्पापनाशं न विद्यते । व्याजेनापि कृता राजन्न दर्शयति भास्करिम् ॥१५॥
स्वर्गमोक्षप्रदा ह्येषा राज्यपुत्रप्रदायिनी । सुकलत्रप्रदा ह्येषा शरीरारोग्यदायिनी ॥१६॥
न गङ्गा न गया भूप न काशी न च पुष्करम् । न चापि कैरवं क्षेत्रं न रेवा न च देविका ॥१७॥
यमुना चन्द्रभागा च पुण्या भूप हरेर्दिनात् । अनायासेन राजेन्द्र प्राप्यते हरिमन्दिरम् ॥१८॥
रात्रौ जागरणं कृत्वा समुपोष्य हरेर्दिनम् । सर्वपापविनिर्मुक्तो विष्णुलोके व्रजेन्नरः ॥१९॥
दशैव मातृके पक्षे दश राजेन्द्र पैतृके । भार्याया दश पक्षे च पुरुषानु द्धरेत्तथा ॥२०॥
आत्मानमपि राजेन्द्र स नयेद्वैष्णवं पुरम् । चिन्तामणिसमा ह्येषा अथवापि निधेः समा ॥२१॥
सङ्कल्पपादपप्रख्या वेदवाक्योपमाथवा । द्वादशीं ये प्रपन्ना हि नरा नरवरोत्तम ॥२२॥
ते द्वन्द्वबाहवो जाता नागारिकृतवावाहनाः । स्रग्विणः पीतवस्त्राश्च प्रयान्ति हरिमन्दिरम् ॥२३॥
एष प्रभावो हि मया द्वादश्याः परिकीर्तितः । पापेन्धनस्य घोरस्य पावकाख्यो महीपते ॥२४॥
हरेर्दिनं सदोपोष्यं नरैर्धर्मपरायणैः । इच्छद्भिर्विपुलान्भोगान्पुत्रपौत्रादिकाँस्तथा ॥२५॥
हरिदिनमिह मर्त्यो यः करोत्यादरेण नरवर स तु कुक्षिं मातुराप्नोति नैव ।
बहुवृजिनसमेतोऽकामतः कामतो वा व्रजति पदमनन्तं लोकनाथस्य विष्णोः ॥२६॥
इति श्रीबृहन्नारदीयपुराणोत्तरभागे द्वादशीमाहात्म्यवर्णनं नाम प्रथमोऽध्यायः ॥१॥
आदितः श्लोकानां समष्ट्यङ्काः-१३,१७५+२६=१३,२०१



## ॥ अथ द्वितीयोऽध्यायः ॥

वसिष्ठ उवाच ॥
इममेवार्थमुद्दिश्य नैमिषारण्यवासिनः । पप्रच्छुर्मुनयः सूतं व्यासशिष्यं महामतिम् ॥१॥
स तु पृष्टो महाभाग एकादश्याः सुविस्तरम् । माहात्म्यं कथयामास उपवासविधिं तथा ॥२॥
तद्वाक्यं सूतपुत्रस्य श्रुत्वा द्विजवरोत्तमाः । माहात्म्यं चक्रिणश्चापि सर्वपापौघ शान्तिदम् ॥३॥
पुनः पप्रच्छुरमलं सूतं पौराणिकं नृप । अष्टादश पुराणानि भवान् जानाति मानद ॥४॥
कानीनस्य प्रसादेनः महाभारतमप्युत । तन्नास्ति यन्न वेत्सि त्वं पुराणेषु स्मृतिष्वपि ॥५॥

चरिते रघुनाथस्य शतकोटिप्रविस्तरे । अस्माकं संशयः कश्चिद्धृदये सम्प्रवर्तते ॥६॥
तं भवानर्हति च्छेत्तुं याथार्थ्येन सुविस्तरात् । तिथेः प्र ान्तमुपोष्यं स्यादाहोस्विन्मूलमेव च ॥७॥
दैवे पैत्र्ये समाख्याहि नावेद्यं विद्यते तव ।
सौतिरुवाच ॥
तिथेः प्रान्तं सुराणां हि उपोष्यं प्रीतिवर्द्धनम् ॥८॥
मूलं तिथेः पितृणां तु कालज्ञैः प्रियमीरितम् । अतः प्रान्तमुपोष्यं हि तिथेर्दशफलेप्सुभिः ॥९॥
मूलं हि पितृतृप्त्यर्थं विज्ञेयं धर्मकाङ्क्षिभिः । पूर्वविद्धा न कर्तव्या द्वितीया चाष्टमी तथा ॥१०॥
षष्ठी चैकादशी भूप धर्मकामार्थलिप्सुभिः । पूर्वविद्धा द्विजश्रेष्ठाः कर्तव्या सप्तमी सदा ॥११॥
दर्शश्च पौर्णमासश्च पितुः सांवत्सरं दिनम् । पूर्वविद्धानिमांस्त्यक्त्वा नरकं प्रतिपद्यते ॥१२॥
हानिं च संततेर्भूपदौर्भाग्यं समवाप्नुयात् । एतच्छ्रुतं मया विप्राः कृष्णद्वैपायनात्पुरा ॥१३॥
आदित्योदयवेलायां यास्तोकापि तिथिर्भवेत् । पूर्वविद्धा तु मंतव्या प्रभूता नोदयं विना ॥१४॥
पारणे मरणे नृणां तिथिस्तात्कालिकी स्मृता । पित्र्येऽस्तमनवेलायां स्पर्शे पूर्णा निगद्यते ॥१५॥
न तत्रोदयिनी ग्राह्या दैवस्योदयिकी तिथिः । प्रत्यहं शोधयेत्प्राज्ञस्तिथिं दैवज्ञचिन्तकात् ॥१६॥
तिथिप्रमाणं विप्रेन्द्राः क्षपाकरदिवाकरौ । चन्द्रार्कचारविज्ञानात्कालं कालविदो विदुः ॥१७॥
पूर्वायाः सङ्गदोषेण न योग्यास्ताः प्रपूजने । वर्जयन्ति नरास्तज्ज्ञा यामांश्च चतुरो द्विजाः ॥१८॥
अत ऊर्द्धं प्रवक्ष्यामि स्नानपूजाविधिक्रमम् । न दिवा शुद्धिमाप्नोति तदा रात्रौ विधीयते ॥१९॥
दिनकार्यमशेषं हि कर्तव्यं शर्वरीमुखे । विधिरेष मया ख्यातो नराणामुपवासिनाम् ॥२०॥
अल्पायामथ विप्रेन्द्रा द्वादश्यामरुणोदये । स्नानार्चनक्रिया कार्य्या दानहोमादिसंयुता ॥२१॥
त्रयोदश्यां हि शुद्धायां पारणे पृथिवीफलम् । शतयज्ञाधिकं वापि नरः प्राप्नोत्यसंशयम् ॥२२॥
एतस्मात्कारणाद्विप्राः प्रत्यूषे स्नानमाचरेत् । पितृतर्पणसंयुक्तं न दृष्ट्वा द्वादशीदिनम् ॥२३॥
महाहानिकरा ह्येषा द्वादशी लङ्घिता नृभिः । करोति धर्महरणमस्नातेव सरस्वती ॥२४॥
क्षये वाप्यथवा वृद्धौ सम्प्राप्ते वा दिनोदये । उपोष्या द्वादशी पु ण्या पूर्वविद्धां विवर्जयेत् ॥२५॥
ब्राह्मण उवाच ॥
यदा च प्राप्यते सूत द्वादश्यां पूर्वसम्भवा । तदोपवासो हि कथं कर्तव्यो मानवैर्वद ॥२६॥
उपवासदिनं विद्धं यदा भवति पूर्वया । द्वितीयेऽह्नि यदा न स्यात्स्वल्पाप्येकादशी तिथिः ॥२७॥
तत्रोपवासो विहितः कथं तद्वद सूतज ।
सौतिरुवाच ॥
यदा न प्राप्यते विप्रा द्वादश्यां पूर्वसम्भवम् ॥२८॥
रविचन्द्रार्कजाहं तु तदोपोष्यं परं दिनम् । बह्वागमविरोधेषु ब्राह्मणेषु विवादिषु ॥२९॥
उपोष्या द्वादशी पुण्या त्रयोदश्यां तु पारणम् । एकादश्यां तु विद्धायां सम्प्राप्ते श्रवणे तथा ॥३०॥
उपोष्या द्वादशी पुण्या पक्षयोरुभयोरपि । एष वो निर्णयः प्रोक्तो मया शास्त्रविनिर्णयात् ॥३१॥
किमन्यच्छ्रोतुकामा हि तद्भवन्तो ब्रुवन्तु मे ।
ऋषय ऊचुः ॥
युगादीनां वद्विधिं सौते सम्यग्यथातथम् ॥३२॥ रविसङ्क्रान्तिकादीनां नावेद्यं विद्यते तव ।
सौतिरुवाच ॥
द्वे शुक्ले द्वे तथा कृष्णे युगाद्याः कवयो विदुः ॥३३॥
शुक्ले पूर्वाह्णिके ग्र ाह्ये कृष्णे ग्राह्येऽपराह्णिके । अयनं दिनभागाढ्यं सङ्क्रमः षोडशः पलः ॥३४॥
पूर्वे तु दक्षिणे भागे व्यतीते चोत्तरो मतः । मध्यकाले तु विषुवे त्वक्षया परिकीर्तिता ॥३५॥
ज्ञात्वा विप्रास्तिथिं सम्यक्सांवत्सरसमीरिताम् । कर्तव्यो ह्युपवासस्तु अन्यथा नरकं व्रजेत् ॥३६॥
पूर्वविद्धां प्रकुर्वा णो नरो धर्मं निकृन्तति । संततेस्तु विनाशाय सम्पदां हरणाय च ॥३७॥

पलवेधेऽपि विप्रेन्द्रा दशम्या वर्जयेच्छिवाम् । सुराया बिन्दुना स्पृष्टं यथा गङ्गाजलं त्यजेत् ॥३८॥
श्वहतं पञ्चगव्यं च दशम्या दूषितां त्यजेत् । एकादशीं द्विजश्रेष्ठाः पक्षयोरुभयोरपि ॥३९॥
पूर्वविद्धा पुरा दत्ता सा तिथिर्यदुमौलिना । दानवेभ्यो द्विजश्रेष्ठाः प्रीणनार्थं महात्मनाम् ॥४०॥
अकाले यद्धनं दत्तमपात्रेभ्यो द्विजोत्तमाः । संक्रुद्धैरपि यद्दत्तं यद्दत्तं चाप्यसत्कृतम् ॥४१॥
पूर्वविद्धतिथौ दत्तं तद्दत्तमसुरेष्वथ । यदुच्छिष्टेन दत्तं तु यद्दत्तं पतितेष्वपि ॥४२॥
स्त्रीजितेषु च यद्दत्तं यद्दत्तं जलवर्जितम् । पुनः कीर्तनसंयुक्तं तद्दत्तमसुरेषु वै ॥४३॥
तस्माद्विप्रा न कर्त्तव्या विद्धाप्येकादशी तिथिः । यथा हन्तिपुरा पुण्यं श्राद्धं च वृषलीपतिः ॥४४॥
दत्तं जप्तं हुतं स्नातं तथा पूजा कृता हरेः । तिथौ विद्धे क्षयं याति तमः सूर्योदये यथा ॥४५॥
जीर्णं पतिं यौवनगर्विता यथा त्यजन्ति नार्यो भ्रषकेतुनार्दिताः । तथा हि वेधं विबुधास्त्यजन्ति तिथ्यन्तरं धर्मविवृद्धये सदा ॥४६॥

श्रीबृहन्नारदीयपुरणोत्तरभागे तिथिविचारो नाम द्वितीयोऽध्यायः ॥२॥

आदितः श्लोकानां समष्टयङ्काः-१३,२०१+४६=१३,२४७



## ॥ अथ तृतीयोऽध्यायः ॥

ऋषय ऊचुः ॥

विस्तरेण समाख्या हि विष्णोराराधनक्रियाम् । यया तोषं समायाति प्रददाति समीहितम् ॥१॥
लक्ष्मीभर्ता जगन्नाथो ह्यशेषाघौघनाशनः । कर्मणा केन स प्रीतो भवेद्यः सचराचरः ॥२॥

सौतिरुवाच ॥

भक्तिग्राह्यो हृषीकेशो न धनैर्द्धरणीधर । भक्त्या सम्पूजितो विष्णुः प्रददाति मनोरथम् ॥३॥
तस्माद्विप्राः सदा भक्तिः कर्त्तव्या चक्रपाणिनः । जनेनापि जगन्नाथः पूजितः क्लेशहा भवेत् ॥४॥
परितोषं व्रजत्याशुतृषितस्तु जलैर्यथा । अत्रापि श्रूयते विप्रा आख्यानं पापनाशनम् ॥५॥
रुक्माङ्गदस्य संवादमृषिणा गौतमेन हि । आसीद्रुक्माङ्गदो राजा सार्वभौमः क्षमान्वितः ॥६॥
क्षीरशायिप्रियो भक्तो हरिवासरतत्परः । नान्यं पश्यति देवेशात्पद्मनाभान्महीपतिः ॥७॥
पटहं वारणे धृत्वा वादयेद्धरि वासरे । अष्टवर्षाधिको यस्तु पञ्चाशीत्यूनवर्षकः ॥८॥
भुनक्ति मानवो ह्यद्य विष्णोरहनि मन्दधीः । स मे दण्डयश्च वध्यश्च निर्वास्यो नगराद्बहिः ॥९॥
पिता च यदि वा भ्राता पुत्रो भार्या सुहृन्मम । पद्मनाभदिने भोक्ता निग्राह्यो दस्युवद्भवेत् ॥१०॥
ददध्वं विप्रमुख्यभ्यो मज्जध्वं जाह्नवीजले । ममेद वचनं श्रृत्वा राज्यं भुञ्जीत मामकम् ॥११॥
वासरे वासरे विष्णोः शुक्लपक्षे महीपतिः । अशुक्ले तु विशेषे ण पटहे हेमसम्पुटे ॥१२॥
एवं प्रघुष्टे भूपेन सर्वभूमौ द्विजोत्तमाः । गच्छिद्भिः सङ्कुलो मार्गः कृतो लोकैर्हरेर्द्विजाः ॥१३॥
ये केचिन्निधनं यान्ति भूपालविषये नराः । ज्ञानात्प्रमादतो वापि ते यान्ति हरिमन्दिरम् ॥१४॥
अवश्यं वैष्णवो लोकः प्राप्यते मानवैर्द्विजाः । व्याजेनापि प्रकुर्वाणैर्द्वादशीं पापनाशिनीम् ॥१५॥
सोऽश्नाति पार्थिवं पापं योऽश्नाति हरिवासरे । स प्राप्नोति धराधर्मं यो नाश्नाति हरेर्दिने ॥१६॥
ब्राह्मणो नैव हन्तव्य इत्येषा वैदिकी स्मृतिः । एकादश्यां न भोक्तव्यं पक्षयोरुभयोरपि ॥१७॥
वैलक्ष्यमगमद्राजा रविसूनुर्द्विजोत्तमाः । लेख्यकर्मणि विश्रान्तश्चित्रगुप्तोऽभवत्तदा ॥१८॥
संमार्जितानि लेख्यानि पूर्वकर्मोद्भवानि च । गच्छंति वैष्णवं लोकं स्वधर्मैर्मानवाक्षणात् ॥१९॥
शून्यास्तु निरयाः सर्वे पापप्राणिविवर्जिताः । भग्नो याम्योऽभवन्मार्गो द्वादशादित्यतापितः ॥२०॥
सर्वे हि गरुडारूढा जना यान्ति हरेः पदम् । देवानामपि ये लोकास्ते शून्या ह्यभवँस्तथा ॥२१॥
उत्सन्नाः पितृदेवेज्यास्तीर्थदानादिसत्क्रियाः । मुक्त्वैकां द्वादशीं मर्त्या नान्यं जानन्ति ते व्रतम् ॥२२॥
शून्ये त्रिविष्टपे जाते शून्ये च नरके तथा । नारदो धर्मराजानं गत्वा चेदमुवाच ह ॥२३॥

नारद उवाच ॥

नाक्रन्दः श्रूयते राजन् प्राङ्गणे नरकेष्वथ । न चापि क्रियते लेख्यं किंचिद्दुष्कृतकर्मणाम् ॥२४॥
चित्रगुप्तो मुनिरिव स्थितोऽयं मौनसंयुतः । कारणं किं न चायान्ति पापिनो येन ते गृहम् ॥२५॥
मायादम्भसमाक्रान्ता दुष्टकर्मरतास्तथा । एवमुक्ते तु वचने नारदेन महात्मना ॥२६॥
प्राह वैवस्वतो राजा किञ्चिद्दैन्यसमन्वितः ।
यम उवाच ॥
योऽयं नारद भूपालः पृथिव्यां साम्प्रतं स्थितः ॥२७॥
स हि भक्तो हृषीकेशे पुराणपुरुषोत्तमे । प्रबोधयति राजेन्द्रः स जनं पटहेन हि ॥२८॥
न भोक्तव्यं न भोक्तव्यं सम्प्राप्ते हरिवासरे । ये केचिद्भुञ्जते मर्त्यास्ते मे दण्डेषु यान्ति हि ॥२९॥
तद्भयाद्धि जनाः सर्वे द्वादशीं समुपासते । व्याजेनापि मुनिश्रेष्ठ द्वादश्यां समुपोषिताः ॥३०॥
प्रयान्ति वैष्णवं लोकं दाहप्रलयवर्जितम् । द्वादशीसेवनाल्लोकाः प्रायान्ति हरिमन्दिरम् ॥३१॥
तेन राज्ञा द्विजश्रेष्ठ मार्गा लुप्ता ममाधुना । कृत हि नरकाः शून्या लोकाश्चापि दिवौकसाम् ॥३२॥
विश्रान्तं लेखकेर्लेख्यं लिखितं मार्जितं जनैः । एकादश्युपवासस्य माहात्म्येन द्विजोत्तम ॥३३॥
ब्रह्महत्यादिपापानि अभुक्त्वैव जना द्विज । समुपोष्य दिनं विष्णोः प्रयान्ति हरिमन्दिरम् ॥३४॥
सोऽहं काष्ठमृगेणैव तुल्यो जातो महामुने । नेत्रहीनः कर्णहीनः सन्ध्याहीनो द्विजो यथा ॥३५॥
स्त्रीजितो वा पुमान्यद्वत्षण्ढो वा प्रमदापतिः । त्यक्तकामस्त्वहं ब्रह्मंल्लोकपालत्वमीदृशम् ॥३६॥
यास्यामि ब्रह्मलोके वै दुःखं ज्ञापयितुं स्वकम् । निर्व्यापारो नियोगी तु नियोगे यस्तु तिष्ठति ॥३७॥
स्वामिवित्तं समश्नाति स याति नरकं ध्रुवम् ।
सौतिरुवाच ॥
एवमुक्त्वा यमो विप्रा नारदेन समन्वितः ॥३८॥
ययौ विरञ्चिसदनं चित्रगुप्तेन चान्वितः । स ददर्श समासीनं मूर्तामूर्तजनावृतम् ॥३९॥
वेदप्रियं जगद्बीजं सर्वेषां प्रपितामहम् । स्वभवं भूतनिलयमोंकाराख्यमकल्मषम् ॥४०॥
शुचिं शुचिपदं हंसं ब्रह्माणं दर्भलाञ्छनम् । उपास्यमानं विविधैर्लोकपालैर्दिगीश्वरैः ॥४१॥
इतिहासपुराणैश्च वेदैर्विग्रहसंस्थितैः । मूर्तिमद्भिः समुद्रैश्च नदीभिश्च सरोवरैः ॥४२॥
देहधृग्भिस्तथा वृक्षैरश्वत्थाद्यैर्विशेषतः । वापीकूपतडागाद्यैर्मूर्तिमद्भिश्च पर्वतैः ॥४३॥
अहोरात्रैस्तथा पक्षैर्मासैः संवत्सरैर्द्विजाः । कलाकाष्ठानिमेषैश्च ऋतुभिश्चायनैर्युगैः ॥४४॥
मन्वन्तरैस्तथा कल्पैर्निमेषैरुन्मिषैरपि । ऋक्षैर्योगैश्च करणैः पौर्णमासेन्दुसंक्षयैः ॥४५॥
सुखैर्दुःखैस्तथा द्वन्द्वैर्लाभालाभैर्जयाजयैः । सत्यानृतैश्च देवेशो वेष्टितो धर्मपावकः ॥४६॥
कर्मविद्भिश्च पुरुषैरनुरूपैरूपास्यते । सत्त्वेन रजसा चैव तमसा च पितामहः ॥४७॥
शान्तमूढातिघोरैश्च विकारैः प्राकृतैर्विभुः । वायुना श्लेष्मपित्ताभ्यां मूर्तैरातङ्कनामभिः ॥४८॥
आनन्देन च विश्वात्मा परधर्मं समाश्रितः । अनुक्तैरपि भूतैश्च संवृतो लोककृत्स्वयम् ॥४९॥
दुरुक्तैः कटुवाक्याद्यैर्मूर्तिमद्भिरूपास्यते । तेषां मध्येऽविशत्सौरिः सव्रीडेव वधूर्यथा ॥५०॥
विलोकयन्नधोभागं नम्रवक्त्रो व्यदर्शयत् । ते प्रविष्टं यमं दृष्ट्वा सकायस्थं सनारदम् ॥५१॥
विस्मिताक्षा मिथः प्रोचुः किमयं भास्करिस्त्विह । सम्प्राप्तो हि लोककरं द्रष्टुं देवं पितामहम् ॥५२॥
निर्व्यापारः क्षणं नास्ति योऽयं व्यग्रो रवेः सुतः । सोऽयमभ्यागतः कस्मात्कच्चित्क्षेमं दिवौकसाम् ॥५३॥
आश्चर्यातिशयं मन्ये यन्मार्जितपटस्त्वयम् । लेखकः समनुप्राप्तो दैन्येन महतान्वितः ॥५४॥
न केनचित्पटो ह्यस्य मार्जितोऽभूच्च धर्मिणा । यन्न दृष्टं श्रुंत वापि तदिहैव प्रदृश्यते ॥५५॥
एवमुच्चरतां तेषां भूतानां कृतशासनः । निपपाताग्रतो विप्रा ब्रह्मणो रविनन्दनः ॥५६॥
मूलच्छिन्नो यथा शाखी त्राहि त्राहीति संरुदन् । परिभूतोऽस्मि देवेश यन्मार्जितपटः कृतः ॥५७॥
त्वया नाथेन विधुरं पश्यामि कमलासन । एवं ब्रुवन्स निश्चेष्टो बभूव द्विजसत्तमाः ॥५८॥
ततो हलहलाशब्दः सभायां समवर्तत । योऽर्थं रोदयते लोकान्सर्वान्स्थावरजङ्गमान् ॥५९॥

सोऽयं रोदिति दुःखार्तः कस्माद्वैवस्वतो यमः । अथवा सत्यगाथेयं लौकिकी प्रतिभाति नः ॥६०॥
जनसन्तापकर्ता यः सोऽचिरेणो पतत्यते । नहि दुष्कृतकर्मा हि नरः प्राप्नोति शोभनम् ॥६१॥
ततो निवारयामास वायुस्तेषां वचस्तदा । लोकानां समचित्तानां मतं ज्ञात्वा हि वेधसः ॥६२॥
निवार्य शङ्कां मार्तण्डिं शनैरुत्थापयन् विभुः । भुजाभ्यां साधुपीनाभ्यां लोकमूर्तिरुदारधीः ॥६३॥
विह्वलं तं पलायन्तमासने संन्यवेशयत् । सकायस्थमुवाचेदं व्योममूर्तिं रवेः सुतम् ॥६४॥
केन त्वमभिभूतोऽसि केन स्थानाद्विवासितः । केनापमार्जितो देवपटो लोकपटस्तव ॥६५॥
ब्रूहि सर्वमशेषेण कुशकेतुर्वदत्वयम् । यः प्रभुस्तात सर्वेषां स ते कर्ता समुन्नतिम् ॥
अपनेष्यति मार्तण्डे दुःखं हृदयसंस्थितम् ॥६६॥
स एवमुक्तस्तु प्रभञ्जनेन दिनेशसूनुस्तमथो बभाषे । विलोक्य वक्त्रं कुशकेतुसूनोः सगद्गदं मन्दमुदीरयन्वचः ॥६७॥

इति श्रीबृहन्नारदीयपुराणोत्तरभागे यमस्य ब्रह्मलोकगमनं नाम तृतीयोऽध्यायः ॥३॥
आदितः श्लोकानां समष्ट्यङ्काः-१३,२४७+६७=१३,३१४



## ॥ अथ चतुर्थोऽध्यायः ॥

यम उवाच ॥
श्रृणु मे वचनं नाथ पितामह पितामह । मरणादधिकं देव यत्प्रतापस्य खण्डनम् ॥१॥
निस्पृहो नाचरेद्यस्तु नियोगं पद्मसम्भव । अन्धकूपे निपतति स चाशु नरके ध्रुवम् ॥२॥
नियोगी न नियोगं यः करोति कमलासन । प्रभोर्वित्तं समश्नाति स भवेत्काष्ठकीटकः ॥३॥
योऽश्नाति लोभाद्वित्तानि प्रजाभ्यो वा महीपतेः । नियोगी नरकं याति यावत्कल्पशतत्रयम् ॥४॥
आत्मकार्यपरो यस्तु स्वामिनं च विलुम्पति । भवेद्वेश्मनि मन्दात्मा आखुः कल्पशतत्रयम् ॥५॥
नियोगी यस्तु वै भूत्वा आत्मवेश्मनि भोक्ष्यति । भृत्यान्वै कर्मकरणे राज्ञो मार्जारतां व्रजेत् ॥६॥
सोऽहं देव तवादेशात् प्रजा धर्मेण शासयन् । पुण्येन पुण्यकर्तारं पापं पापेन कर्म णा ॥७॥
सम्यग्विचार्य मुनिभिर्धर्मशास्त्रादिभिर्विभो । कल्पादौ वर्तमानस्य यावद्यावद्दिनं तव ॥८॥
सोऽहं त्वदीयेन विभो नियोगेनैव शक्नुयाम् । कर्तुं रुक्माङ्गदेनाद्य पराभूतो हि भूभुजा ॥९॥
भयाद्यस्य जगन्नाथ पृथिवी सागराम्बरा । न भु ङ्क्ते वासरे विष्णोः सर्वपापप्रणाशने ॥१०॥
विहाय सर्वधर्मांस्तु विहाय पितृपूजनम् । विहाय देवपूजां च तीर्थस्नानादिकव्सक्रियाम् ॥११॥
योगसाङ्ख्यावुभौ त्यक्त्वा ज्ञानं ज्ञेयं च मानद । त्यक्त्वा स्वाध्यायहोमांश्च कृत्वा पापानि भूरिशः ॥१२॥
प्रयान्ति वैष्णवं लोकमुपोष्य हरिवासरम् । मनुजाः पितृभिः सार्द्धं तथैव च पितामहैः ॥१३॥
तेषामपीह पितरः पितृणां पितरस्तथा । तथा मातामहा यान्ति मातुर्ये जनकादयः ॥१४॥
तेषामपि जनेतारो जनितृणां हि पूर्वजाः । एतद्दुःखं पुनर्देव मम मर्मविभेदनम् ॥१५॥
प्रियायाः पितरो यान्ति मार्जयित्वा लिपिं मम । पितृणां बीजतो यस्माद्धात्र्या कुक्षौ धृतो यतः ॥१६॥
यदेकः कुरुते कर्म तदेकेनैव भुज्यते । ततोऽन्यस्य कृतं ब्रह्मन्बीजं धात्रीसमुद्भवम् ॥१७॥
तारयेत्स उभौ पक्षौ यत्पिण्डो यस्य विग्रहः । न भार्याया भवद्बीजं न भार्या कुक्षिधारिणी ॥१८॥
कथं तस्या जगन्नाथ पक्षो याति परं पदम् । जामातुः पुण्यमाहात्म्यात्तेन मे शिरसो रुजा ॥१९॥
न मे प्रयोजनं देव नियोगेनेदृशेन वै । एकादश्युपवासी यः स मां त्यक्त्वा व्रजेद्धरिम् ॥२०॥
कुलत्रयं समुद्धृत्य आत्मना सह पद्मज । त्यक्त्वा तु मामकं मार्गं प्रयाति हरिमन्दिरम् ॥२१॥
न यज्ञैस्तादृशैर्दैव गतिं प्राप्नोति मानवः । न तीर्थैर्नापि दानैर्वा न व्रतैर्विष्णुवर्जितैः ॥२२॥
न जले पावके वापि मृतः प्राप्नोति तां गतिम् । योगेन सम्प्रणष्टो वा भृगुपातेन वा विधे ॥२३॥
तादृशीं न गतिं याति यादृशीं वैष्णवव्रती । गतिं मतिमतां श्रेष्ठ सत्यमेतदुदीरितम् ॥२४॥
हरेर्दिने धातृफलाङ्गलिप्तो विमुक्तवाञ्छारसभोजनो नरः । प्रयाति लोके धरणीधरस्य विदुष्टकर्मापि मनुष्यजन्मा ॥२५॥

सोऽहं निराशो भुवि हीनकर्मा तवागतः पादसरोजयुग्मम् । विज्ञप्ति मात्राभयदाप्तिकालं कुरुष्व सर्गस्थितिनाशहेतोः ॥२६॥
मा स्युस्तदा पापकृतो विहीना यन्मामकैर्भूतगणैर्मनुष्याः । नियंत्रिताः श्रृङ्खलरज्जुबन्धनैः समीपगा मे वशगा भवेयुः ॥२७॥
भग्नस्तु मार्गो रवितापयुक्तो यद्विष्णुसङ्घैरतितीव्रहस्तैः । विमुच्य कुम्भीं सकलो जनौघः प्रयाति तद्धाम परात्परस्य ॥२८॥

इति श्रीबृहन्नारदीयपुराणोत्तरभागे यमवाक्यं नाम चतुर्थोऽध्यायः ॥४॥

आदितः श्लोकानां समष्ट्यङ्काः-१३,३१४+२८=१३,३४२



## ॥ अथ पञ्चमोऽध्यायः ॥

यम उवाच ॥

घृष्टतां समनुप्राप्तः पन्था देवस्य चक्रिणः । अच्छिद्रैर्गम्यमानैश्च नरैस्त्रिभुवनार्चित ॥१॥
अप्रमाणमहं मन्ये लोकं विष्णोर्जगत्पते । यो न पूर्यति लोकौ घैः सर्वसत्वसरोरुहैः ॥२॥
माधवावसथैनैव समस्तेन पितामह । स्वकर्मस्था विकर्मस्थाः शुचयोऽशुचयोऽपि वा ॥३॥
उपोष्य वासरं विष्णोर्लोकं यान्ति नृपाज्ञया । सोऽस्माकं हि महान् शत्रुर्भवतां च विशेषतः ॥४॥
निग्राह्यो जगतां नाथ भवेन्नास्त्यत्र संशयः । तेन वर्षसहस्रेण शासितं क्षितिमण्डलम् ॥५॥
अप्रमेयो जनो नीतो वैष्णवं हरिवल्लभम् । आरोपयित्वा गरुडे कृत्वा रूपं चतुर्भुजम् ॥६॥
पीतवस्त्रसुसंवीतं स्रग्विणं चारुलेपनम् । यदि स्थास्यति देवेश माधव्यां माधवप्रियः ॥७॥
समस्तं नेष्यते लोकं विष्णोः पदमनामयम् । एष दण्डः पटो ह्येष तव पद्भ्यां विसर्जितः ॥८॥
लोकपालत्वमतुलं मार्जित तेन भूभुजा । रुक्माङ्गदेन देवेश धन्या सा स धृतो यया ॥९॥
सर्वदुःखविनाशाय मात्रृजातो गुणाधिकः । किमपत्येन जातेन मातुः क्लेशकरेण हि ॥१०॥
यो न तापयते शत्रून् ज्येष्ठे मासि यथा रविः । वृथाशूला हि जननी जाता देव कुपुत्रिणी ॥११॥
यस्य न स्फुरते कीर्तिर्घनस्थेव शतह्रदा । यः पितुर्नोद्धरेत्पक्षं विद्यया वा बलेन वा ॥१२॥
मातुर्जठरजो रोगः स प्रसूतो धरातले । धर्मे चार्थे च कामे च प्रतीपो यो भवेत्सुतः ॥१३॥
मातृहा प्रोच्यते सद्भिर्वृथा तस्यैव जीवितम् । एका हि वीरसूरेव विरञ्चे नात्र संशयः ॥१४॥
यया रुक्माङ्गदो जातो मल्लिपेर्मार्ज्जनाय वै । नेदं व्यवस्थितं देव क्षितौ केनापि भूभुजा ॥१५॥
पुराणेऽपि जगन्नाथ न श्रुतं पटमार्जनम् ।
सोऽहं न जानामि कदाचिदीश दृष्ट्वा क्षिरीशं हरिसेवने स्थितम् । प्रवादमानं पटहं सुघोरं प्रलोपमानं मम वेश्ममार्गम् ॥१६॥

इति श्रीबृहन्नारदीयपुराणोत्तरभागे यमविलापनं नाम पञ्चमोऽध्यायः ॥५॥

आदितः श्लोकानां समष्ट्यङ्काः-१३,३४२+१६=१३,३५८



## ॥ अथ षष्ठोऽध्यायः ॥

ब्रह्मोवाच ॥

किमाश्चर्यं त्वया दृष्टं कथं वा खिद्यते भवान् । सद्गुणेषु च संतापः स तापो मरणान्तिकः ॥१॥
यस्योच्चारणमात्रेण प्राप्यते परमं पदम् । तमुपोष्य कथं सौरे न गच्छति नरस्त्विति ॥२॥
एको हि कृष्णस्य कृतः प्रणामो दशाश्वमेधावभृथेन तुल्यः । दशाश्वमेधी पुनरेति जन्म कृष्णप्रणामी न पुनर्भवाय ॥३॥
कुरुक्षेत्रेण किं तस्य किं काश्या विरजेन वा । जिह्वाग्रे वर्तते यस्य हरिरित्यक्षरद्वयम् ॥४॥
ब्राह्मणः श्वपचीं गच्छन् विशेषेण रजस्वलाम् । अन्नमश्नन्सुरापक्वं मरणे यो हरिं स्मरेत् ॥५॥
अभक्ष्यागम्ययोर्जातं विहाय पापसञ्चयम् । स याति विष्णुसायुज्यं विमुक्तो भवबन्धनैः ॥६॥
यन्नामोच्चारणान्मोक्षः कथं न तदुपोषणे । यस्मिन्सङ्गीयते सोऽपि चिन्त्यते पुरुषोत्तमः ॥७॥
लीलया चोच्चरेद्देवं श्रृणुयाच्च जनार्दनम् । गङ्गाम्भः पूतपु ण्यत्वे स नरः समतां व्रजेत् ॥८॥
अस्माकं जगतां नाथो जन्मदः पुरुषोत्तमः । कथं शासति दुर्मेधास्तस्य वासरसेविनम् ॥९॥

यस्त्वं न चूर्णितस्तैस्तु यस्त्वं बद्धो न तैर्दृढम् । तदस्माकं कृतं मानं मे तत्त्वं नावबुध्यसे ॥१०॥
यो नियोगी न जानाति नृपभक्तान्वरान् क्षितौ । कृत्स्नायासेन संयुक्तः स तैर्निग्राह्यते पुनः ॥११॥
राजेष्टा न नियोक्तव्याः सापराधा नियोगिना । स्वामिप्रसादात्सिद्धास्ते विनिन्यु र्व्वै नियोगिनम् ॥१२॥
एवं हि पापकर्तारः प्रणता ये जनार्दने । कथं संयमिता तेषां बाल्याद्भास्करनन्दन ॥१३॥
शैवैर्भास्करभक्तैर्वा मद्भक्तैर्वा दिवाकरे । करोमि तव साहाय्यं हरिभक्तैर्न भास्करे ॥१४॥
सर्वेषामेव देवानामादिस्तुपुरुषोत्तमः ॥१५॥
मधुसूदनभक्तानां निग्रहो नोपपद्यते । व्याजेनापि कृता यैस्तु द्वादशी पक्षयोर्द्वयोः ॥१६॥
तैः कृते अवमाने तु तव नाहं सहायवान् ॥१७॥
कृते सहाये तव सूर्यसूनो भवेदनीतिर्मम देहघातिनी । विपर्ययो ब्रह्मपदात्सुपुण्यात्कृतेव मार्गे सह विष्णुभक्तैः ॥१८॥
इति श्रीबृहन्नारदीयपुराणोत्तरभागे ब्रह्मवाक्यं नाम षष्ठोऽध्यायः ॥६॥
आदितः श्लोकानां समष्ट्यङ्काः-१३,३५८+१८=१३,३७६



## ॥ अथ सप्तमोऽध्यायः ॥

यम उवाच ॥
प्राप्तं तात मया सार्द्धं वेदाङ्गिनमने हितम् । नाहं गच्छामि योगान्तं पुनरेव जगत्पते ॥१॥
प्रशासति महीं भूपेहाटकाङ्गदसं ज्ञके । तमेकं देवताश्रेष्ठं सम्प्राप्ते हरिवासरे ॥२॥
यदि चालयसे धैर्यात्ततोऽहं तव किङ्करः । स मे शत्रुर्महान्देव तेन लुप्तः पटो मम ॥३॥
तमेकं भोजयित्वा तु कार्ष्णेऽहनि महीपतिम् । कृतकृत्यो भविष्यामि गयापिण्डप्रदो यथा ॥४॥
अद्य प्रभृति देवेशो यैर्नरैः संस्मृतो हरिः । उपोषितः स्तुतो वापि न नियम्या मया हि ते ॥५॥
हरिरिति सहसा ये सङ्गृणन्तिच्छलेन जननिजठरमार्गात्ते विमुक्ता हि मर्त्याः ।
मम पटविलिपिं ते नो विशंति प्रवीणा दिविचरवरसङ्घैस्ते नमस्या भवन्ति ॥६॥
सौतिरुवाच ॥
वैवस्वतस्य कार्येण तत्सम्मानचिकीर्षया । चिन्तयामास देवेशो विरिञ्चिः कुशलाञ्छनः ॥७॥
चिन्तयित्वा क्षणं देवः सर्वभूतैश्च भूषितः । भूतत्रासनमात्रं तु रूपं स जगृहे विभुः ॥८॥
तस्मिन्नुत्पादयामास प्रमदां लोकमोहिनीम् । सर्वयोषिद्वरा देवीमनसा निर्मिता बभौ ॥९॥
सा बभूवाग्रतस्तस्य सर्वालङ्कारभूषिता । दृष्ट्वा पितामहस्तां तु रूपद्रविणसंयुताम् ॥१०॥
प्राहेमान् पश्यतो ह्येतां स्वकान्वै काममोहितान् । प्रत्यवायभयाद्ब्रह्मा चक्षुषी संन्यमीलयत् ॥११॥
सरागेणेह मनसा सरागेणेह चक्षुषा । चिन्तयेद्वीक्षयेद्वापि जननीं वा सुतामपि ॥१२॥
वधूं वा भ्रातृजायां वा गुरोर्भार्यां नृपस्त्रियम् । स याति नरकं घोरं संचिन्त्य श्वपचीमपि ॥१३॥
दृष्ट्वा हि प्रमदा ह्येता यः क्षोभं व्रजते नरः । तस्य जन्मकृतं पुण्यं वृथा भवति नान्यथा ॥१४॥
प्रसङ्गे दशसाहस्रं पुण्यमायाति सङ्क्षयम् । पु ण्यस्य संक्षयात्पापी पाषाणाखुर्भवेद्ध्रुवम् ॥१५॥
तस्मान्न चिन्तयेत्प्राज्ञो ह्येता रागेण चक्षुषा । जनन्या अपि पादौ तु नादेयौ द्वादशाब्दिकैः ॥१६॥
सुतैस्त्वभ्यङ्गकरणे पुनर्यौवनसंस्थितैः । षष्ठ्यतीतां सुतोऽभ्यङ्गे नियुञ्जीत विचक्षणः ॥१७॥
वृद्धो वापि युवा वापि न पादौ धावयेद्वधूम् । उभयोः पतनं प्रोक्तं रौरवेऽङ्गारसञ्चये ॥१८॥
या वधूर्दर्शयेदङ्गं विवृतं श्वशुरस्य हि । पाणिपादाहता राजन् क्रिमिभक्ष्या भवेत्तु सा ॥
वधूहस्तेन यः पापः पादशौचं करोति हि ॥१९॥
स्नानं वाप्यथवाभ्यङ्गं तस्याप्येवंविधा गतिः । सूचीमुखैः कृष्णवक्त्रै र्भुज्यते कल्पसंस्थितिम् ॥२०॥
तस्मान्न वीक्षयेन्नारीं सुतां वापि वधूं नरः । साभिलाषेण मनसा तत्क्षणात्पतते नरः ॥२१॥
एवं सञ्चिन्तयित्वा च सूक्ष्मां दृष्टिं चकार ह । यदिदं वर्तुलं वक्त्रं सोन्नतं दृश्यते शुभम् ॥२२॥

अस्थिपञ्जरमेतद्धि चर्ममांसावृतं त्विति । वसा मेदोऽथ नयने सोज्वले स्त्रीषु संस्थिते ॥२३॥
अत्युच्छ्रितमिदं मांसं स्तनयोः समवस्थितम् । निम्नांशतां दर्शयति त्रिवली जठरस्थिता ॥२४॥
पुनरेवाधिकं क्षिप्तं मांसं जघनवर्त्मनि । मूत्रद्वारमिदं गुह्यं यत्र मुग्धं जगत्त्रयम् ॥२५॥
अपानवायुना जुष्टं सदैव प्रतिकुत्सितम् । भस्त्रावर्गाधिकं क्षिप्तं मांसं जघनवर्त्मनि ॥२६॥
कृतं यद्वद्द्विधा काष्ठं तद्वज्जङ्घा द्विधा ध्रुवम् । शुक्रास्थिपूरितं मांसैः कथं सुन्दरतां व्रजेत् ॥२७॥
मांसमेदोवसासारे किं सारं देहिनां वद । विष्ठामूत्रमलैः पुष्टे को देहे रज्यते नरः ॥२८॥
एवं विचार्य बहुधा विरिञ्चिर्ज्ञानचक्षुषा । धैर्यं कृत्वा च नारीं तामुवाच गजगामिनीम् ॥२९॥
यथाहि मनसा सृष्टा मया त्वं वरवर्णिनी । तथा भूतासि चार्वङ्गि मानसोन्मादकारिणी ॥३०॥
तमुवाच तदा सा तु प्रणम्य चतुराननम् । पश्य मूर्छान्वितं नाथ जगत्स्थावरजङ्गमम् ॥३१॥
मोहितं मम रूपेण सयोगि यदकल्मषम् । स नास्ति त्रिषु लोकेषु यः पुमान्मम दर्शनात् ॥३२॥
भवन्तमादितः कृत्वा न क्षोभं याति पद्मज । आत्मस्तुतिर्न कर्तव्या केनचिच्छुभमिच्छता ॥३३॥
स्तवनान्नरकं याति विशुद्धोऽपि च मानवः । तथापि स्तवनं ब्रह्मन् कर्तव्यं कार्यहेतुना ॥३४॥
साहं सृष्टा त्वया ब्रह्मन् कस्यचित्क्षोभणाय वै । तमादिश जगन्नाथ क्षोभयिष्ये न संशयः ॥३५॥
मां दृष्ट्वापि क्षितौ देव भूधरश्चापि मुह्यति । किं पुनश्चेतनोपेतः श्वासोच्छासी नरस्त्विति ॥३६॥
तथा चोक्तं पुराणेषु नारीवीक्षणवर्णनम् । उन्मादकरणं नृणां दुश्चरव्रतनाशनम् ॥३७॥
सन्मार्गे तावदास्ते प्रभवति पुरुषस्तावदेवेंद्रियाणां लज्जां तावद्विधत्ते विनयमपि समालम्बते तावदेव ।
भ्रूचापाक्षेपयुक्ताः श्रवणपथगता नीलपक्ष्माण एते यावल्लीलावतीनां न हृदि धृतिमुषो दृष्टिबाणाः पतन्ति ॥३८॥
धिक्तस्य मूढमनसः कुकवेः कवित्वं यः स्त्रीमुखं च शशिनं च समीकरोति ।
भ्रूक्षेपविस्मितकटाक्षनिरीक्षनिरीक्षितानि कोपप्रसादहसितानि कुतः शशाङ्के ॥३९॥
पीतं हि मद्यं मनुजेन नाथ करोति मोहं सुविचक्षणस्य । स्मृता च दृष्टा युवती नरेण विमोहयेदेव सुराधिका हि ॥४०॥
मोहनार्थं त्वया सृष्टा नराणां प्रपितामह । तमादिश जगन्नाथ त्रैलोक्यं मोहयाम्यहम् ॥४१॥

ब्रह्मोवाच ॥

सत्यमुक्तं त्वया देवि नासाध्यं भुवनत्रये । नागनासोरु सुभगे मत्तमातङ्गगामिनि ॥४२॥
या त्वं दूषयसे चेतो ममापि वरवर्णिनि । तन्मया सुगृहीतं तु कृतं ज्ञानाङ्कुशेन हि ॥४३॥
सा त्वं कथं न लोकानां चेतांस्यपहरिष्यसि । सत्यमेतद्विशालाक्षि तव रूपं विमोहनम् ॥४४॥
सामरं हि जगत्सर्वं निश्चेष्टमपि लक्षये । यन्निमित्तं मया सृष्टा तत्साधय वरानने ॥४५॥
वैदिशे नगरे राजा नाम्ना रुक्माङ्गदः क्षितौ । यस्य सन्ध्यावली भार्या तव रूपोपमा शुभे ॥४६॥
यस्यां धर्माङ्गदो जातो पितुरत्यधिकः सुतः । दशनागायु तबलः प्रतापेन रविर्यथा ॥४७॥
यः क्षान्त्या धरया तुल्यो गाम्भीर्ये साङ्गरोपमः । तेजसा वह्निवद्दीप्तः क्रोधे वैवस्वतोपमः ॥४८॥
त्यागे वैरौचनिर्यद्वद्गतौ हि पवनोपमः । सौम्यत्वे शशितुल्यस्तु रूपवान् मन्मथो यथा ॥४९॥
जीवभार्गवयोस्तुल्यो यो नीतौ राजनन्दनः । पित्रा भुक्तं समस्तैकं जंबूद्वीपं वरानने ॥५०॥
धर्माङ्गदेन द्वीपानि सञ्जितान्यपराण्यपि । पित्रोस्तु व्रीडया येन न ज्ञातं प्रमदासुखम् ॥५१॥
स्वयं प्राप्ताः परित्यक्ता येन भार्याः सहस्रशः । यो न वाक्याद्विचलते सहैव हि पितुर्गृहे ॥५२॥
यस्य वै त्रीणि सुभगे मातृणां चारुहासिनि । शतानि कनकाभासे त्वविशेषेण पश्यति ॥५३॥
तस्य धर्मप्रधानस्य पुत्ररत्नांचितस्य च । समीपं गच्छ चार्वङ्गि मन्दरे पर्वतोत्तमे ॥५४॥
तत्र वत्स्यति राजा वै तुरगेणातिवाहितः । तव गीतेन चार्वङ्गि मोहितोऽश्वं विहाय च ॥५५॥
अधिरुह्य गिरेः पृष्ठं स सङ्गं यास्यति त्वया । तत्र देवि त्वया वाच्यं मिलित्वा भूभुजा त्विह ॥५६॥
अहं भार्या भविष्यामि तव राजन्न संशयः । यद्ब्रवीमि ह्यहं नाथ तत्कार्यं हि त्वया ध्रुवम् ॥५७॥
मोहितस्तव रूपेण तथैव प्रतिपद्यते । यतस्तं शपथैर्धृत्वा दक्षिणेन करे ण वै ॥५८॥
वाच्यः कतिपयैः सुभ्रु दिनैरपगतैस्त्विति । सुरते तव चार्वङ्गि यदा मुग्धो हि लक्ष्यते ॥५९॥

तदा प्रहस्य राज्ञो वै स्मारणीयं पुरा वचः । यस्त्वया शपथो राजन्कृतो मद्वाक्यपालने ॥६०॥
तत्पालयमहीपाल मन्येऽहं समयस्त्विति । एवमुक्ते त्वया मुग्धो राजा वै सत्यगौरवात् ॥६१॥
पालयामि न सन्देहो ब्रूहि किं ते ददाम्यहम् । एवमुक्ते तु वचने त्वया वाच्यो वरानने ॥६२॥
रुक्माङ्गदो महीपालो धर्माङ्गदपिता शुभे । नोपवासस्त्वया कार्यो जातु वै हरिवासरे ॥६३॥
सुरतध्वंसकारी मे ह्युपवासो भवेत्प्रिय । सुमुग्धां यौवनोपेतां स्वभार्यां यो न सेवते ॥६४॥
पर्वापेक्षी दुराचारः स याति नरकं ध्रुवम् । त्रिरात्रमपविद्धाहं त्वया भूप उपोषणात् ॥६५॥
नाहं निमेषमप्येकं स्थातुं शक्ता त्वया विना । श्राद्धकाले तु सम्प्राप्ते उपाविष्टैर्द्विजैः किल ॥६६॥
याचते सङ्गमं भार्या यदि भोग्या तदैव सा । एवं सम्बोध्यमानोऽपि यदा राजा वचस्तव ॥६७॥
न करिष्यति चार्वङ्गि तदा वाच्यं परं वचः । यदि न त्यजसे राजन्नुपवासं हरेर्दिने ॥६८॥
स्वहस्तेन शिरश्छित्वा स्वपुत्रस्य वरासिना । धर्माङ्गदस्य राजेन्द्र ममोत्सङ्गक्षिप स्वयम् ॥६९॥
यद्येतन्मत्प्रियं त्वं हि न करोषि महीपते । धर्मक्षीणो भवान् गन्ता नरके नात्र संशयः ॥७०॥
श्रुत्वा त्वदीयं वचनं वराङ्गने न हिंस्यते प्राणसमं च पुत्रम् । सङ्गृह्य वाक्यं वसुधामराणां सम्भोक्ष्यते माधववासरेऽसौ ॥७१॥
ततो जनो यास्यति पूर्ववच्च यमान्तिकं किङ्करपाशबद्धः । लिपिप्रमाणं नरकाधिवासी भविष्यते साधु कृतं त्वया हि ॥७२॥
अथ यदि निहन्ति तनयं राजा सत्येन संयुतः श्रीमान् । निःशेषामरपूज्यं व्रजति पदं पद्मनाभस्य ॥७३॥

इति श्रीबृहन्नारदीयपुराणोत्तरभागे मोहिनीं प्रति ब्रह्मवाक्यं नाम सप्तमोऽध्यायः ॥७॥

आदितः श्लोकानां समष्टयङ्काः-१३,३७६+७३=१३,४४९



## ॥ अथाष्टमोऽध्यायः ॥

सौतिरुवाच ॥

सा श्रुत्वा ब्रह्मणो वाक्यं नारी कमललोचना । उवाच नाम मे देहि येन गच्छामि मन्दिरम् ॥१॥
पित्रा नाम प्रकर्तव्यमपत्यानां जगत्पते । नाम पापहरं प्रोक्तं तत्कुरुष्व कुशध्वज ॥२॥

ब्रह्मोवाच ॥

यस्मादिदं जगत्सर्वं त्वया सुन्दरि मोहितम् । मोहिनी नाम ते देवि सगु णं हि भविष्यति ॥३॥
दशावस्थागतः सम्यग् दर्शनात्ते भविष्यति । यदि प्राप्नोति वै सुभ्रु त्वत्सम्पर्कं सुखावहम् ॥४॥
एवमुक्ता वरारोहा प्रणम्य कमलासनम् । वीक्ष्यमाणामरैर्मार्गे प्रतस्थे मन्दराचलम् ॥५॥
तृतीयेन मुहूर्तेन सम्प्राप्ता गिरिमस्तकम् । यस्य संवेष्टने नागो वासुकिर्नहि पूर्यते ॥६॥
यो धृतो हरिणा पूर्वं मथितो देवदानवैः । षड्लक्षयोजनः सिन्धुर्यस्यासौ गह्वरो भवेत् ॥७॥
कूर्मदेहेन सम्पृक्तो यो न भिन्नो गिरिर्महान् । सृता येन राजेन्द्र सिन्धोर्गुह्यं प्रदर्शितम् ॥८॥
गतं ब्रह्माण्डमार्गेण पयो यस्माद्गिरेर्द्विजाः । कूर्मास्थि घर्षता येन पावको जनितो महान् ॥९॥
यस्मिन्स वसते देवः सह भूतैर्दिगम्बरः । न देवैर्दानवैर्वापि दृष्टो यो हि द्विजोत्तमाः ॥१०॥
दशवर्षसहस्राख्ये काले महति गच्छति । केयूरघर्ष णे येन कृतं देवस्य चक्रिणः ॥११॥
रत्नानां मन्दिरं ह्येष बहुधातुसमन्वितः ॥१२॥
क्रीडाविहारोऽपि दिवौकसां यस्तपस्विना यस्तपसोऽपि हेतु । सुराङ्गनानां रतिवर्द्धनो यो रत्नौषधीनां प्रभवो गिरिर्महान् ॥१३॥
दशैकसाहस्रमितश्च मूले तत्सङ्ख्यया विस्तरतां गतोऽसौ । दैर्घ्येण तावन्ति हि योजनानि त्रैलोक्ययष्टीव समुच्छ्रितोऽसौ ॥१४॥
सकाञ्चनै रत्नमयैश्च शृङ्गैः प्रकाशयन्भूमितलं वियच्च । यस्मिन्गतः कश्यपनन्दनो वै विरश्मितामेति विनष्टतेजाः ॥१५॥
काञ्चनाकारभूताङ्गं सप्राप्ता काञ्चनप्रभा । सूर्यतेजोनिहन्तारं मन्दरं तेजसा स्वयम् ॥१६॥
कुर्वती नृपकामार्थमुपविष्टा शिलातले । नीलकान्तिमये दिव्ये सप्तयोजनविस्तृते ॥१७॥
तस्यां शिलायां राजेन्द्र लिङ्गं तिष्ठति कौलिशम् । दशहस्त प्रमाणं हि विस्तरादूर्द्ध्वसंख्यया ॥१८॥
वृषलिङ्गेति विख्यातं प्रासादाभ्रसमं परम् । तस्मिन्बाला द्विजश्रेष्ठाश्चक्रे सङ्गीतमुत्तमम् ॥१९॥

तन्त्रीता लसमायुक्तं क्लमहानिकरं परम् । समीपवर्तिनी तस्य भूत्वा लिङ्गस्य भामिनी ॥२०॥
मूर्च्छनातालसहितं गान्धारध्वनिसंयुतम् । तस्मिन्प्रवृत्ते राजेन्द्रगीते मन्मथवर्द्धने ॥२१॥
बभूव स्थावराणां हि स्पृहा तस्मिन्मुनीश्वराः । न च दैवं न चादैवं गीतं तादृग्बभूव ह ॥२२॥
मोहिनीमुखनिर्गीतं गीतं सत्वविमोहनम् ॥२३॥
श्रुत्वैव गीतं हि दिगम्बरस्तु तेनैव रूपेण वराङ्गनायाः । कामातुरो भोक्तुमनाश्चचाल तां मोहिनीं पार्वतिदृष्टिलज्जः ॥२४॥
इति श्रीबृहन्नारदीयपुराणोत्तरभागे मोहिनीचरिते मन्दरर्णनं नामाऽष्टमोऽध्यायः ॥८॥
आदितः श्लोकानां समष्टयङ्काः-१३,४४९+२४=१३,४७३



## ॥ अथ नवमोऽध्यायः ॥

सौतिरुवाच ॥

रुक्माङ्गदस्तु राजेन्द्रो भुक्त्वा भोगांस्तुमानुषान् । सम्पूज्य बहुशो देवं पीताम्बरधरं हरम् ॥१॥
दत्वा मूर्ध्नि पदं विप्राः शत्रूणां रणशालिनाम् । कृत्वा शून्यं यमपथं जित्वा वैवस्वतं यमम् ॥२॥
वैकुण्ठस्य तु पन्थानं सम्पूर्णं मानवैः कृतम् । आहूय तनयं काले धर्माङ्गदमभाषत ॥३॥
एतां वसुमतीं पुत्र वसुपूर्णां समन्ततः । परिपालय वीर्येण स्वधर्मे कृतनिश्चयः ॥४॥
पुत्रे समर्थे जाते यो राज्यं न प्रतिपादयेत् । तस्य धर्मस्तथा कीर्तिर्विनस्यति न संशयः ॥५॥
पुत्र समर्थ भएरपनि जो राजा उसलाई राज्य जिम्मा दिँदैन, त्यो राजाको धर्म कीर्ति अवश्य नै नष्ट हुन्छ ।
समर्थेन च पुत्रेण यो न याति पिता सुखम् । अवश्यं पातकी सोऽपि विज्ञेयो भुवनत्रये ॥६॥
आफ्नो समर्थ पुत्रबाट यदि उसका पिता सुखी हुँदैनन् भने त्यस्ता पुत्रलाई तीनै लोकमा पातकी भनेर जान्नु ।
पितुर्भारक्षमः पुत्रो भारं नोद्वहते तु यः । मातुरुच्चारवज्जातो द्विजिह्वो विषवर्जितः ॥७॥
समर्थ भएर पनि जुन छोरो पिताको बोझ बोक्दैन, त्यस्तो पुत्रको जन्म माताको मलपूत्र सरह जन्मिएको हो भनी सम्झनु ।
स पुत्रो योऽधिकख्यातः पितुर्भवति भूतले । प्रकाशयति सर्वत्र स्वकरैरिव भास्करः ॥८॥
पुत्र त्यही हो, जो लोकमा आफ्ना पिताकोभन्दा बढी ख्याति कमाउँदछ, आफ् नै किरणका बलले सूर्य चम्किएझैं चमकन सक्ने नै यथार्थतः पुत्र हुन्छ ।
पुत्रापनयजैर्दुःखै रात्रौ जागर्ति यत्पिता । स पुत्रो नरकं याति यावदाभूतसम्पलवम् ॥९॥
पुत्रले गरेको अन्यायका कारण पिता रातभर सुत्न सक्दैन भने, त्यस्तो पुत्र एक कल्पसम्म नरकमा पर्दछ छ
पितुर्वचनमादृत्य सर्वं यः कुरुते गृहे । स याति देव सायुज्यं स्तूयमानो दिवि स्थितैः ॥१०॥
जो पुत्र घरमा बसेर पिताको आज्ञा पालन गर्दछ, उ देवताबाट प्रशंसित भई भगवान्को नजिक हुन्छ ।पेज ५८७।
सोऽहं प्रजाकृते पुत्र आसक्तः कर्मभिः क्षितौ । न भुक्तं नैव सुप्तं तु स्वेच्छया पालने स्थितः ॥११॥
असमर्थे त्वयि सुत न प्राप्तं हि मया सुखम् । विष्णुवासरभोक्तॄणां निग्रहे कृतबुद्धिना ॥१२॥
केचिच्छैवे स्थिता मार्गे सौरे केचिद्व्यवस्थिताः । विरिञ्चिमार्गगाश्चान्ये पार्वत्याश्च स्थिताः परे ॥१३॥
सायं च प्रातरासीना अग्निहोत्रे व्यवस्थिताः । बालो युवा वा वृद्धो वा गुर्वि णी वा कुमारिका ॥१४॥
सरोगो विकलो वापि न शक्नोति ह्युपोषितुम् । इत्येवं जल्पितं यैस्तु तान्निरस्य समंततः ॥१५॥
वचोभिस्तु पुराणोक्तैर्वासरैर्बहुभिस्त्वहम् । सम्बोधयित्वा बहुशः प्रजानां सुखहेतवे ॥१६॥
निगृह्य तान्हरिदिने निराहारान्करोमि च । शास्त्रदृष्ट्या तु विदुषो मूर्खान्दण्डनपूर्वकम् ॥१७॥
शासयित्वा कृताः सर्वे निराहारा हरेर्दिने । तेन मे न सुखं किञ्चिदवलीढं धरातले ॥१८॥
कच्चिन्न दुःखेन जनान्योजयेत्किल पुत्रक । स्वेभ्यो वापि परेभ्यो वा या रक्षेच्च प्रजा नृपः ॥१९॥
तस्यामी ह्यक्षया लोकाः पुराणेषु प्रकीर्तिताः । सोऽहं प्रजाकृते सौम्य संस्थितो नात्मनः क्वचित् ॥२०॥
सौख्यमिच्छाम्यहं भोक्तुं मृगयादिसमुद्भवम् । न पानद्यूतजं पुत्र कामयेऽहं कदाचन ॥२१॥

एषु सक्तोऽचिरात्पुत्र विनाशं याति पार्थिवः । त्वत्प्रसादादहं पुत्र मृगया व्याजतोऽधुना ॥२२॥
गिरीन्वनानि सरितः सरांसि विविधानि च । भोक्तुकामः प्रियान्कामांस्त्वयि भारं निवेश्य च ॥२३॥
एतत्सर्वं समाख्यातं यत्स्थितं हृदये मम । कृते तव महाकीर्तिरकृते नरकस्थितिः ॥२४॥
धर्मांगद उवाच ॥
सर्वमेतत्करिष्यामि भुङ्क्ष्व भोगान्मनोऽनुगान् । गुर्वीं राज्यधुरं तात त्वदीयामुद्धराम्यहम् ॥२५॥
नहि मेऽन्यः स्मृतो धर्मस्त्वद्वाक्यकरणं विना । पितुर्वाक्यमकुर्वा णः कुर्वन्धर्मानधो व्रजेत् ॥२६॥
तस्मात्करिष्ये वचनं त्वदीयं प्राञ्जलिः स्थितः । एवमुक्ते तु वचने राजा हृष्टो बभूव ह ॥२७॥
गन्तुकामो मृगान्भूयो लब्ध्वा ज्ञात्वा वनं ततः । धर्माङ्गदोऽपि दृष्टात्मा प्रजा आहूय चाब्रवीत् ॥२८॥
पित्रा नियुक्तो भवतां पालनाय हिताय च । पितुर्वाक्यं मया कार्यं सर्वथा धर्ममिच्छता ॥२९॥
नान्यो हि धर्मः पुत्रस्य पितुर्वाक्यं विना प्रजाः । मयि दण्डधरे शास्ता न यमो भवति क्वचित् ॥३०॥
एवं ज्ञात्वा तु युष्माभिः स्मर्तव्यो गरुडध्वजः । ब्रह्मार्पणप्रयोगेण यजनीयो जनार्दनः ॥३१॥
ममत्वं हि परित्यज्य स्वजातिविहितेन च । येन वो ह्यक्षया लोका भवेयुर्नात्र संशयः ॥३२॥
पितृमार्गाधिको ह्येष भवतां दर्शितः प्रजाः । ब्रह्मार्पणक्रियायुक्ता भवन्तु ज्ञानकोविदाः ॥३३॥
न भोक्तव्यं हरिदिने पैत्रो मार्गस्तु शाश्वतः । विशेषो हि मयाख्यातो भवतां ब्रह्मसंस्थितिः ॥३४॥
प्रयोक्तव्या च तत्त्वज्ञैः पुनरावृत्ति दुर्लभा । यदुपोष्यं हरिदिनं तदवश्यमिति स्थितिः ॥३५॥
अनुनीय प्रजाः सर्वाः समाश्वास्य पुनः पुनः । न दिवा न च शर्वर्यां शेते धर्मां गदः सदा ॥३६॥
सर्वत्र भ्रमते शौर्यात्कुर्वन्निष्कण्टकां क्षितिम् । पटहो रटते नित्यं मृगारिरिपुमस्तके ॥३७॥
अभुक्त्वा द्वादशीं लोका ममत्वेन विवर्जिताः । त्रिविधेषु च कार्येषु देवेशश्चिन्त्यतां हरिः ॥३८॥
हव्यकव्यवहो देवः स एव पुरुषोत्तमः । सूर्ये यो हि कृशाकाशे विसर्गे जगतां पतिः ॥३९॥
स्मर्त्तव्यो मनुजैः सर्वैर्धर्मकामार्थकामुकैः । स्वजातिविहितोऽप्येवं सन्मार्गे चैव माधवः ॥४०॥
स एव भोक्ता भोक्तव्यः स एव पुरुषोत्तमः । विनियोगस्तु तस्यैव सर्वकर्मसु युज्यते ॥४१॥
एवं रटन्ति विप्रेन्द्राः पटहे मे घनिःस्वने । एवं धर्ममवाप्याथ पितां धमाङ्गदस्य हि ॥४२॥
ज्ञात्वा पुत्रं क्रियोपेतमात्मनो ह्यधिकं द्विजाः । उवाच भार्यां संहृष्टः स्थितां लक्ष्मीमिवापराम् ॥४३॥
संध्यावलि ह्यहं धन्यस्त्वं चापि वरवर्णिनी । उभयोर्जनितः पुत्रः शशाङ्कधवलः क्षितौ ॥४४॥
कर्णाभ्यां श्रूयते मोक्षो न दृष्टः केनचित्क्वचित् । सोऽस्माभिरधिकं प्राप्तो मोक्षः सत्पुत्रसम्भवः ॥४५॥
पुत्रे विनयसम्पन्ने वृत्ताशौर्यसमन्विते । प्रतापिनि वरारोहे पितुर्मोक्षो गृहे ध्रुवम् ॥४६॥
आनन्दं ब्रह्मणो रूपं शतानन्दः सुतेन यः । पिता भवति चार्वङ्गि सत्कर्मकरणैः शुभैः ॥४७॥
नैतत्साम्यं भवेद्देवि लोके स्थावरजङ्गमे । सत्पुत्रः पितुरादाय भारमुद्वहते तु यः ॥४८॥
सोऽहं गमिष्यामि वनाय हृष्टो विहारशीलो मृगहिंसनाय । स्वेच्छाचरश्चाथ विशालनेत्रे विमुक्तपापो जनरक्षणाय ॥४९॥
इति श्रीबृहन्नारदीयपुराणोत्तरभागे रुक्माङ्गदधर्माङ्गदसंवादो नाम नवमोऽध्यायः ॥९॥
आदितः श्लोकानां समष्ट्यङ्काः-१३,४७३+४९=१३,५२२



## ॥ अथ दशमोऽध्यायः ॥

वसिष्ठ उवाच ॥
ततः प्राह विशालाक्षी भर्तुर्वाक्यं निशम्य सा । सत्यमुक्तं त्वया राजन्पुत्रसौख्यात्परं सुखम् ॥१॥
न भवेदिह राजेन्द्र मुनीनां भाषितं यथा । तुल्यं भवति लोकेऽस्मिन् विष्णवाख्यस्य परस्य हि ॥२॥
पुत्रे भारस्त्वया न्यस्तः सप्तद्वीपसमुद्भवः । मार्गी हिंसां परित्यज्य यज्ञैरिष्ट्वा जनार्दनम् ॥३॥
भोगस्पृहां परित्यज्य सेवस्व सुरनिम्नगाम् । एतन्न्याय्यं भवति भो न न्याय्यो मृगनिग्रहः ॥४॥
हृदये नखपातो हि वृद्धाया भूपते यथा । तथा विषयसेवा हि पितॄणां पुत्रिणां विदुः ॥५॥

गृहे वापि हृषीकेशं पूजयस्व महीपते । निर्दोषमृगयूथानां न युक्तं सूदनं तव ॥६॥
अहिंसा परमो धर्मः पुराणे परिकीर्तितः । हिंसया वर्तमानस्य व्यर्थो धर्म्मोभवेदिति ॥
कुर्वन्नपि वृथा धर्मान्यो हिंसामनुवर्तते ॥७॥
परैरूपहतां भूप नोपभुञ्जन्ति साधवः । षड्विधं नृप ते प्रोक्तं विद्वद्भिर्जीवघातनम् ॥८॥
अनुमोदयिता पूर्वं द्वितीयो घातकः स्मृतः । विश्वासकस्तृतीयोऽपि चतुर्थो भक्षकस्तथा ॥९॥
पञ्चमः पाचकः प्रोक्तः षष्ठो भूपात्र विक्रयी । हिंसया संयुतं धर्ममधर्मं च विदुर्बुधाः ॥१०॥
न पापं कुरुते भूप पुत्रे भारं निवेश्य वै । धर्मं समाश्रयन्सम्यक्सञ्जातपलितः पिता ॥११॥
परित्यज्य इमं भावं मृगहिंसासमुद्भवम् । मृगशीला हि राजानो विनष्टाः शतशो नृप ॥१२॥
तस्माद्दुष्टं हि तन्मन्ये यदत्र मृगपातनम् । दया वरा मृगे राज्ञां धर्मिणामपि दृश्यते ॥१३॥
निवारितो मया हि त्वं हितबुद्ध्या पुनः पुनः । एवं ब्रुवाणां तां भार्यां नृपो वचनमब्रवीत् ॥१४॥
नहिहिंसे मृगान्देवि मृगव्याजेन कानने । पर्य्यटिष्ये धनुष्पाणिः कुर्वन्कण्टकशोधनम् ॥१५॥
जनमध्ये सुतो मेऽस्तु काननेऽहं वरानने । श्वापदेभ्यश्च दस्युभ्यः प्रजा रक्ष्या महीभृता ॥१६॥
आत्मनावाथ पुत्रेण गोपनीयाः प्रजा शुभे । प्रजा अरक्षन्नृपतिः सधर्म्मोऽपि व्रजत्यधः ॥१७॥
सोऽहं रक्षणमुद्दिश्य गमिष्यामि वनं प्रिये । विमुक्तभावोऽहमिति मेरुश्रृङ्गे रविर्यथा ॥१८॥
एवमुद्दिश्य तां राजा आरुरोह हयोत्तमम् । दोषापतिसमप्रख्यं निर्दोषं क्षितिभूषणम् ॥१९॥
देववाहसमं रूपे प्रभञ्जनसमं जवे । धरामादृत्य भूपालो दत्वा तं दक्षिणं करम् ॥२०॥
सहस्रकोटिदातारं कामिनीकुचपीडनम् । अशोकपल्लवाकारं वज्राङ्कुशविरोहणम् ॥२१॥
सम्प्रतस्थे महीपालश्चालयानो महीतलम् । साधयानो ययौ देशान्कान्त्रं स नृपोत्तमः ॥२२॥
वाजिवेगेन निर्द्धूता वारणाः स्यन्दना हयाः । पदातयो निपेतुस्ते मू र्च्छिताः क्षितिमण्डले ॥२३॥
स राजा सहसा प्राप्तो मुनीनामाश्रमं परम् । योजनानां समुत्तीर्य शतमष्टोत्तरं नृप ॥२४॥
प्रविवेशाश्रमं रम्यं कदलीखण्डमण्डितम् । अशोकबकुलोपेतं पुन्नागसरलावृतम् ॥२५॥
मातुलिङ्गैः कपित्थैश्च खर्जूरैः पनसादिभिः । नारिकेलैस्तथा तालैः केतकैः सिन्दुवारकैः ॥२६॥
चन्दनैः सतमालैश्च सालैः पिप्पलचम्पकैः । व्र१मुकैर्दाडिमैश्चैव धात्रीवृक्षैः सहस्रशः ॥२७॥
निम्बवृक्षैश्च बहुशस्तथाम्रैर्लोध्रपादपैः । परिपक्वफलैर्नम्रैः खगारूढैः समावृतम् ॥२८॥
हृद्येन वायुना युक्तं पुष्पगन्धावृतेन हि । पश्यमानो मुनिं राजा ददर्श हुतभुक्प्रभम् ॥२९॥
वामदेवं द्विजवरं बहुशिष्यसमावृतम् । अवरुह्य हयाद्दृष्ट्वा प्रणनाम च सादरम् ॥३०॥
तेनापि मुनिना राजा ह्यर्घाद्यैरभिपूजितः । उपविश्यासने कौशे प्राह संहृष्टया गिरा ॥३१॥
अद्य मे पातकं क्षीणं सम्प्राप्तं कर्म णः फलम् । दृष्ट्वा तव पदाम्भोजं सम्यग्ध्यानपरस्य च ॥३२॥
तच्छ्रुत्वा वचनं तस्य रुक्माङ्गदमहीपतेः । सम्पृष्ट्वा कुशलं प्राह वामदेवो मुदान्वितः ॥३३॥
राजंस्त्वयातिपुण्येन विष्णुभुक्तेन वीक्षितः । ममाश्रमो महाभाग पु ण्यो जातो धरातले ॥३४॥
कस्तेऽन्यस्तुल्यतामेति पार्थिवो धरणीतले । येन वैवस्वतो मार्गो भग्नो निर्जित्य वै यमम् ॥३५॥
प्रापितः सकलो लोको वै कुण्ठं पदमव्ययम् । उपोषयित्वा नृपतेद्वादशीं पापनाशिनीम् ॥३६॥
चतुर्भिः शोभनोपायैः प्रजाः सं यम्य भूतले । स्वकर्मस्था विकर्मस्था नीता मधुभिदः पदम् ॥३७॥
सोऽस्माकं द्रष्टुकामानां सम्प्राप्तो दर्शनं नृप । श्वपचोऽपि महीपाल विष्णुभक्तो द्विजाधिकः ॥३८॥
विष्णुभक्तिविहीनस्तु द्विजोऽपि श्वपचाधिकः । दुर्लभा भूप राजानो विष्णुभक्ता महीतले ॥३९॥
नावैष्णवो भवेद्राजा क्षितिलक्ष्मीप्रसाधकः । यो न राजा हरेर्भक्तो देवेष्वन्येषु भक्तिमान् ॥४०॥
यथा जारे पतिं त्यक्त्वा रता स्त्री स तथा नृपः । एवं व्यतिक्रमस्तस्य नृपतेर्भवति ध्रुवम् ॥४१॥
धर्मस्यार्थस्य कामस्य प्रज्ञायाश्च गतेरपि । तत्त्वया न्यायविहितं कृतं विष्णोः प्रपूजनम् ॥४२॥
तेन धन्योऽसि नृपते वयं धन्यास्तवेक्षणात् । इत्येवं भाषमाणं तु वामदेवं नृपोत्तमः ॥४३॥
उवाचावनतो भूत्वा प्रकृत्या विनयान्वितः । क्षामये त्वा द्विजश्रेष्ठ नाहमेतादृशो विभो ॥४४॥

त्वत्पादपांसुना तुल्यो नाहं विप्र भवामि हि । न विप्रेभ्योऽधिका देवा भवन्तीह कदाचन ॥४५॥
परितुष्टैर्द्विजैर्भक्तिर्जन्तोर्भवति माधवे । द्वेष्यो भवति तै रुष्टैः सत्यमेतन्मयेरितम् ॥४६॥
तमाह वामदेवस्तु ब्रूहि किं ते ददाम्यहम् । नादेयं विद्यते राजन्गृहायातस्य तेऽधुना ॥४७॥
अभीष्टं हि महीपाल यो ददाति महीतले । पटहं वासरे विष्णोः प्रजाभोजनवारणम् ॥४८॥
तमाह नृपतिर्विप्रं कृताञ्जलिपुटस्तदा । प्राप्तमेव मया सर्वं त्वदङ्घ्रियुगलेक्षणात् ॥४९॥
ममैकः संशयो ब्रह्मन् वर्तते बहुकालतः । तं पृच्छामि द्विजाग्र्यं त्वां सर्वसन्देहभञ्जनम् ॥५०॥
त्रैलोक्यसुन्दरी भार्या मम केन सुकर्म णा । या विलोकयते दृष्ट्या मां सदा मन्मथाधिकम् ॥५१॥
यत्र यत्र पदं देवी ददाति वरवर्णिनी । तत्र तत्र निधानानि प्रकाशयति मेदिनी ॥५२॥
यस्याश्चाङ्गं जराहीनं वलीपलितवर्जितम् । सदा भाति मुनिश्रेष्ठ शारदेन्दुप्रभा यथा ॥५३॥
विनाग्निनापि सा विप्र साधयत्येव षड्रसम् । अन्नं पचति यत्स्वल्पं तस्मिन्भुञ्जन्ति कोटयः ॥५४॥
पतिव्रता दानशीला सर्वभूतसुखावहा । नावज्ञा क्रियते ब्रह्मन् वाक्येनापि प्रसूतया ॥५५॥
यस्यां जातस्तु तनयो ममाज्ञायां स्थितः सदा । अहमेव धरापृष्ठे पुत्री द्विजवरोत्तम ॥५६॥
यस्य पुत्रः पितुर्भक्तो ह्यधिको गुणसञ्चयैः । एकद्वीपपतिश्चाहं विदितो धरणीतले ॥५७॥
पुत्रो ममाधिको जातः सप्तद्वीपप्रपालकः । मदर्थे येन विप्रेन्द्र समानीता नृपात्मजा ॥५८॥
विद्युल्लेखेति विख्याता रणे जित्वा महीभुजः । अथ तेनाधिपतिना रूपद्रविणशालिना ॥५९॥
षण्मासेन रणे जित्वा कृत्वा सर्वान्निरायुधान् । यो गत्वा प्रमदाराज्यं जित्वा ताः प्रमदा रणे ॥६०॥
आजहार शुभास्तासां मध्यादष्टौ वराङ्गनाः । प्रददौ मयि ताः सर्वां प्र णम्य च पुनः पुनः ॥६१॥
यानि वासांसि दिव्यानि यानि रत्नानि भूतले । तानि मे प्रददौ पुत्रो जनन्या तूपवर्णितः ॥६२॥
एकाह्ना पृथिवीं सर्वामतीत्य बहुयोजनाम् । पुनरायाति शर्वर्यां मत्पादाभ्यङ्गकारणात् ॥६३॥
निशीथेऽङ्गानि संवाह्य द्वारि तिष्ठति दंशितः । प्रबोधयन्प्रेष्यजनान्निद्रया सङ्कुलेन्द्रियान् ॥६४॥
तथायं मे मुनिश्रेष्ठ देहो रोगविवर्जितः । अप्रमेयं मम सुखं वशगा हि प्रिया गृहे ॥६५॥
वाजिनो वारणाश्चैव धनधान्यमनन्तकम् । वर्तते हि जनः सर्वो ममाज्ञापालकः क्षितौ ॥६६॥
केन कर्मप्रभावेण ममेदं साम्प्रतं सुखम् । इह जन्मकृतं वापि परजन्मकृतं तथा ॥६७॥
मम पुण्यं वद ब्रह्मन् विचार्य स्वमनीषया ॥६८॥
देहे न रोगो वशगाप्रिया च गृहे विभूतिर्नृहरौ च भक्तिः । विद्वत्सु पूजा द्विजदानशक्तिर्मन्येऽहमेतत्सुकृतप्रसूतम् ॥६९॥

इति श्रीबृहन्नारदीयपुराणोत्तरभागे रुक्माङ्गदवामदेवसंवादो नाम दशमोऽध्यायः ॥१०॥

आदितः श्लोकानां समष्ट्यङ्काः-१३,५२२+६९=१३,५९१



## ॥ अथैकादशोऽध्यायः ॥

वसिष्ठ उवाच ॥

तच्छ्रुत्वा नृपतेर्वाक्यं महाज्ञानी मुनीश्वरः । चिन्तयित्वा क्षणं ज्ञात्वा कारणं तमुवाच ह ॥१॥

वामदेव उवाच ॥

पुरा त्वमवनीपाल शूद्र जातिसमुद्भवः । दारिद्र्येण पराभूतो दु ष्टया भार्यया तथा ॥२॥
परसेवनया चैव वेतनेन भुजिक्रिया । निवसन्दुःखसन्तप्तो बहुवर्षाणि पार्थिव ॥३॥
कदाचिद्द्विजसंसर्गात्तीर्थयात्रां गतो भवान् । ततः सर्वाणि तीर्थानि परिव्र न्म्य महीपते ॥४॥
द्विजसेवापरो जातो मथुरां पु ण्यरूपिणीम् । तत्र स्नातं त्वया विप्रसङ्गेन यमुनाजले ॥५॥
विश्रान्तिसंज्ञके तीर्थे सर्वतीर्थोत्तमोत्तमे । मन्दिरे च वराहस्य कथ्यमानां कथां नृप ॥६॥
पुराणोक्तां च शुश्राव अशून्यशयनव्रतम् । चतुर्भिः पारणैर्यस्य निष्पत्तिस्तु विधीयते ॥७॥
येन चीर्णेन देवेशो जीमूताभः प्रसीदति । लक्ष्मीभर्ता जगन्नाथो निःशेषाघौघनाशनः ॥८॥

तत्कृतं भवता राजन्पुनरभ्येत्य मन्दिरम् । अशून्यशयनं पुण्यं गृहे वृद्धिकरं परम् ॥९॥
अकृत्वेदं महाराज व्रतं पातकनाशनम् । गार्हस्थ्यमनुतिष्ठेत वन्ध्यावन्निष्फलो भवेत् ॥
सुखमीदृग्विधं लोके दुर्लभं प्रतिभाति मे ॥१०॥
श्रावणस्य तु मासस्य द्वितीयायां महीपते । ग्र ाह्यमेतद्व्रतं पुण्यं जन्ममृत्युजरापहम् ॥११॥
लक्ष्मीयुक्तो जगन्नाथः पूजनीयोऽत्र पार्थिव । फलैः पुष्पैस्तथा धूपैश्चारुरक्तानुलेपनैः ॥
शय्यादानैर्वस्त्रदानैस्तथा ब्राह्मणभोजनैः ॥१२॥
तत्त्वया सर्वमेतद्धि कृतं राजन्सुदुस्तरम् । तस्यैव कर्मणः पुष्टिरशून्यस्य महीपते ॥
इमानेवाग्रतः पुण्यास्त्वयोक्तान्विस्तराच्छृणु ॥१३॥
नाप्रसन्ने जगन्नाथे भवेयुरिति निश्चितम् । पूर्वजन्मनि देवेशस्त्वयाशून्येन पूजितः ॥१४॥
इह जन्मनि राजेन्द्र द्वादश्यार्चयसे हरिम् । अवश्यं प्राप्यसे राजन् विष्णोः सायुज्यतां ध्रुवम् ॥१५॥
एष प्रश्नो मया राजन्व्याख्यातस्ते सुमङ्गलः । सम्पदां प्रभवोपेतो ज्ञातेरुत्कर्षणार्थकः ॥१६॥
किमन्यत्ते महीपाल ददामीह करोमि च । अवश्यं सर्वयोग्योऽसि भक्तोऽसि त्वं जनार्दने ॥१७॥
राजोवाच ॥
उत्सुकोऽहं द्विजश्रेष्ठ मन्दरं पर्वतं प्रति । तत्राश्चर्या ण्यनेकानि द्रष्टुकामस्तवाज्ञया ॥१८॥
लघुर्भूत्वा गुरुं त्यक्त्वा पुत्रोपरि द्विजोत्तम । राज्यशासनजं भारं दुर्वहं यच्च भूमिपैः ॥१९॥
सोऽहं स्वेच्छाचरो यातो मत्कृत्यं तनयश्चरेत् । तच्छ्रुत्वा वचनं राज्ञो वामदेवोऽब्रवीदिदम् ॥२०॥
एतद्धि परमं कृत्यं पुत्रस्य नृपपुङ्गव । यत्क्लेशात्पितरं प्रेम्णा विमोचयति सर्वदा ॥२१॥
पितुर्वचनकारी च मनोवाक्कायशक्तितः । तस्य भागीरथीस्नानमहन्यहनि जायते ॥२२॥
निरस्य पितृवाक्यं तु व्रजेत्स्नातुं सुरापगाम् । नो शुद्धिस्तस्य पुत्रस्य इतीत्थं वैदिकी श्रुतिः ॥२३॥
स त्वं गच्छ यथाकामं कृतकृत्योऽसि भूपते । हरिप्रसादात्ते जातो वंशे पुत्रः स पु ण्यकृत् ॥२४॥
एवमुक्ते तु मुन्नि समारुह्य तुरङ्गमम् । ययौ शीघ्रगतिः श्रीमान्सदागतिरिव स्वयम् ॥२५॥
वीक्ष्यमाणो गिरीन्सर्वान्वनानि सरितस्तथा । सर्वाश्चर्याणि राजेन्द्रः सरांस्युपवनानि च ॥२६॥
सोऽचिरेणैव कालेन सम्प्राप्तो मन्दराचलम् । भ्रामयित्वा गिरिं श्वेतं गन्धमादनमेव च ॥२७॥
अतीत्य च महामेरुं दृष्ट्वा चैवोत्तरान्कु रून् । शतसूर्यप्रतीकाशं सर्वतः कांचनावृतम् ॥२८॥
संघृष्टं हरिबाहुभ्यां स्रवन्तं काञ्चनं रसम् । तद्धूभागं नगाकीर्णं बहुधातुविभूषितम् ॥२९॥
बहुनिर्झरसंयुक्तं बहुकन्दरभूषितम् । निम्नागायुतसम्पूर्णं धौतं गङ्गाजलैः शुभैः ॥३०॥
विश्वस्तैर्युवतीवृन्दैः कान्ताशर्मोपसेविभिः । घटप्रमाणैर्नृपते परिपक्वैः सुगन्धिभिः ॥३१॥
फलैर्युवतिसम्भूतैः कुचैरिव विभूषितम् । द्विरेफध्वनिसंयुक्तं कोकिलस्वरनादितम् ॥३२॥
अनेकसत्त्वविरुतैः समन्तान्नादितं गिरिम् । सम्पश्यमानो नृपतिर्विवेश स महागिरिम् ॥३३॥
आरोढुकामस्तु कुतूहलात्तमन्वेषयन्केन पथा प्ररोहम् । स वीक्षते यावदसौ समन्तात्तावत्समस्तं द्रुमपक्षिसंघम् ॥३४॥
विसर्पमाणं ध्वन्निा गृहीतं विमो हिनीवक्त्रसमुद्भवेन । उपप्लवन्तं तरसा महीपस्तेनैव सार्द्धं स जगाम तूर्णम् ॥३५॥
तस्याऽपि कर्णे ध्वनिराविवेश विमोहिनीवक्त्रसमुद्भवो यः । विमोहितो येन विमुच्य वाहं त्रिविक्रमेणेव विलङ्घमानम् ॥३६॥
मार्गं गिरेर्मोहिनिगीतमुग्धं क्षणेन राजा सहसा ददर्श । गिरौ स्थितां तप्तसुवर्णभासं कामस्य यष्टीमिव निर्मितां च ॥३७॥
शक्रस्य लिङ्गं गगने प्रसक्तं सम्पूजयन्तीमिव लोकसूत्यै । क्षमास्वरूपामिव वै रसाया गिरेः सुताया इव रूपराशिम् ॥३८॥
सिन्धोस्तु वेलामिव रूपयुक्तां तस्यास्तनुं वै रतिमन्दिराख्याम् । विकर्षमाणां सहसा त्रिनेत्रं लिङ्गाश्रयं देवविनोदनार्थम् ॥३९॥
तत्पुण्यकर्त्तुर्मनसाभिलाषां व्यवस्थितो मोहिनिरूपदर्शी । विमोहितोऽसौ निपपात राजा विमोहिनीकामशरे ण विद्धः ॥४०॥
ज्वरेण तीव्रेण गृहीतदेहः समीपमस्याः स ससर्प शीघ्रम् । विसर्पिणं भूमिपतिं सुनेत्रा विलोकयामास कटाक्षदृष्ट्या ॥४१॥
विमुच्य वीणां विरराम गीताप्राप्तं च कार्यं सहसैव मेने । विधूनयन्ती मृगपक्षिसङ्घान्सुवाससा गण्डभुजौ निवार्य ॥४२॥
शिलीमुखान् श्वाससुगन्धमुग्धान् जगाम देवी नृपतेः समीपम् । त्यक्त्वा हरं पूज्यतमं सुलिङ्गं गत्वा तु पार्श्वे तमुदारचेष्टा ॥४३॥
विमोहिनी नीरजपत्रनेत्रा उवाच वाक्यं मधुरं मनोज्ञम् । रुक्माङ्गदं कामशराभितप्तमुत्तिष्ठ राजन्वशगा तवाहम् ॥४४॥

किं मूर्च्छया देहमिमं क्षिणोषि यस्त्वं धराभारमिमं महान्तम् । तृणीकृतं भूप समुद्वहेथा यन्मामकं रूपमवेक्ष्य हारि ॥४५॥
किं मुह्यसे दुर्बलगौरिवेह पङ्के निमग्ना सुदृढो भव त्वम् । धीरो ऽसि वीरोऽसि विडम्बयेथाः किमर्थमात्मानमुदारचेष्टम् ॥४६॥
यद्यस्ति वाञ्छा तव भूपतीश ममानुकूले सुरतेऽतिहृद्ये । प्रदाय दानं च सुधर्ममुक्तं भुंक्ष्व स्वदासीमिव मां रतिज्ञाम् ॥४७॥

इति श्रीबृहन्नारदीयपुराणोत्तरेभागे मोहिनीदर्शनं नाम एकादशोऽध्यायः ॥११॥

आदितः श्लोकानां समष्ट्यङ्काः-१३,५९१+४७=१३,६३८



## ॥ अथ द्वादशोऽध्यायः ॥

वसिष्ठ उवाच ॥

व्याहृते शोभने वाक्ये मोहिन्या नृपतिस्तदा । उन्मील्य नेत्रे राजेन्द्र शतपत्रनिभे तथा ॥१॥
सगद्गदमुवाचेदं मुग्धो मोहिनिदर्शनात् । मया बाले सुबहुशः पूर्णचन्द्रनिभाननाः ॥२॥
दृष्टास्तथानुभूताश्च नेदृग्दृष्टं वपुः क्वचित् । यादृशं त्वं धारयसे रूपं लोकविमोहनम् ॥३॥
सोऽहं दर्शनमात्रेण त्वदीयेन वरानने । मनोभवशरैर्विद्धः पतितः सहसा क्षितौ ॥
अजल्पितवचो देवि मोहितस्तव तेजसा ॥४॥
कुरु प्रसादं करभोरु मह्यं दास्यामि सर्वं तव चित्तसंस्थम् । नादेयमस्तीह जगत्त्रयेऽपि तवानुरागेण निबद्धचेतसः ॥५॥
इमां धरां भूधरभूषिताङ्गीं समुद्रवस्त्रां शशिसूर्यनेत्राम् । घनस्तनीं व्योमसुबद्धदेहां निष्काननां सुन्दरि वामशीलाम् ॥६॥
पातालगुह्यां बहुवृक्षरोम्णीं सप्ताधरां सुभ्रु तवास्मि दाता । सकोशबद्धां गजवाजिपूर्णां समन्त्रिहृद्यां नगरैः समेताम् ॥७॥
आत्मानमपि दास्यामि तवा चार्वङ्गि सङ्गमे । किं पुनर्द्ध नरत्नादि प्रसीद मम मोहिनि ॥८॥
नृपस्य वचनं श्रुत्वा मोहिनी मधुराक्षरम् । समुवाच स्मितं कृत्वा तमुत्थाप्य नृपं तदा ॥९॥
न धरां भूधरोपेतां वरये वसुधाधिप । यद्विदिष्याम्यहं काले तत्कार्यमविशङ्कया ॥१०॥
भजिष्यामि न सन्देहः कुरुष्व समयं मम ।

राजोवाच ॥

येन सन्तुष्यसे देवि समयं तं करोम्यहम् ॥११॥ दशावस्थां गतो देहो मम त्वत्सङ्गमं विना ॥१२॥

मोहिन्युवाच ॥

दीयतां दक्षिणो हस्तो बहुधर्म करस्तव । येन मे प्रत्ययो राजन् वचने तावके भवेत् ॥१३॥
राजा त्वं धर्मशीलोऽसि सत्यकीर्तिर्जगत्त्रये । न वक्रास्यनृतं काले मार्गोऽयं लौकिकः कृतः ॥१४॥
एवं ब्रुवाणां राजेन्द्रो मोहिनीं हृच्छयातुरः । अब्रवीन्नृपतिस्तां तु सुप्रसन्नमना नृप ॥१५॥
जन्मप्रभृति वामोरु नानृतं भाषितं मया । स्वैरेष्वपि विहारेषु कदापि वरवर्णिनि ॥१६॥
अथवा व्याहृतैर्वाक्यैः किमेभिः प्रत्ययाक्षरैः । दत्तो ह्येष मया हस्तो दक्षिणः पुण्यलाञ्छनः ॥१७॥
यन्मया सुकृतं किञ्चित्कृतमाजन्म सुन्दरि । तत्सर्वं तव वामोरु यदि कुर्यान्न ते वचः ॥१८॥
अन्तरे ह्येष दत्तो मे धर्मो भार्या भवाङ्गने । तव रूपेण मे क्षोभः सहसा प्रत्युपस्थितः ॥१९॥
ऋतध्वजसुतश्चाहं नाम्ना रुक्माङ्गदो नृपः । इक्ष्वाकुवशसम्भूतः सुतो धर्माङ्गदो मम ॥२०॥
मृगव्याजेन गहनं प्रविष्टश्चारुलोचने । ततो दृष्टो वने हृद्यो वामदेवाश्रमो मया ॥२१॥
मुनिना जल्पितं तत्र किञ्चित्तेन विसर्जितः । आरुह्य वाहनश्रे ष्ठं मन्दरं द्रष्टुमागतः ॥२२॥
भ्रममाणो गिरिवरं कुतूहलमनास्तदा । प्राप्तं मच्छ्रवणे गीतं तव वक्त्रविनिर्गतम् ॥२३॥
तेन गीतेन चाकृष्टस्त्वत्समीपमुपागतः । दृष्टेः पथमनुप्राप्ता मम त्वं चारुलोचने ॥२४॥
ततोऽहं मूर्च्छितो देवि विसंज्ञः पतितः क्षितौ । साम्प्रतं चेतनायुक्तस्तव वाक्यामृतेन हि ॥२५॥
पुनर्जातमिवात्मानं मन्येऽहं लोकमोहिनि । प्रत्युत्तरप्रदानेन प्रसादं कर्त्तुमर्हसि ॥२६॥
नृपेणैवं समुद्दिष्टा मोहिन्याहोत्तरं वचः । अहं ब्रह्मभवा राजंस्त्वदर्थं समुपागता ॥२७॥
श्रुत्वा कीर्तिं स्मरोपेता मन्दरं कनकाचलम् । परित्यज्य सुरान्सर्वान्विश्वम्भरपुरोगमान् ॥२८॥

समाहितमनास्त्वत्र तपस्यानिरता स्थिता । सम्पूजयन्ती देवेशं गीतदानेन शङ्करम् ॥२९॥
गीतदानमहं मन्ये सुराणामतिवल्लभम् । सर्वदानाधिकं भूप ह्यनन्तगतिदायकम् ॥३०॥
येन तुष्टः पशुपतिः सद्यः प्रत्युपकारकः । ईप्सितोऽयं मया प्राप्तो भवानवनिपालकः ॥३१॥
अभिप्रीतोऽसि मे राजन्नभिप्रीता ह्यहं तव ॥३२॥
तमेवं मुक्त्वा द्विजराजवक्त्रा करं गृहीत्वा नृपतेस्तु वेगात् । उत्थापयामास धराशयानमिन्द्रस्य यष्टीमिव मोहिनी सा ॥३३॥
इति श्रीबृहन्नारदीयपुराणोत्तरभागे समयकरणं नाम द्वादशोऽध्यायः ॥१२॥
आदितः श्लोकानां समष्ट्यङ्काः-१३,६३८+३३=१३,६७१



## ॥ अथ त्रयोदशोऽध्यायः ॥

वसिष्ठ उवाच ॥
उत्थापयित्वा राजानं मोहिनी वाक्यमब्रवीत् । मा शङ्कां कुरु राजेन्द्र कुमारीं विद्ध्यकल्मषाम् ॥१॥
उद्वहस्व महीपाल गृह्योक्तविधिना हि माम् । अनूढा कन्यका राजन् यदि गर्भं बिभर्ति हि ॥२॥
प्रसूयति दिवाकीर्तिं सर्ववर्णविगर्हितम् । चाण्डालयोनयस्तिस्रः पुराणे कवयो विदुः ॥३॥
कुमारीसम्भवा त्वेका सगोत्रापि द्वितीयका । ब्राह्मण्यां शूद्रजनिता तृतीया नृपपुङ्गव ॥४॥
एतस्मात्कारणाद्राजन् कुमारीं मां समुद्वह । ततस्तां चपलापाङ्गीं नृपो रुक्माङ्गदो गिरौ ॥५॥
उद्वाह्य विधिना युक्तस्तस्थौ राजा हसन्निव ।
राजोवाच ॥
न तथा त्रिदिवप्राप्तिः प्रीणयेन्मां वरानने ॥६॥
तव प्राप्तिर्यथा देवि मन्दरेऽस्मिन्सुखाय वै । मन्ये पुरन्दराद्देवि ह्यात्मानमधिकं क्षितौ ॥७॥
त्रैलोक्यसुन्दरीं प्राप्य भार्यां त्वां चारुलोचने । तस्माद्यदनुकूलं ते तत्करोमि प्रशाधि माम् ॥८॥
इहैव रमसे बाले अथवा मन्दिरे मम । मलये मेरुशिखरे वने वा नन्दने वद ॥९॥
तच्छ्रुत्वा नृपतेर्वाक्यं मोहिनी मधुरं नृप । उवाचानुशयं राजन्वचनं प्रीतिवर्द्धनम् ॥१०॥
सपत्नीनां कटाक्षाणां क्षतानि नगरे मम । भविष्यन्ति महीपाल कथं गच्छामि ते पुरम् ॥११॥
मास्म सीमन्तिनी काचिद्भवेद्धि क्षितिमण्डले । यस्याः सपत्नीप्रभवं दुःखमामरणं भवेत् ॥१२॥
साहं लब्धा महीपाल मनसा वशगा तव । ज्ञात्वा सपत्नीप्रभवं दुःखं भर्ता कृतो मया ॥१३॥
वत्स्यामि पर्वतश्रेष्ठे बह्वाश्चर्यसमन्विते । न त्वं वससि राजेन्द्र सन्ध्यावल्या विना क्वचित् ॥१४॥
तस्यास्त्वं विरहे दुःखी सपुत्राया भविष्यसि । दुःखेन भवतो राजन्भूरि दुःखं भवेन्मम ॥१५॥
यत्रैव भवतः सौख्यं तत्राहमपि संस्थिता । यत्र त्वं रंस्यसे राजंस्तत्र मे मन्दरो गिरिः ॥१६॥
भर्तृस्थाने हि वस्तव्यमृद्धिहीनेऽपि भार्यया । स मेरुः काञ्चनमयः सन्निधाने प्रचक्षते ॥१७॥
मनोरथो नाम मेरुर्यत्र त्वं रमसे विभो । भर्तृस्थानं परित्यज्य स्वपितुर्वापि वर्जितम् ॥१८॥
पितृस्थानाश्रयरता नारी तमसि मज्जति । सर्वधर्मविहीनापि नारी भवति सूकरी ॥१९॥
एवं जानाम्यहं दोषं कथं वत्स्यामि मन्दरे । गमिष्यामि त्वया सार्द्धमीशस्त्वं सुखदुःखयोः ॥२०॥
मोहिनयास्तद्वचः श्रुत्वा राजा संहृष्टमानसः । परिष्वज्य वरारोहामिदं वचनमब्रवीत् ॥२१॥
भार्याणां मम सर्वासामुपरिष्टाद्भविष्यसि । मा शङ्कां कुरु वामोरु यतो दुःखं भविष्यति ॥२२॥
जीवितादधिका सुभ्रु भविष्यसि गृहे मम । एहि गच्छाव तन्वङ्गि सुखाय नगरं प्रति ॥२३॥
भुंक्ष्व भोगान्मया सार्द्धं तत्रस्था स्वेच्छया प्रिये ॥२४॥
सा त्वेवमुक्ता शशिगौरवक्त्रा रुक्माङ्गदेनात्मविनाशनाय । सम्प्रस्थिता नूपुरघोषयुक्ता विकर्षयन्ती गिरिजातशोभाम् ॥२५॥
इति श्रीबृहन्नारदीयपुराणोत्तरभागे मोहिनीसंमोहनं नाम त्रयोदशोऽध्यायः ॥१३॥
आदितः श्लोकानां समष्ट्यङ्काः-१३,६७१+२५=१३,६९६



# ॥ अथ चतुर्दशोऽध्यायः ॥

वसिष्ठ उवाच ॥

सम्प्रस्थितावुभौ राजन्गिरिशीर्षा द्धरातलम् । पश्यमानौ बहून्भावान्गिरिजातान्मनोहरमनोहरान् ॥१॥
केचिद्विद्रुमसङ्काशाः केचिद्रजतसन्निभाः । केचिन्नीलसमप्रख्याः केचित्काञ्चनसत्विषः ॥२॥
केचित्स्फाटिकवर्णाभा हरितालनिभाः परे । अन्योन्यश्लेषतां प्राप्तौ सकलैः स्थावरैरिव ॥३॥
सप्राप्य वसुधां भूपो ह्यपश्यद्वाजिनां वरम् । खन्यमानं खुरेणोर्वीं कुलिशाभेन वेगिना ॥४॥
तस्य दारयतः पृथ्वद्यं सुतीक्ष्णेन खुरेण हि । गृहगोधाभवत्तस्मिन् भूभागान्तर्गता किल ॥५॥
निर्गच्छमाना नृपते खुरेण विदलीकृता । विदीर्यमाणां नृपतिरपश्यत्स दयापरः ॥६॥
अभ्यधावत वेगेन हा हतेति प्रियां वदन् । ततः स वृक्षपत्रेण कोमलेन महीपतिः ॥७॥
उत्सार्य तां खुरादाशु प्राक्षिपत्तृणशाद्वले । ततस्तु मोहिनीं प्राह प्रेक्ष्य मूर्च्छागतां हि ताम् ॥८॥
शीघ्रमाहर चार्वङ्गि जलं जलजलोचने । येन मूर्च्छागतां सिञ्चे गृहगोधां विमर्दिताम् ॥९॥
सा भर्तुर्वचनाच्छीघ्रमानयच्छीतलं जलम् । तेनाभ्यषिञ्चन्नृपतिर्गृहगोधां विमूर्च्छिताम् ॥१०॥
अवाप चेतनां राजन् शीतलाज्जलसेचनात् । अभिघातेषु सर्वेषु शस्तं वारिप्रसेचनम् ॥११॥
अथवा क्लिन्नवस्त्रेण सहसा बन्धनं हितम् । सम्प्राप्तचेतना भूप गोधा वचनमब्रवीत् ॥१२॥
राजानमग्रतो वीक्ष्य वेदनार्ता शनैः शनैः । रुक्माङ्गद महाबाहो निबोध मम चेष्टितम् ॥१३॥
शाकले नगरे रम्ये भार्याहं ह्यग्रजन्मनः । रूपयौवनसम्पन्ना तस्य नातिप्रिया विभो ॥१४॥
सदा विद्वेषसंयुक्तो मयि निष्ठुरजल्पकः । नान्यस्य कस्यचिद्द्वेष्टा स तु मे नृपते पतिः ॥१५॥
ततोऽह क्रोधसंयुक्ता वशीकरणलम्भनात् । अपृच्छं प्रमदा राजन्यास्त्यक्ताः पतिभिः किल ॥१६॥
ताभिरुक्ता ह्यहं भूप वश्यो भर्ता भविष्यति । अस्माकं प्रत्ययो जातो भर्तृत्यागावमाननात् ॥१७॥
प्रव्रज्याभेषजैर्वश्या जाता हि पतयस्तु नः । त्वं पृच्छ तां वरारोहे दास्यते भेषजं शुभम् ॥१८॥
न विकल्पस्त्वया कार्यो भविता दासवत्पतिः । ततोऽहं त्वरितं गत्वा तासां वाक्येन भूपते ॥१९॥
प्रासादः कथितस्तस्याः पृच्छन्त्या मम मानवैः । शतस्तम्भसमायुक्तः कान्तिमत्सुधया युतः ॥२०॥
प्रविश्य तं सुतेजस्कामपश्यं ब्रह्मचारिणीम् । प्रावृतां दीर्घवस्त्रे ण सन्ध्यारागसवर्णिनीम् ॥२१॥
दीर्घाभिः सा जटाभिस्तु संवृता दीप्तिसंयुता । परिचारकैस्तु सं युक्ता वीज्यमाना शनैः शनैः ॥२२॥
अक्षसूत्रकरा सा तु जपन्ती भगमालिनी । सर्ववश्यकरं मन्त्रं क्षोभकं प्रत्ययावहम् ॥२३॥
ततोऽहं प्रणता भूत्वा पद्भ्यां न्यस्याङ्गलीयकम् । मृदुकाञ्चनसम्भूतं अतिरिक्तप्रभान्वितम् ॥२४॥
ततो हृष्टाऽभवद्दृष्ट्वा पदस्थं चाङ्गुलीयकम् । अपृष्ट्या तया ज्ञातं मम भर्त्तुर्विमाननम् ॥२५॥
तयोक्ताहं ततो भूप तापस्या प्र णता स्थिता । चूर्णो रक्षान्वितो ह्येष सर्वभूतवशानुगः ॥२६॥
त्वया भर्तरि संयोज्यो रक्ष्यं ग्रीवाशयाङ्कु रम् । भविष्यति पतिर्वश्यो नान्यां यास्यति सुन्दरीम् ॥२७॥
चूर्णरक्षां गृहीत्वाहं प्राप्ता भर्तृगृहं पुनः । प्रदोषे पयसा युक्तश्चूर्णो भर्तरि योजितः ॥२८॥
ग्रीवायां हि कृता रक्षा न विचारो मया कृतः । यदा स पीतचूर्णस्तु भर्ता नृपवरोत्तम ॥२९॥
तदहः क्षयरोगोऽभूत्पतिः क्षीणो दिने दिने । गुह्ये तु क्रिमयो जाताः क्षतदुष्टव्र णोद्भवाः ॥३०॥
दिनैः कतिपयैर्जातैर्दीपवद्रविदर्शनात् । हततेजास्तथा भर्त्ता मामुवाचाकुलेन्द्रियः ॥३१॥
क्रन्दमानो दिवा रात्रौ दासोऽस्मि तव शोभने । त्राहि मां शरणं प्राप्तं न गच्छेयं परस्त्रियम् ॥३२॥
तत्तस्य रुदितं श्रुत्वा भयभीता महीपते । तस्यां निवेदितं सर्वं कथं भर्ता भवेत्सुखी ॥३३॥
तयापि भेषजं दत्तं द्वितीयं दाहशान्तये । दत्ते तु भेषजे तस्मिन्सुस्थोऽभूत्तत्क्षणात्पतिः ॥३४॥
पूर्वचूर्णोद्भवो दाहः शान्तस्तेनौषधेन ह । ततः प्रभृति मे भर्ता वश्योऽभूद्वचने स्थितः ॥३५॥
कालेन पञ्चतां प्राप्ता गता नरकयातनाम् । ताम्रभ्राष्ट्रे ह्यहं दग्धा युगानि दश पञ्च च ॥३६॥

सूक्ष्माणि तिलमात्राणि कृत्वा खण्डान्यनेकशः । किञ्चित्पातकशेषेण धरायामवतारिता ॥३७॥
गृहगोधामयं रूपं कृतं भास्करजेन मे । साहमत्र स्थिता भूप वर्षाणामयुतं पुरा ॥३८॥
यान्यापि युवतिर्भूप भर्तुर्वश्यं समाचरेत् । वृथाधर्मा दुराचारा दह्यते ताम्रभ्राष्ट्र के ॥३९॥
भर्ता नाथो गतिर्भर्ता दैवतं गुरुरेव च । तस्य वश्यं चरेद्या तु सा कथं सुखमाप्नुयात् ॥४०॥
तिर्यग्योनिशतं याति क्रिमिकुष्ठसमन्विता । तस्माद्भूपाल कर्तव्यं स्त्रीभिर्भर्तृवचः सदा ॥४१॥
साहं यास्ये पुनर्योनिं कुत्सितां पातकान्विताम् । यदि नो द्धरसे राजन्नद्य मां शरणागताम् ॥४२॥
सुकृतस्य प्रदानेन विजयाजनितेन हि । या त्वया सङ्गमे पुण्ये कृता श्रवणद्वादशी ॥४३॥
सरय्वाश्चैव गङ्गायाः पापनाशविधायके । प्रेतनिर्यातनी पुण्या मानसेप्सितदायिनी ॥४४॥
यस्यां गृहेऽपि भूपाल संस्मृतो मनुजैर्हरिः । सर्वतीर्थफलावाप्तिं कुरुते नात्र संशयः ॥४५॥
दत्तं जप्तं हुतं यच्च कृतं देवार्चनादिकम् । सर्वं तदक्षयं भूप यत्कृतं विजयादिने ॥४६॥
एवंविधं फलं यस्यास्तद्देहि सुकृतं मम । द्वादश्यामुपवासेन त्रयोदश्यां तु पारणे ॥४७॥
द्वादशाब्दोपवासस्य फलं प्राप्नोत्युपोषणे । दयां कृत्वा महीपाल धर्ममूर्तिर्भवान् क्षितौ ॥४८॥
वैवस्वतपथध्वंसी परित्राहि सुदुःखिताम् । गृहगोधावचः श्रुत्वा मोहिनी वाक्यमब्रवीत् ॥४९॥
स्वकृतं तु जनोऽश्नाति सुखदुःखात्मकं विभो । तस्मात्किमनया कार्यं पापया भर्तुदुष्टया ॥५०॥
यया भर्ता वशं नीतो रक्षाचूर्णादिभिर्नृप । साधुभ्यो यत्कृतं राजन्यशःस्वर्गकरं भवेत् ॥५१॥
उभयोर्भ्रं शतामेति पापेभ्यो यत्कृतं भवेत् । शर्करामिश्रितं क्षीरं काद्रवेये नियोजितम् ॥५२॥
विषवृद्धिं करोत्येव तद्वत्पापकृतं भवेत् । परित्यजेमां त्वं पापां गच्छावो नगराय वै ॥५३॥
जन्मव्यापारसक्तानामात्मसौख्यं विनश्यति ।

रुक्माङ्गद उवाच ॥

ब्रह्मात्मजे कथं वाक्यमीदृशं व्याहृतं त्वया । न साधूनामिदं वृत्तं भवतीति वरानने ॥५४॥
आत्मसौख्यकराः पापा भवन्ति परतापिनः । विप्रपन्ना वरारोहे परोपकरणाय वै ॥५५॥
शशी सूर्योऽथ पर्जन्यो मेदिनी हुतभुग्जलम् । चन्दनं पादपाः सन्तः परोपकरणाय वै ॥५६॥
श्रूयते किल राजासीद्धरिश्चन्द्रो वरानने । चाण्डालमन्दिरावासी भार्यातनयविक्रयी ॥५७॥
असत्यवचनाद्भीतो दुःखाद्दुःखतरं गतः । तस्य सत्येन संतुष्टादेवाः शक्रपुरोगमाः ॥५८॥
वरेण छन्दयाञ्चक्रुर्हरिश्चन्द्रं महीपतिम् । तेन सत्यवता चोक्ता देवा ब्रह्मपुरोगमाः ॥
यदि तुष्टा हि विबुधा वरं मे दातुमर्हथ ॥५९॥
एषा हि नगरी सर्वा सद्रुमा ससरीसृपा । सबालवृ द्धतरुणा सनारी सचतुष्पदा ॥६०॥
प्रयातु कृतपापापि स्वर्गतिं नगरी मम । अयोध्यापातकं गृह्य गन्ताहं नरकं ध्रुवम् ॥६१॥
एकाकी नहि गच्छामि परित्यज्य जनं क्षितौ । स्वर्गं विबुधशार्दूलाः सत्यमेतन्मयेरितम् ॥६२॥
तस्य तां स्थिरतां ज्ञात्वा सह तेनैव सा पुरी । जगाम स्वर्गलोकं च इन्द्रादीनामनुज्ञया ॥६३॥
सोऽपि स्वर्गे स्थितो राजा स्वपुरेण समन्वितः । कामगेन विमानेन पूज्यमानोऽमरैरपि ॥६४॥
अस्थिदानं कृतं देवि कृपया हि दधीचिना । देवानामुपकारार्थं श्रुत्वा दैत्यैः पराजितान् ॥६५॥
कपोतार्थं स्वमांसानि शिबिना भूभुजा पुरा । प्रदत्तानि वरारोहे श्येनाय क्षुधिताय वै ॥६६॥
जीमूतवाहनो राजा पुरासीत्क्षितिमण्डले । तेनापि जीवितं दत्तं पन्नगाय वरानने ॥६७॥
तस्माद्दयालुना देवि भवितव्यं महीभुजा । शुचावमेध्येऽपि शुभे समं वर्षति वारिदः ॥६८॥
चाण्डालपतितौ चन्द्रो ह्लादयेच्च निजैः करैः । तस्मादिमां वरारोहे गृह गोधां सुदुःखिताम् ॥६९॥
उद्धरिष्ये निजैः पुण्यैर्दौहित्रैर्नाहुषो यथा । विमोहिनीं तिरस्कृत्य गृहगोधामुवाच ह ॥७०॥
दत्तं दत्तं मया पुण्यं विजयासम्भवं तव । गच्छ विष्णुगताँल्लोकान्विधूताशेषकल्मषा ॥७१॥
तद्वाक्यात्सहसा भूप दिव्याभरणभूषिता । विमुच्य देहं तज्जीर्णं गृहगोधासमुद्भवम् ॥७२॥
जगामामन्त्र्य तं भूपं द्योतयन्ती दिशो दश । सीमन्तमिव कुर्वाणा वैष्णवं पदमद्भुतम् ॥७३॥

यद्योगिगम्यं हुतभुक्प्रकाशं वरं वरेण्यं परमात्मभूतम् । तम्मादियं चैव शिखिप्रदीपा जगत्प्रकाशाय नृपप्रसूता ॥७४॥

इति श्रीबृहन्नारदीयपुराणोत्तरभागे गोधाविमुक्तिर्नाम चतुर्दशोऽध्यायः ॥१४॥

आदितः श्लोकानां समष्ट्यङ्काः-१३,६९६+७४=१३,७७०



## ॥ अथ पञ्चदशोऽध्यायः ॥

वसिष्ठ उवाच ॥

विमोच्य पातकाद्राजा गृहगोधां हसन्निव । उवाच मोहिनीं हृष्टः शीघ्रमारुह्यतां हयः ॥१॥
योजनायुतगामी च क्षणात्कृष्णहयो यथा । तदाकर्ण्य वचो राज्ञो मोहिनी मदलालसा ॥२॥
आरुरोह समं भर्त्रा तं हयं वातवेगिनम् । उवाच च वचो भूपं भर्तारं चारुहासिनी ॥३॥
प्रचोदयेममर्वाणं स्वपुराय महीपते । पुत्रवक्त्रं स्पृहा द्रष्टुं लम्पटा तव वर्तते ॥४॥
तवाधीना नृपश्रेष्ठ गम्यतां यत्र ते मनः । मोहिन्या वचनं श्रुत्वा प्रतस्थे नगरं प्रति ॥५॥
पश्यमानः सुसंहृष्टः पादपान्पर्वतान्नदीः । वनानि सुविचित्राणि मृगान्बहुविधानपि ॥६॥
ग्रामान्दुर्गांस्तथा देशान्नगराणि शुभानि च । सरांसि च विचित्राणि भूभागान्सुमनोहरान् ॥७॥
अचिरेणाश्रमं दृष्ट्वा वामदेवस्य भूपते । आकाशस्थो महीपालो नमस्कृत्य त्वरान्वितः ॥८॥
पुनरेव ययौ राजा वायुवेगेन वाजिना । पश्यमानो बहून्देशान्धनधान्यसमन्वितान् ॥९॥
आससाद पुरं राजा वैदिशं स्ववशं च तत् । तमायान्तं नृपं श्रुत्वा चारैर्धर्माङ्गदः सुतः ॥१०॥
पितरं हर्षसंयुक्तो भूपालान्वाक्यमब्रवीत् । एषा प्रकाशमायाति उदीची दिङ् नृपोत्तमाः ॥११॥
मत्पितुर्वाजिनाक्रान्ता तत्तेजः परिरञ्जिता । तस्माद्गच्छामहे सर्वे संमुखं ह्यवनीपतेः ॥१२॥
पितुरागतमात्रस्य सम्मुखं न सुतो व्रजेत् । स याति नरकं घोरं यावदिन्द्राश्चतुर्दश ॥१३॥
सम्मुखं व्रजमानस्य पुत्रस्य पितरं प्रति । पदे पदे यज्ञफलं प्रोचुः पौराणिका द्विजाः ॥१४॥
उत्तिष्ठध्वं व्रजाम्येष भवद्भिः परिवारितः । अभिवादयितुं प्रेम्णा एष मे देवदेवता ॥१५॥
तथोत्युक्तैस्तुतैः सर्वैर्भूमिपालैर्नृपात्मजः । जगाम सम्मुखं पद्भ्यां क्रोशमात्रं पितुस्तदा ॥१६॥
ततो राजसहस्रेण मूर्तिमानिव मन्मथः । स गत्वा दूरमध्वानमाससाद नृपं पथि ॥१७॥
सम्प्राप्य पितरं स्नेहाज्जगाम धरणीं तदा । शिरसा राजभिः सार्द्धं प्रणाममकरोत्तदा ॥१८॥
प्रेम्णा समागतं प्रक्ष्य तं पतन्तं नृपैः सह । अवरुह्य हयाद्राजा समुत्थाप्य सुतं विभो ॥१९॥
भुजाभ्यां साधु पीनाभ्यां पर्यष्वङ्गत भूपतिः । मूर्ध्नि चैवमुपाघ्राय उवाच तनयं तदा ॥२०॥
कच्चित्पासि प्रजाः सर्वाः कच्चिद्दण्डयसे रिपून् । न्यायागतेन वित्तेन कोशं पुत्र बिभर्षि च ॥२१॥
कच्चिद्विप्रेष्वत्यधिका वृत्तिर्दत्तानपायिनी । कच्चित्ते कान्तशीलत्वं कच्चिद्वक्ताः न निष्ठुरम् ॥२२॥
कच्चिद्गावो न दुह्यन्ते पुत्र चाण्डलवेश्मानि । कच्चिद्वचनकर्तारस्तनयाश्च पितुः सदा ॥२३॥
कच्चिद्वधूः श्वश्रूवाक्ये वर्तते भर्तरि क्वचित् । कच्चिद्विवादान्विप्रेस्तु समं नेक्षस आत्मज ॥२४॥
कच्चिद्गावो न रुध्यन्ते विषये विविधैस्तृणैः । तुलामानानि सर्वाणि ह्यन्नादीनां सदेक्षसे ॥२५॥
कुटुम्बिनं करैः पुत्र नात्यर्थमभिदूयसे । कच्चिन्न द्यूतपानादि वर्तते विषये तव ॥२६॥
कच्चिद्भिन्नरसैर्लोका भिन्नवाक्यैः पुरे तव । न दानैर्जीर्णवस्त्रैश्च नोपजीवन्ति मानवाः ॥२७॥
कच्चिदृष्ट्वा स्वयं पुत्र हस्त्यश्वं परिरक्षसि । कच्चिच्च मातरः सर्वा ह्यविशेषेण पश्यसि ॥२८॥
कच्चिन्न वासरे विष्णोर्नरा भुञ्जति पुत्रक । शशिनि क्षीणतां प्राप्ते कच्चिच्छ्राद्धपरो नरः ॥२९॥
कच्चिच्चापररात्रेषु सदा निद्रां विमुञ्चसि । निद्रा मूलमधर्मस्य निद्रा पापविवर्द्धिनी ॥३०॥
निद्रा दारिद्यजननी निद्रा श्रेयोविनाशिनी । नहि निद्रान्वितो राजा चिरं शास्ति वसुन्धराम् ॥३१॥
पुंश्चलीव सदा भर्तुर्लोकद्वयविनाशिनी । एवमुच्चरमाणं तं तनयो वाक्यमब्रवीत् ॥३२॥
धर्माङ्गदो महीपालं प्रणम्य च पुनः पुनः । सर्वमेतत्कृतं तात पुनः कर्तास्मि ते वचः ॥३३॥

पितुर्वचनकर्तारः पुत्रा धन्या जगत्त्रये । किं ततः पातकं राजन् यो न कुर्यात्पितुर्वचः ॥३४॥
पितृवाक्यमनादृत्य व्रजेत्स्नातुं त्रिमार्गगाम् । न तत्तीर्थफलं भु ङ्क्ते यो न कुर्यात्पितुर्वचः ॥३५॥
त्वदधीनं शरीरं मे त्वदधीनं हि जीवितम् । त्वदधीनो हि मे धर्मस्त्वं च मे दैवतं परम् ॥३६॥
त्रैलोक्यस्यापि दानेन न शुद्ध्येत ऋणात्सुतः । किं पुनर्देहवित्ताभ्यां क्लेशदानादिभिर्विभो ॥३७॥
एवं ब्रुवाणं तनयं बहुभूपालसंवृतम् । रुक्माङ्गदः परिष्वज्य पुनराह सुतं वचः ॥
सत्यमेतत्त्वया पुत्र व्याहृतं धर्मवेदिना ॥३८॥
पितुरभ्यधिकं किंचिद्दैवतं न सुतस्य हि । देवाः पराङ्मुखास्तस्य पितरं योऽवमन्यते ॥३९॥
सोऽहं मूर्ध्नात्वया पुत्र धृतस्तत्क्षितिरक्षणात् । जित्वा द्वीपवतीं पृथ्वीं बहुभूपालसंवृताम् ॥४०॥
एतत्सौख्यं परं लोके एतत्स्वर्गपदं ध्रुवम् । पितुरभ्यधिकः पुत्रो यद्भवेत्क्षितिमण्डले ॥४१॥
सोऽहं पुत्र कृतार्थस्तु कृतः सद्गु णवर्त्मना । त्वया साधयता भूपान्यथा हरिदिनं शुभम् ॥४२॥
तत्पितुर्वचनं श्रुत्वा पुत्रो धर्माङ्गदोऽब्रवीत् । क्व गतस्तु भवांस्तात निवेश्य मयि सम्पदः ॥४३॥
कस्मिन्स्थाने त्वियं प्राप्ता सूर्यायुतसमप्रभा । मन्ये निर्वेदमापन्न इमां सृष्ट्वा प्रजापतिः ॥४४॥
नैतद्रूपा महीपाल नारी त्रैलोक्यमध्यतः । मन्ये भूधरजातेयमथवा सागरोद्भवा ॥४५॥
माया वा मयदैत्यस्य प्रमदारूपसंस्थिता । अहो सुनिपुणो धाता येनेयं निर्मिता विभो ॥
बालाग्रशतभागो हि व्यलीको नोपपद्यते ॥४६॥
इयं हि योग्या कनकावदाता गृहाय तुभ्यं जगतीपतीश । एवं विधा मे जननी यदि स्यात्कोऽन्योऽस्ति मत्तः सुकृती मनुष्यः ॥४७॥

इति श्रीबृहन्नारदीयपुराणोत्तरभागे मोहिनीचरिते पितापुत्रसंवादो नाम पञ्चदशोऽध्यायः ॥१५॥
आदितः श्लोकानां समष्ट्यङ्काः-१३,७७०+४७=१३,८१७



## ॥ अथ षोडशोऽध्यायः ॥

वसिष्ठ उवाच ॥

धर्माङ्गदवदचः श्रुत्वा हृष्टो रुक्माङ्गदोऽब्रवीत् । सत्य ते जननी पुत्र सम्प्राप्ता मन्दरे मया ॥१॥
वेदाश्रयसुता बाला मदर्थं कृतनिश्चया । कुर्वन्ती दारुणं पुत्र तपो देवगिरौ पुरा ॥२॥
इतः पञ्चदशादह्नो ह्यगामी गतो ह्यहम् । मन्दरे पर्वतश्रेष्ठे बहुधातुसमन्विते ॥३॥
तस्य मूर्द्धनि बालेयं तोषयन्ती महेश्वरम् । स्थिता गानपरा दृ ष्टा मया तत्र सुदर्शना ॥४॥
ततोऽहं मूर्च्छया युक्तः पतितो धरणीतले । अनङ्गबाणसंविद्धो व्याधविद्धो यथा मृगः ॥५॥
ततोऽहमनया देव्या चालितश्चारुनेत्रया । वृतश्चैवापि भर्तृत्वे किञ्चित्प्रार्थनया सह ॥६॥
मया चापि प्रतिज्ञातं स्वदक्षिणकरान्वितम् । सेयं भार्या विशालाक्षी कृता भूधरमस्तके ॥७॥
अवरुह्य धरापृष्टे समारुह्य तु रङ्गमम् । दिनत्रयेण त्वरितः सम्प्राप्तस्तव सन्निधौ ॥८॥
पश्यमानो गिरीन्देशान्सरांसिसरितस्तथा । इयं हि जननी पुत्र तव प्रीतिविवर्द्धिनी ॥९॥
अभिवादय चार्वङ्गीं त्वं निजामिव मातरम् । तत्पितुर्वचनं श्रुत्वा हयसंस्थामरिन्दमः ॥१०॥
शिरसा धरणीं गत्वा इदं वचनमब्रवीत् । प्रसीद देवि मातस्त्वं भृत्यो दासः सुतस्तव ॥११॥
नमस्करोमि जननीं बहुभूपालसंयुतः । तं पुत्रमवनीं प्राप्तं मोहिनी प्रेक्ष्य भूपते ॥१२॥
भर्तुर्दाक्षिण्ययोगाच्च अवतीर्य तुरङ्गमात् । अवागूहत बाहुभ्यामुत्थाप्य पतितं सुतम् ॥१३॥
परिष्वक्तस्तदा मात्रा पुनरेवाभ्यनन्दयत् । ततस्तां सुमनोज्ञैस्तु चारुवस्त्रैश्च भूषणैः ॥१४॥
भूषयित्वा समारोप्य पुनरेव हयोत्तमम् । स्वपृष्ठे चरणं कृत्वा तस्या राजीवलोचनः ॥१५॥
तेनैव विधिना भूप पितरं चान्वरोहयत् । भूपालैः संवृतो गच्छन्पद्भ्यां धर्माङ्गदः सुतः ॥१६॥
प्रहर्षपुलको ह्यासीज्जननीं प्रेक्ष्य मोहिनीम् । स्तूयमानः स्वयं चापि मेघगम्भीरया गिरा ॥१७॥
धन्यः स तनयो लोके मातरो यस्य भूरिशः । नवा नवतरा भार्याः पितुरिष्टा मनोहराः ॥१८॥

यस्यैका जन्नी लोके पिता तस्यैव दुःखभाक् । पितुर्दुःखेन किं सौख्यं पुत्रस्य हृदि वर्तते ॥१९॥
एकस्या वन्दने मातुः पृथिवीफलमश्नुते । मातॄणां वन्दने मह्यं महत्पुण्यं भविष्यति ॥२०॥
तस्मादभ्यधिकं पुण्यं भविष्यति दिने दिने । एकमु च्चरमाणोऽसौ राजभिः परिवारितः ॥२१॥
प्रविष्टो नगरं रम्यं वैदिशं ऋद्धिसंयुतम् । हयस्थः प्रययौ राजा मोहिन्या सह तत्क्षणात् ॥२२॥
ततो गृहवरं प्राप्य पूज्यमानो जनैर्नृपः । अवरुह्य हयात्तस्मान्मोहिनीं वाक्यमब्रवीत् ॥२३॥
धर्माङ्गदस्य पुत्रस्य गृहे गच्छ मनोहरे । एष ते गुरुशुश्रूषां करिष्यति यथा गुणम् ॥२४॥
न सखी नैव दासी ते शुश्रूषामाचरेदिति । सा चैवमुक्ता पत्या तु प्रस्थिता सुतमन्दिरम् ॥२५॥
धर्माङ्गदेन सा दृष्टा गच्छन्ती मन्दिराय वै । आत्मनो भर्तृवाक्येन परित्यज्य महीपतीन् ॥२६॥
तिष्ठध्वं पितुरादेशादिमां शुश्रूषये ह्यहम् । स एवमुक्त्वा गत्वा तु बाहुभ्यां परिगृह्य वै ॥
क्रमे पञ्चदशे प्राप्ते पर्यङ्के त्ववरोपयत् ॥२७॥
काञ्चने पट्टसूत्रेण रचिते कोमले दृढे । मृद्वास्तरणसंयुक्ते मणिरत्नविभूषिते ॥२८॥
रत्नदीपैश्च बहुशः खचिते सूर्यसप्रभे । ततः पादोदकं चक्रे मोहिन्या धर्मभूषणः ॥२९॥
सन्ध्यावल्या गुरुत्वेन ह्यपश्यत्तां नृपात्मजः । नैवमस्याभवद्दुष्टं मनस्तां मोहिनीं प्रति ॥३०॥
सुकुमारोऽपि तन्वङ्गीं पीनोरुजघनस्तनीम् । मेने वर्षायुतसमामात्मानं च त्रिवत्सरम् ॥३१॥
प्रक्षाल्य चरणौ तस्यास्तज्जलं शिरसि न्यधात् । उवाचावनतो भूत्वा सुकृती मातरस्म्यहम् ॥३२॥
इत्युक्त्वा नरनारीभिः स्वयं च श्रमनाशनम् । चकार सर्वभोगैस्तां युयोज च मुदान्वितः ॥३३॥
क्षीरोदमथने जाते कु ण्डले चामृतस्रवे । ये लब्धे दानवाञ्जित्वा पाताले धर्ममूर्त्तिना ॥३४॥
मोहिन्या कर्णयोश्चक्रे स्वयमेव वृषाङ्गदः । अष्टोत्तरसहस्रैश्च धात्रीफलनिभैः शुभैः ॥३५॥
मौक्तिकै रचितैः शुभ्रैर्हारो देव्याः कृतो हृदि । निष्कं पलशतं स्वर्णं कुलिशायुतभूषितम् ॥३६॥
हार लघूत्तरं चक्रे मातुर्नृपसुतस्तदा । वलया वज्रखचिता द्विरष्टौ करयोर्द्वयोः ॥३७॥
एकैके निष्ककोटीभिर्मूल्यविद्भिर्नरैः कृताः । केयूरनूपुरौ तस्या अनर्घौ स नृपात्मजः ॥३८॥
प्रददौ पितुरिष्टाया भूषणार्थं रविप्रभौ । कटिसूत्रं तु शर्वाण्या यदासीत्पावकप्रभम् ॥३९॥
तद्भ्रष्टं भयभीतायाः सङ्ग्रामे तारकामये । कालनेमौ स्थिते राज्ये पतितं मूलपाचने ॥४०॥
तद्गृहीतं तु दैत्येन मयेन लोकमायिना । तं हत्वा मलये दैत्यं दैत्यकोटिसमावृतम् ॥४१॥
संवत्सररणे घोरे पितुर्वचनकारणात् । अवाप कटिसूत्रं तु दैत्यराजप्रियास्थितम् ॥४२॥
तद्ददौ पितुरिष्टायाः सानन्दपुलको नृपः । हिरण्यकशिपोः पूर्वं या भार्या लोकसुन्दरी ॥४३॥
तस्याः सीमन्तकश्चासीत्सौदामिनिसमप्रभः । सा प्रविष्टा समं पत्या यदा पावकमङ्गला ॥४४॥
समुद्रे क्षिप्य सीमन्तं दुःखेन महतान्विता । सागरस्तत्तु सङ्गृह्य रत्नश्रेष्ठयुगं किल ॥४५॥
ददौ धर्माङ्गदायाथ तस्य वीर्येण तोषितः । जनन्याः प्रददौ हृष्टः सूर्यको टिसमप्रभम् ॥४६॥
अग्निशौचे शुभे वस्त्रे कञ्चुके सुमनोहरे । सहस्रकोटिमूल्ये ते मोहिन्याः संन्यवेदयत् ॥४७॥
देवमाल्यं सुगन्धाढ्यं तथा देवविलेपनम् । सर्वदेवगुरोः पूर्वं सिद्धहस्तात्सुदुर्लभम् ॥४८॥
धर्माङ्गदेन वीरेण द्वीपानां विजये तथा । लब्धं तत् प्रददौ देव्या मोहिन्याः कामवर्द्धनम् ॥४९॥
सम्भूष्य परया भक्त्या पश्चात्षड्रसभोजनम् । आनीतं मातृहस्तेन भोजयामास भूमिप ॥५०॥
पुरस्तादेव जननीं वाक्यैः सम्बोध्य भूरिशः । मया त्वया च कर्तव्यं राज्ञो वाक्यं न संशयः ॥५१॥
या इष्टा नृपतेर्देवि सास्माकं हि गरीयसी । इष्टा या भूपतेर्भर्तुस्तस्या या दुष्टमाचरेत् ॥५२॥
सा पत्नी नरकं याति यावदिन्द्राश्चतुर्दश । सापत्नभावं या कुर्या द्भर्तृस्नेहेष्टया सह ॥५३॥
तस्याः स्नेहवियोगार्थं तप्यते ताम्रभ्राष्ट्र के । यथा सुखं भवेद्भर्तुस्तथा कार्यं हि भार्यया ॥५४॥
अनुकूलं हितं तस्या इष्टाया भर्तुराचरेत् । यथा भर्ता तथा तां हि पश्येत वरवर्णिनि ॥५५॥
हीनायाश्चापि शुश्रूषां कृत्वा याति त्रिविष्टपम् । पश्चात्स्थाने भवेत्सापि मनसा याभवत्प्रिये ॥५६॥
सर्वान्भोगानवाप्नोति भर्तुरिष्टं प्रगृह्य हि । इर्ष्या भावपरित्यागात्सर्वेश्वरपदं लभेत् ॥५७॥

सपत्नी या सपत्न्यास्तु:शुश्रूषां कुरुते सदा । भर्तुरिष्टां संनिरीक्ष्य तस्या लोको ऽक्षयो भवेत् ॥५८॥
भर्तुरिष्टा पुरा वेश्या ह्यभवत्सा कुलेषु वै । शूद्रजातेः सुदुष्टस्य परित्यक्तक्रियस्य तु ॥५९॥
आचरद्वेश्यया सार्द्धं सा भार्या पतिरञ्जिनी । प्रक्षालनं द्वयोः पादौ द्वयोरुच्छिष्टभोजिनी ॥६०॥
उभयोरप्यधः शेते उभयोर्वै हितं रता । वेश्यया वार्यमाणापि सदाचारपथे स्थिता ॥६१॥
एवं शुश्रीषयन्त्या हि भर्तारं वेश्यया सह । जगाम सुमहान्कालो वर्तन्त्या दुःखसागरे ॥६२॥
अपरस्मिन्दिने भर्ता माहिषं मूलकान्वितम् । अभक्षयत निष्पावं दुर्मेधास्तैलमिश्रितम् ॥६३॥
तदपथ्यभुजस्तस्य अवमन्य पतिव्रताम् । अभवद्दारुणो रोगो गुदे तस्य भगन्दरः ॥६४॥
सन्दह्यमानोऽतितरां दिवा रात्रौ स भूरिशः । तस्य गेहे स्थितं वित्तं समादाय जगाम सा ॥६५॥
वेश्यान्यस्मैददौ प्रीत्या यूने कामपरायणा । ततः स दीनवदनो व्रीडया च समन्वितः ॥६६॥
उवाच प्ररुदन्भार्यां शूद्रो व्याकुलचेतनः । परिपालय मां देवि वेश्यासक्तं सुनिष्ठुरम् ॥६७॥
न मयोपकृतं किञ्चित्तव सुन्दरि पापिना । रमते वेश्यया सार्द्धं बहूनब्दान्सुमध्यमे ॥६८॥
यो भार्यां प्रणतां पापो नानुमन्येत गर्वितः । सोऽशुभानि समाप्नोति जन्मानि दश पञ्च च ॥६९॥
दिवाकीर्तिगृहे तस्माद्योनिं प्राप्स्यामि गर्हिताम् । तवापमानतो देवि मनो न कलुषीकृतम् ॥७०॥
इति भर्तृवचः श्रुत्वा भार्या भर्तारमब्रवीत् । पुरा कृतानि पापानि दुःखानि प्रभवन्ति हि ॥
तानि सक्षमते विद्वान् स विज्ञेयो नृणां वरः ॥७१॥
तन्मया पापया पापं कृतं वै पूर्वजन्मनि । तद्भजन्त्या न मे दुःखं न विषादः कथञ्चन ॥७२॥
एवमुक्त्वा समाश्वास्य भर्तारमनुशास्य च । अनीतं जनकाद्वित्तं बन्धुभ्यो वरवर्णिनी ॥७३॥
क्षीरोदनिलयावासं मन्यते स्म सती पतिम् । दिवा दिवा त्रिर्यत्नेन रात्रौ गुह्यविशोधनम् ॥७४॥
रजनीकरवृक्षोत्थं गृह्य निर्यासमञ्जसा । नखेन पातयेद्भर्तुः क्रिमीन्कुष्ठाच्छनैः शनैः ॥७५॥
मयूरपुच्छसंयुक्तं पवनं चाकरोत्तदा । न देवि रात्रौ स्वपिति न दिवा च वरानना ॥७६॥
भर्तृदुःखेन संतप्ता अपश्यज्ज्वलितं जगत् । यद्यस्ति वसुधा देवी पितरो देवतास्तथा ॥७७॥
कुर्वन्तु रोगहीनं मे भर्तारं गतकल्मषम् । चण्डिकायै प्रदास्यामि रक्तं मांससमुद्भवम् ॥७८॥
नृच्छागमहिषोपेतं भर्तुरारोग्यहेतवे । सादरं कारयिष्यामि उपवासान्दशैव तु ॥७९॥
शरीरं स्थापयिष्येऽहं सूक्ष्मकण्टकसंस्तरे । नोपभोक्ष्यामि मधुरं नोपभोक्ष्यामि वै घृतम् ॥८०॥
बाह्याभ्यङ्गविहीनाहं संस्थास्ये दिनसञ्चयम् । जीवतां रोगहीनो हि भर्ता मे शरदां शतम् ॥८१॥
एवं प्रव्याहरन्ती सा वासरे वासरे गते । अथ कालेन चाल्पेन त्रिदोषोऽस्य व्यजायत ॥८२॥
त्रिकटुं प्रददौ भर्तुर्यत्नेन महता तदा । शीतार्तः कम्पमानोऽसौ पत्न्यङ्गुलिमखण्डयत् ॥८३॥
उभयोर्दतयोः श्लेषः सहसा समपद्यत । तत्खण्डमङ्गुलेर्वक्त्रे स्थितं नृपतिवल्लभे ॥८४॥
अथ विक्रीय वलयं क्रीत्वा काष्ठानि भूरिशः । चितां सर्पिर्युतां चक्रे मध्ये धृत्वा पतिं तदा ॥८५॥
अवरुह्य च बाहुभ्यां पादेनाकृष्य पावकम् । मुखे सुखं समाधाय हृदये हृदयं तथा ॥८६॥
जघने जघनं देवि आत्मनः सन्निवेश्य वै । दाहयामास कल्याणी भर्तुर्देहं रुजान्वितम् ॥८७॥
आत्मना सह चार्वङ्गी ज्वलिते जातवेदसि ॥८८॥
विमुच्य देहं सहसा जगाम पतिं समादाय च देवलोकम् । विशोधयित्वा बहुपापसङ्घान्स्वकर्मणा दुष्करसाधनेन ॥८९॥

इति श्रीबृहन्नारदीयपुराणोत्तरभागे पतिव्रतोपाख्यानं नाम षोडशोऽध्यायः ॥१६॥

आदितः श्लोकानां समष्ट्यङ्काः-१३,८१७+८९=१३,९०६



## ॥ अथ सप्तदशोऽध्यायः ॥

पुत्र उवाच ॥

तस्मादीर्ष्यां परित्यज्य मोहिनीमनुभोजय । न मातरीदृशो धर्मो लोकेषु त्रिषु लभ्यते ॥१॥
स्वहस्तेन प्रियां भर्तुर्भार्यां या तु प्रभोजयेत् । सपत्नीं तु सपत्नी हि किञ्चिदन्नं ददाति च ॥२॥
तदनन्तं भवेद्देवि मातरित्याह नाभिजः । कुरु वाक्यं मयोक्तं हि स्वामिनि त्वं प्रसीद मे ॥३॥
तातस्य सौख्यं कर्तव्यमावाभ्यां वरवर्णिनी । भवेत्पापक्षयः सम्यक् स्वर्गप्राप्तिस्तथाक्षया ॥४॥
पुत्रस्य वचनं श्रुत्वा देवी सन्ध्यावली तदा । अभिमन्त्र्य परिष्वज्य तनयं सा पुनः पुनः ॥५॥
मूर्ध्नि चैनमुपाघ्राय वचनं चेदमब्रवीत् । करिष्ये वचनं पुत्र त्वदीयं धर्मसंयुतम् ॥६॥
इर्ष्यां मानं परित्यज्य भोजयिष्यामि मोहिनीम् । शतपुत्रा ह्यहं पुत्र त्वयैकेन सुतेन हि ॥७॥
नियमैर्बहुभिर्जातो देहक्लेशकरैर्भवान् । व्रतराजेन चीर्णेन प्राप्तस्त्वमचिरात्सुतः ॥८॥
नहीदृशं व्रतं लोके फलदायि प्रदृश्यते । सद्यः प्रत्ययकारीदं महापातकनाशनम् ॥९॥
किं जातैर्बहुभिः पुत्रैः शोकसन्तापकारकैः । वरमेकः कुलालम्बी यत्र विश्रमते कुलम् ॥१०॥
त्रैलोक्यादुपरिष्ठाहं त्वां प्राप्य जठरे स्थितम् । धन्यानि तानि शूलानि यैर्जातस्त्वं सुतोऽनघ ॥११॥
सप्तद्वीपपतिः शूरः पितुर्वचनकारकः । आह्लादयति यस्तातं जननीं वापि पुत्रकः ॥१२॥
तं पुत्रं कवयः प्राहुर्वाचाख्यमपरं सुतम् । एवमुक्त्वा तु वचनं देवी सन्ध्यावली तदा ॥१३॥
वीक्षां चक्रेऽथ भाण्डानि षड्रसस्य तु हेतवे । तस्या वीक्षणमात्रेण परिपूर्णानि भूपते ॥१४॥
षड्रसस्य सुखोष्णस्य मोहिनीभोजनेच्छया । अमृतस्वादुकल्पस्य जनस्य तु महीपते ॥१५॥
ततो दर्वीं समादाय काञ्चनीं रत्नसंयुताम् । परिवेषयदव्यग्रा मोहिन्याश्चारुहासिनी ॥१६॥
काञ्चने भाजने श्लक्ष्णे मानभोजनवेष्टिते । शनैः शनैश्च बुभुजे इष्टमन्नं सुसंस्कृतम् ॥१७॥
उपविश्यासने देवी शातकौम्भमये शुभे । वीज्यमाना वरारोहा व्याजनेन सुगीतिना ॥१८॥
धर्माङ्गदगृही तेन शिखिपुच्छभवेन तु । सा भुक्त्वा ब्रह्मतनया तदन्नममृतोपमम् ॥१९॥
चतुर्गुणेन शीतेन कृत्वा शौचमथात्मनः । जगृहे पुत्रदत्तं तु ताम्बूलं तत्सुगन्धिमत् ॥२०॥
वरचन्दनयुक्तेन हस्तेन वरवर्णिनी । ततः प्रहस्य शनकैः प्राह संध्यावलीं नृ प ॥२१॥
जननी किं तु देवि त्वं वृषाङ्गदनृपस्य तु । न मया हि परिज्ञाता श्रमस्वेदितया शुभे ॥२२॥
वदत्येवं ब्रह्मसुता यावत्सन्ध्यावलीं नृप । तावत्प्रणम्य नृप्तेः पुत्रो वचनमब्रवीत् ॥२३॥
उदरे ह्यनया देव्या घृतः संवत्सरत्रयम् । तव भर्तुः प्रसादेन वृद्धिं सम्प्राप्तवानहम् ॥२४॥
सन्त्यनेकानि मातॄणां शतानि मम सुन्दरि । अस्याः पीतं पयो भूरि कुचयोः स्नेहसम्प्लुतम् ॥२५॥
अनया सा रुजा तीव्रा विधृता प्रायशो जरा । इयं मां जनयित्वैव जाता शिथिलबन्धना ॥२६॥
तन्नास्ति त्रिषु लोकेषु यद्दत्वा चानृणो भवेत् । मातुः पुत्रस्य चार्वङ्गि सत्यमेतन्मयेरितम् ॥२७॥
सोऽहं धन्यतरो लोके नास्ति मत्तोऽधिकः पुमान् । उत्सङ्गे वर्तयिष्यामि मातृसंघस्य नित्यशः ॥२८॥
नोत्सङ्गे चेज्जनन्या हि तनयो विशति क्वचित् । मातृसौख्यं न जानाति कुमारी भर्तृजं यथा ॥२९॥
मातुरुत्सङ्गमारूढः पुत्रो दर्पान्वितो भवेत् । हारमुत्तमदेहस्थं हस्तेनाहर्तुमिच्छति ॥३०॥
पाल्यमानो जनन्या हि पितृहीनोऽपि दर्पितः । समीहते जगद्धर्तुं सवीर्यं मातृजं पयः ॥३१॥
एतज्जठरसंसर्गि भवत्युत्सङ्गशङ्कितः । अस्याश्चैवापराणां च विशेषो यदि मे न चेत् ॥३२॥
तेन सत्येन मे तातो जीवताच्छरदां शतम् । एवं ब्रुवाणे तनये मोहिनी विस्मयं गता ॥३३॥
कथमस्य प्रहर्तव्यं मया निर्घृणशीलया । विनीतस्य ह्यपापस्य औचित्यं पापिनो गृहे ॥३४॥
पितुः शुश्रूषणं यस्य न तस्य सदृशं क्षितौ । एवं गुणाधिकस्याहं कर्तुं कर्म जुगुप्सितम् ॥३५॥
पुत्रस्य धर्मशीलस्य भूत्त्वा तु जननी क्षितौ । एवं विमृश्य बहुधा मो हिनी लोकसुन्दरी ॥३६॥
उवाच तनयं बाला शीघ्रमानय मे पतिम् । न शक्नोमि विना तेन मुहूर्तमपि वर्तितुम् ॥३७॥
ततः स त्वरितं गत्वा प्रणम्य पितरं नृप । कनिष्ठा जननी तात शीघ्रं त्वां द्रष्टुमिच्छति ॥३८॥
प्रसादः क्रियतां तस्याः पूज्यतां ब्रह्मणः सुता । पुत्रवाक्येन नृपतिस्तत्क्षणाद्गन्तुमुद्यतः ॥३९॥
प्रहृष्टवदनो भूत्वा सन्ध्यावल्या निवेशनम् । सम्प्रविश्य गृहे राजा ददर्श शयनस्थिताम् ॥४०॥

द्विज उवाच॥
नाहं देवो न यक्षो वा न दैत्यो न च देवराट्। न ब्रह्मा न च रुद्रोऽहं विद्धि मां पुरुषोत्तमम्॥७३॥
आर्तिघ्नं सर्वलोकानामनन्तबलपौरुषम्। अर्चनीयो हि भूतानामन्तो यस्य न विद्यते॥७४॥
पठ्यते सर्वशास्त्रेषु वेदान्तेषु निगद्यते। यदुक्त ध्यानगम्यं च वासुदेवेति योगिभिः॥७५॥
अहमेव स्वयं ब्रह्मा अहं विष्णुः शिवो ह्यहम्। इद्रोऽहं देवराजश्च जगत्संयमनो यमः॥७६॥
पृथिव्यादीनि भूतानि त्रेताग्निर्हुतभुग्यथा। वरुणोऽपांपतिश्चाहं धरित्री च महीधराः॥७७॥
यत्किञ्चिद्वाङ्मयं लोके जगत्स्थावरजङ्गमम्। विश्वरूपं च मां विद्धि मत्तोऽन्यन्नास्ति किञ्चन॥७८॥
प्रीतोऽहं ते नृपश्रेष्ठ वरं वरय सुव्रत। यदिष्टं तत्प्रयच्छामि हृदि यत्ते व्यवस्थितम्॥७९॥
मद्दर्शनमपुण्यानां स्वप्नान्तेऽपि न जायते। त्वं पुनर्दृढभक्तित्वात्प्रत्यक्षं दृष्टवानसि॥८०॥
श्रुत्वैवं वासुदेवस्य वचनं तस्य मोहिनि। रोमाञ्चितनुर्भूत्वा इदं स्तोत्रं जगौ नृपः॥८१॥
राजोवाच॥
श्रियःकान्त नमस्तेऽस्तु श्रीपते पीतवाससे। श्रीद श्रीश श्रीनिवास नमस्ते श्रीनिकेतन॥८२॥
आद्यं पुरुषमीशानं सर्वेशं सर्वतोमुखम्। निष्कलं परमं देवं प्रणतोऽस्मि सनातनम्॥८३॥
शब्दातीतं गुणातीतं भावाभावविवर्जितम्। निर्लेपं निर्गुणं सूक्ष्मं सर्वज्ञं सर्वभावनम्॥८४॥
शङ्खचक्रधरं देवं गदामुसलधारिणम्। नमस्ये वरदं देवं नीलोत्पलदलच्छविम्॥८५॥
नागपर्यङ्कशयनं क्षीरोदार्णववासिनम्। नमस्येऽहं हृषीकेशं सर्वपापहरं हरिम्॥८६॥
पुनस्त्वां देवदेवेश नमस्ये वरदं विभुम्। सर्वलोकेश्वरं विष्णुं मोक्षकारणमव्ययम्॥८७॥
एवं स्तुत्वा तु तं देवं प्रणिपत्य कृताञ्जलिः। उवाच प्र णतो भूत्वा निपत्य वसुधातले॥८८॥
प्रीतोऽसि यदि मे नाथ वृणोमि वरमुत्तमम्। देवाः सुराः सगन्धर्वा यक्षरक्षोमहोरगाः॥८९॥
सिद्धविद्याधराः साध्याः किन्नरा गुह्यकास्तथा। ऋषयो ये महाभागा नानाशास्त्रविशारदाः॥९०॥
प्रव्रज्यायोगयुक्ताश्च वेदतत्त्वानु चिन्तकाः। मोक्षमार्गविदो येऽन्ये ध्यायन्ति परमं पदम्॥९१॥
निर्मलं निर्गुणं शान्तं यत्पश्यन्ति मनीषिणः। तत्पदं गन्तुमिच्छामि प्रसादात्ते सुदुर्लभम्॥९२॥
श्रीभगवानुवाच॥
सर्वं भवतु भद्रं ते यथेष्टं सर्वमाप्नुहि। भविष्यति यथाकामं मत्प्रसादान्न संशयः॥९३॥
दश वर्षसहस्राणि तथा नव शतानि च। अविच्छिन्नं महाराज्यं कुरु त्वं नृपसत्तम॥९४॥
प्रपद्य परमं दिव्यं दुर्लभं यत्सुरासुरैः। पूर्णं मनोरथं शान्तं गुह्यमव्यक्तमव्ययम्॥९५॥
परात्परतरं सूक्ष्मं निर्लेपं निर्गुण ध्रुवम्। चिन्ताशोकविनिर्मु क्तं क्रियाकारणवर्जितम्॥९६॥
तदहं दर्शयिष्यामि विज्ञेयाख्यं परं पदम्। सम्प्राप्य परमानन्दं प्राप्स्यसे परमां गतिम्॥९७॥
कीर्तिश्च तव राजेन्द्र भवत्वत्र महीतले। यावद्धरा नभो यावद्यावच्चन्द्रार्कतारकाः॥९८॥
यावत्समुद्राः सप्तैव यावन्मेर्वा दिपर्वताः। तिष्ठन्ति दिवि देवाश्च यावत्सर्वत्र चाव्ययाः॥९९॥
इन्द्रद्युम्नसरो नाम तीर्थं यज्ञाज्यसम्भवम्। यत्र स्नात्वा सकृल्लोकः शक्रलोकमवाप्स्यति॥१००॥
दापयिष्यति यः पिण्डं तटेऽस्मिन्नम्बुधेः शुभे। कुसैकविंशमुद्धृत्य शक्रलोकं गमिष्यति॥१०१॥
पूज्यमानोऽप्सरोभिश्च गन्धर्वैर्गीतनिःस्वनैः। विमानेन चरेत्तत्र यावदिन्द्राश्चतुर्दश॥१०२॥
सरसो दक्षिणे भागे नैर्ऋत्यां तु समाश्रिते। न्यग्रोधोऽस्ति द्रुमस्तत्र तत्समीपे तु मण्डपः॥१०३॥
केतकीवनसञ्छन्नो नानापादपसङ्कुलः। आषाढस्य सिते पक्षे पञ्चम्यां पितृदैवते॥१०४॥
ऋक्षे नेष्यन्ति नस्तत्र नीत्वा सप्त दिनानि वै। मण्डपे स्थापयिष्यन्ति सुवेश्याभिः सुशोभनैः॥१०५॥
क्रीडाविशेषबहुलैर्नृत्यगीतमनोहरैः। चामरैः स्वर्णदण्डैश्च व्यजनै रत्नभूषणैः॥१०६॥
व्यञ्जयन्त्यस्तदास्मभ्यं स्थास्यन्ति परमाङ्गनाः। ब्रह्मचारी यतिश्चैव स्नातकाश्च द्विजोत्तमाः॥१०७॥
वानप्रस्था गृहस्थाश्च सिद्धाश्चान्ये च वै द्विजाः। नानावर्णपदैः स्तोत्रैर्ऋग्यजुः सामनिःस्वनैः॥१०८॥
करिष्यन्ति स्तुतिं राजन् रामकेशवयोः पुनः। ततः स्तुत्वा च दृष्ट्वा च सम्प्र णम्य च भक्तितः॥१०९॥

नरो वर्षायुतं दिव्यं श्रीमद्धरिपुरे वसेत्। पूज्यमानोऽप्सरोभिश्च गन्धर्वैर्गीतनिःस्वनैः ॥११०॥
हरेरनुचरस्तत्र क्रीडते केशवेन वै ॥१११॥
विमानेनार्कवर्णेन रत्नहारेण राजते । सर्वे कामा महाभागे तिष्ठन्ति भवनोत्तमे ॥११२॥
तपःक्षयादिहागत्य मनुष्यो ब्राह्मणो भवेत्। कोटीधनपतिः श्रीमांश्चतुर्वेदो भवेद्ध्रुवम्॥११३॥
एवं तस्मै वरं दत्त्वा कृत्वा च समयं हरिः । जगामादर्शनं भद्रे सहितो विश्वकर्मणा ॥११४॥
स तु राजा तदा हृष्टो रोमाञ्चिततनूरुहः । कृतकृत्यमिवात्मानं मेने सन्दर्शनाद्धरेः ॥११५॥
ततः कृष्णं च रामं च सुभद्रां च वरप्रदाम्। रथैर्विमानसङ्काशैर्मणिकाञ्चनचित्रितैः ॥११६॥
संवाह्य तांस्ततो राजा जयमङ्गलनिःस्वनैः । आनयामास मतिमान्सामात्यः सपुरोहितः ॥११७॥
नानावादित्रनिर्घोषैर्नानावेदस्वनैः शुभैः । संस्थाप्य च शुभे देशे पवित्रे सुमनोहरे ॥११८॥
ततः शुभे तिथौ स्वर्क्षे काले च शुभलक्षणे । प्रतिष्ठां कारयामास सुमुहूर्ते द्विजैः सह ॥११९॥
यथोक्तेन विधानेन विधिदृष्टेन कर्मणा । आचार्यानुमतेनैव सर्वं कृत्वा महीपतिः ॥१२०॥
आचार्याय तदा दत्त्वा दक्षिणां विधिवत्प्रभुः । ऋत्विग्भ्यः सविधानेन तथान्येभ्यो धनं ददौ ॥१२१॥
कृत्वा प्रतिष्ठां विधिवत्प्रासादे भवनोत्तमे । स्थापयामास तान्सर्वान्विश्वकर्मविनिर्मितान्॥१२२॥
ततः सम्पूज्य विधिना नानापुष्पैः सुगन्धिभिः । सुवर्णमणिमुक्ताद्यैर्नानावस्त्रैः सुशोभनैः ॥१२३॥
ददौ द्विजेभ्यो विषयान्पुराणि नगराणि च । एवं बहुविधान्दत्त्वा राज्यं कृत्वा यथोचितम्॥१२४॥
इष्ट्वा च विविधैर्यज्ञैर्दत्त्वा दानान्यनेकशः । कृतकृत्यस्ततो राजा त्यक्तसर्वपरिग्रहः ॥
जगाम परमं स्थानं तद्विष्णोः परमं पदम्॥१२५॥

इति श्रीबृहन्नारदीयपुराणोत्तरभागे मोहिनीवसुसंवादे श्रीपुरुषोत्तममाहात्म्ये चतुष्पञ्चाशत्तमोऽध्यायः ॥५४॥
आदितः श्लोकानां समष्ट्यङ्काः-१६,४६६+१२५=१६,५९१



## ॥ अथ पञ्चपञ्चाशत्तमोऽध्यायः ॥

मोहिन्युवाच ॥
कस्मिन् काले द्विजश्रेष्ठ गन्तव्यं पुरुषोत्तमे । विधिना केन कर्तव्या पञ्चतीर्थ्यपि मानद ॥१॥
एकैकस्य च तीर्थस्य स्नाने दाने च यत्फलम्। देवताप्रेक्षणे चैव ब्रूहि सर्वं पृथक् पृथक्॥२॥
वसुरुवाच ॥
निराहारः कुरुक्षेत्रे पादेनैकेन यस्तपेत्। जितेन्द्रियो जितक्रोधः सप्तसंवत्सरायुतम्॥३॥
दृष्ट्वा सकृज्ज्येष्ठशुक्लद्वादश्यां पुरुषोत्तमम्। कृतोपवासः प्राप्नोति ततोऽधिकतरं फलम्॥४॥
तस्माज्ज्येष्ठे तु सुभगे प्रयत्नेन सुसंयतैः । स्वर्गलोकेप्सुभिर्मर्त्यैर्द्रष्टव्यः पुरुषोत्तमः ॥५॥
पञ्चतीर्थीं च विधिवत्कृत्वा ज्येष्ठे नरोत्तमः । द्वादश्यां शुक्लपक्षस्य पश्येत्तं पुरुषोत्तमम्॥६॥
ये पश्यन्तयव्ययं देवं द्वादश्यां पुरुषोत्तमम्। ते विष्णुलोकमासाद्य न च्यवन्ते कदाचन॥७॥
तस्माज्ज्येष्ठे प्रयत्नेन गन्तव्यं विधिनन्दिनि । कृत्वा सम्यक्पञ्चतीर्थीं द्रष्टव्यः पुरुषोत्तमः ॥८॥
सुदूरस्थोऽपि प्रीतात्मा कीर्तयेत्पुरुषोत्तमम्। अहन्यहनि शुद्धात्मा सोऽपि विष्णुपुरं व्रजेत्॥९॥
यात्रां करोति कृष्णस्य श्रद्धया यः समाहितः । सर्वपापविनिर्मुक्तो विष्णुलोकं व्रजे न्नरः ॥१०॥
चक्रं दृष्ट्वा हरेर्दूरात्प्रासादोपरि संस्थितम्। सहसा मुच्यते पापान्नरो भक्त्या प्रणम्य तम्॥११॥
पञ्चतीर्थीविधिं वक्ष्ये श्रृणु मोहिनि साम्प्रतम्। यस्यां कृतायां मनुजो माधवस्य प्रियो भवेत्॥१२॥
मार्कण्डेयह्रदं गत्वा स्नात्वा चोदङ्मुखः शुचिः । निमज्जेत्तत्र त्रीन्वारानिमं मन्त्रमुदीरयेत्॥१३॥
संसारसागरे मग्नं पापग्रस्तमचेतनम्। त्राहि मां भगनेत्रघ्न त्रिपुरारे नमोऽस्तु ते ॥१४॥
नमः शिवाय शान्ताय सर्वपापहराय च । स्नानं करोमि देवेश मम नश्यतु पातकम्॥१५॥
नाभिमात्रे जले स्थित्वा विधिवद्देवता ऋषीन्। तिलोदकेन मतिमान्पितृनन्यांश्च तर्पयेत् ॥१६॥

स्नात्वैवं च तथाचम्य ततो गच्छेच्छिवालयम् । प्रविश्य देवतागारं कृत्वा तं त्रिः प्रदक्षिणम् ॥१७॥
मूलमन्त्रेण सम्पूज्य मार्कण्डेयेशमादरात् । अघोरेण तु मन्त्रेण प्रणिपत्य क्षमापयेत् ॥१८॥
त्रिलोचन नमस्तेऽस्तु नमस्ते शशिभूषण । त्राहि मां पुण्डरीकाक्ष महादेव नमोऽस्तु ते ॥१९॥
मार्कण्डेयह्रदे त्वेवं स्नात्वा दृष्ट्वा च शङ्करम् । दशानामश्वमेधानां फलं प्र प्नोति मानवः ॥२०॥
पापैः सर्वैर्विनिर्मुक्तः शिवलोकं स गच्छति । तत्र भुक्त्वा वरान्भोगान्यावदाभूतसम्पलवम् ॥२१॥
इह लोकं समासाद्य भवेद्विप्रो बहुश्रुतः । शाङ्करं योगमासाद्य ततो मोक्षमवाप्नुयात् ॥२२॥
कल्पवृक्षं ततो गत्वा कृत्वा तं त्रिः प्रदक्षिणम् । पूजयेत्परया भक्त्या मन्त्रेणानेन तं वटम् ॥२३॥
ॐ नमोऽव्यक्तरूपाय महते नतपालिने । महोदकोपविष्टाय न्यग्रोधाय नमोऽस्तु ते ॥२४॥
अवसस्त्वं सदा कल्पे हरेश्चायतने वटे । न्यग्रोध हर मे पापं कल्पवृक्ष नमोऽस्तु ते ॥२५॥
भक्त्या प्रदक्षिणं कृत्वा गत्वा कल्पवटं नरः । सहसोज्झति पापौघं जीर्णां त्वचमिवोरगः ॥२६॥
छायां तस्य समाक्रम्य कल्पवृक्षस्य मोहिनि । ब्रह्महत्यां नरो जह्यात्पापेष्वन्येषु का कथा ॥२७॥
दृष्ट्वा कृष्णाङ्गसम्भूते ब्रह्मतेजोमयं परम् । न्यग्रोधाकृतिकं विष्णुं प्रणिपत्य च वैधसि ॥२८॥
राजसूयाश्वमेधाभ्यां फल प्राप्नोति चाधिकम् । तथा कुलं समुद्धृत्य विष्णुलोकं स गच्छति ॥२९॥
वैनतेयं नमस्कृत्य कृष्णस्य पुरतः स्थितम् । सर्वपापविनिर्मुक्तस्ततो विष्णुपुरं व्रजेत् ॥३०॥
दृष्ट्वा वटं वैनतेयं यः पश्येत्पुरुषोत्तमम् । सङ्कर्षणं सुभद्र ां च स याति परमां गतिम् ॥३१॥
प्रविश्यायतनं विष्णोः कृत्वा तं त्रिः प्रदक्षिणम् । सङ्कर्ष णं सुभद्रां च भक्त्या पूज्य प्रसादयेत् ॥३२॥
नमस्ते हलधृङ्नाम्ने नमस्ते मुसलायुध । नमस्ते रेवतीकान्त नमस्ते भक्तवत्सल ॥३३॥
नमस्ते बलिनां श्रेष्ठ नमस्ते धरणीधर । प्रलम्बारे नमस्तेऽस्तु त्राहि मां कृष्णपूर्वज ॥३४॥
एवं प्रसाद्य चानन्तमजेयं त्रिदशार्चितम् । कैलासशिखराकारं चन्द्रकान्तवराननम् ॥३५॥
नीलवस्त्रधरं देवं फणाविकटमस्तकम् । महाबलं हलधरं कुण्डलैकविभूषितम् ॥३६॥
रौहिणेयं नरो भक्त्या लभेदभिमतं फलम् । सर्वपापैर्विनिर्मुक्तो विष्णुलोकं च गच्छति ॥३७॥
आभूतसम्प्लवं यावद्भुक्त्वा तत्र स्वयं बुधः । पुण्यक्षयादिहागत्य प्रवरो योगिनां कुले ॥३८॥
ब्राह्मणप्रवरो भूत्वा सर्वशास्त्रार्थपारगः । ज्ञानं तत्र समासाद्य मुक्तिं प्राप्नोति दुर्लभाम् ॥३९॥
एवमभ्यर्च्य हलिनं ततः कृष्णं विचक्षणः । द्वादशाक्षरमन्त्रेण पूजयेत्सुसमाहितः ॥४०॥
द्विषट्वर्णकमन्त्रेण भक्त्या ये पुरुषोत्तमम् । पूजयन्ति सदा धीरास्ते मोक्षं प्राप्नुवन्ति वै ॥४१॥
न तां गतिं सुरा यान्ति योगिनो नैव सोमपाः । यां गतिं यान्ति विधिजे द्वादशाक्षरतत्पराः ॥४२॥
तस्मात्तेनैव मन्त्रेण भक्त्या कृष्णं जगद्गुरुम् । सम्पूज्य गन्धपुष्पाद्यैः प्रणिपत्य प्रसादयेत् ॥४३॥
जय कृष्ण जगन्नाथ जय सर्वा घनाशन । जय चाणूरकेशिघ्नजय कंसनिषूदन ॥४४॥
जय पद्मपलाशाक्ष जय चक्रगदाधर । जय नीलाम्बुदश्याम जय सर्वसुखप्रद ॥४५॥
जय देव जगत्पूज्य जय संसारनाशन । जय लोकपते नाथ जय वाञ्छाफलप्रद ॥४६॥
संसारसागरे घोरे निःसारे दुःखफेनिले । क्रोधग्राहकुले रौद्रे विषयोदकसम्प्लवे ॥४७॥
नानारोगोर्मिकलिले मोहावर्तसुदुस्तरे । निमग्नोऽहं सुरश्रे ष्ठ त्राहि मां पुरुषोत्तम ॥४८॥
एवं प्रसाद्य देवेशं वरदं भक्तवत्सलम् । सर्वपापहरं देवं सर्वकामफलप्रदम् ॥४९॥
पीनांसं द्विभुजं कृष्णं पद्मपत्रायतेक्षणम् । महोरस्कं महाबाहुं पीतवस्त्रं शुभाननम् ॥५०॥
शङ्खचक्रगदापाणिं मुकुटाङ्गदभूषणम् । सर्वलक्षणसंयुक्तं वनमालाविभूषितम् ॥५१॥
दृष्ट्वा नरोऽञ्जलिं कृत्वा दण्डवत्प्रणिपत्य च । अश्वमेधसहस्राणां फलं प्राप्नोति मोहिनि ॥५२॥
यत्फलं सर्वतीर्थेषु स्नाने दाने प्रकीर्तितम् । नरस्तत्फलमाप्नोति दृष्ट्वा कृष्णं प्र णम्य च ॥५३॥
यत्फलं सर्ववेदेषु सर्वयज्ञेषु यत्फलम् । तत्फलं समवाप्नोति नरः कृष्णं प्र णम्य च ॥५४॥
यत्फलं सर्वदानेषु व्रतेषु नियमेषु च । नरस्तत्फलमाप्नोति दृष्ट्वा कृष्णं प्र णम्य च ॥५५॥
यत्फलं ब्रह्मचर्येण सम्यक् चीर्णेन कीर्तितम् । नरस्तत्फलमाप्नोति दृष्ट्वा कृष्णं प्रणम्य च ॥५६॥

गार्हस्थ्येन यथोक्तेन यत्फलं समुदाहृतम् । नरस्त्फलमाप्नोति दृष्ट्वा कृष्णं प्रणम्य च ॥५७॥
यत्फलं वनवासेन वानप्रस्थस्य कीर्तितम् । नरस्तत्फलमाप्नोति दृष्ट्वा कृष्णं प्रणम्य च ॥५८॥
सन्यासेन यथोक्तेन यत्फलं समुदाहृतम् । नरस्तत्फलमाप्नोति दृष्ट्वा कृष्णं प्रणम्य च ॥५९॥
किं चात्र बहुनोक्तेन माहात्म्यं तस्य भामिनि । दृष्ट्वा कृष्णं नरो भक्त्या मोक्षं प्राप्नोति दुर्लभम् ॥६०॥
पापैर्विमुक्तः शुद्धात्मा कल्पको टिसमुद्भवैः । श्रिया परमया युक्तः सर्वैः समुदितो गुणैः ॥६१॥
सर्वकामसमृद्धेन विमानेन सुवर्चसा । त्रिःसप्तकुलमुद्धृत्य नरो विष्णुपुरं व्रजेत् ॥६२॥
ततः कल्पशतं यावद्भुक्त्वा भोगान्मनोरमान् । गन्धर्वाप्सरसैः सार्धं यथा विष्णुश्चतुर्भुजः ॥६३॥
च्युतस्तस्मादिहायातो विप्राणां प्रवरे कुले । सर्वज्ञः सर्ववेदी च जायते गतमत्सरः ॥६४॥
स्वधर्मनिरतः शान्तो दाता भूतहिते रतः । आसाद्य वैष्णवं ज्ञानं ततो मुक्तिमवाप्नुयात् ॥६५॥
ततः सम्पूज्य मन्त्रेण सुभद्रां भक्तवत्सलाम् । प्रसादयेच्च विधिजे प्रणिपत्य कृताञ्जलिः ॥६६॥
नमस्ते सर्वगे देवि नमस्ते शुभसौख्यदे । त्राहि मां पद्मपत्राक्षि कात्यायनि नमोऽस्तु ते ॥६७॥
एवं प्रसाद्य तां देवीं जगद्धात्रीं जगद्धिताम् । बलदेवस्य भगिनीं सुभद्रां वरदां शिवाम् ॥६८॥
कामगेन विमानेन नरो विष्णुपुरं व्रजेत् । आभूतसम्प्लवं यावत्क्रीडित्वा तत्र देववत् ॥६९॥
इह मानुषतां प्राप्तो ब्राह्मणो वेदविद्भवेत् । प्राप्य योगं हरेस्तत्र मोक्षं च लभते ध्रुवम् ॥७०॥
निष्क्रम्य देवतागारात्कृतकृत्यो भवेन्नरः । प्रणम्यायतने पश्चाद्व्रजेत्तत्र समाहितः ॥७१॥
इन्द्रनीलमयो विष्णुर्यत्रास्ते वालुकावृतः । अन्तर्धानेऽपि तं नत्वा ततो विष्णुपुरं व्रजेत् ॥७२॥
सर्वदेवमयो देवो हिरण्यकशिपूद्धरः । यत्रास्ते नित्यदा देवि सिंहार्द्धकृतविग्रहः ॥७३॥
भक्त्या दृष्ट्वा तु तं देवं प्रणम्य नृहरिं शुभे । मुच्यते पातकैर्मर्त्य : समस्तैर्नात्र संशयः ॥७४॥
नरसिंहस्य ये भक्त्या भवन्ति भुवि मानवाः । न तेषां दुष्कृतं किञ्चित्फलं च स्याद्यदीप्सितम् ॥७५॥
तस्मात्सर्वप्रयत्नेन नरसिंहं समाश्रयेत् । धर्मार्थकाममोक्षाणां फलं यस्मात्प्रयच्छति ॥७६॥
तस्मात्तं ब्रह्मतनये भक्त्या सम्पूजयेत्सदा । मृगराजं महावीर्यं सर्वकामफलप्रदम् ॥७७॥
ब्राह्मणाः क्षत्रिया वैश्याः स्त्रियः शूद्रान्त्यजादयः । सम्पूज्य तु सुरश्रेष्ठं भक्ताः सिंहवपुर्द्ध रम् ॥७८॥
मुच्यन्ते चाशुभाद्दुःखाज्जन्मकोटिसमुद्भवात् । सम्पूज्य तं सुरश्रेष्ठं प्राप्नुवन्त्यभिवाञ्छितम् ॥७९॥
देवत्वममरेशत्वं धनेशत्वं च भामिनि । यक्षविद्याधरत्वं च तथान्यच्च प्रयच्छति ॥८०॥
श्रृणुष्व नरसिंहस्य प्रभावं विधिनन्दिनि । अजितस्याप्रमेयस्य भुक्तिमुक्तिप्रदस्य च ॥८१॥
कः शक्नोति गुणान्वक्तुं समस्तांस्तस्य सुव्रते । सिंहार्द्धकृतदेहस्य प्रवक्ष्यामि समासतः ॥८२॥
याः काश्चित्सिद्धयश्चात्र श्रूयन्ते दैवमानुषाः । प्रसादात्तस्य ताः सर्वाः सिद्ध्यन्ते नात्र संशयः ॥८३॥
स्वर्गे मर्त्यै च पाताले दिवि तोये सुरे नगे । प्रसादात्तस्य देवस्य भवत्यव्याहता गतिः ॥८४॥
असाध्यं तस्य देवस्य नास्त्यत्र सचराचरे । नरसिंहस्य सुभगे सदा भक्तानुकम्पिन ॥८५॥
विधानं तस्य वक्ष्यामि भक्तानामुपकारकम् । येन प्रसीदते चासौ सिंहार्द्धकृतविग्रहः ॥८६॥
यत्तत्वं तस्य देवस्य तदज्ञातं सुरासुरैः । शाकयावकमूलैस्तु फलपिण्याकसक्तुभिः ॥८७॥
पयोभक्ष्येण वा भद्रे वर्तते साधकेश्वरः । कासकौपीनवासाश्च ध्यानयुक्तो जितेन्द्रियः ॥८८॥
अरण्ये विजने देशे नदीसङ्गमपर्वते । सिद्धक्षेत्रे चोषरे च नरसिंहाश्रमे तथा ॥८९॥
प्रतिष्ठाप्य स्वयं चापि पूजां कृत्वा विधानतः । उपपातकवान्देवि महापातकवानपि ॥९०॥
मुक्तो भवेत्पातकेभ्यः साधको नात्र संशयः । कृत्वा प्रदक्षिणं तत्र नरसिंहं प्रपूजयेत् ॥९१॥
गन्धपुष्पादिभिर्धूपैः प्रणम्य शिरसा प्रभुम् । कर्पूरचन्दनाक्तानि जातीपुष्पाणि मस्तके ॥९२॥
प्रदद्यान्नरसिंहस्य ततः सिद्धिः प्रजायते । भगवान्सर्वकार्येषु न क्वचित्प्रतिदूयते ॥९३॥
न शक्तास्तं समाक्रान्तुं ब्रह्मरुद्रादयः सुराः । किं पुनर्दानवा लोके सिद्धगन्धर्वमानुषाः ॥९४॥
विद्याधराः यक्षगणाः सकिन्नरमहोरगाः । ते सर्वे प्रलयं यान्ति दिव्या दिव्याग्नितेजसा ॥९५॥
सकृज्जप्त्वाग्निशिखया हन्यात्सर्वानुपद्रवान् । त्रिर्जप्त्वा कवचं दिव्यं संरक्षेद्दैत्यदानवात् ॥९६॥

भूतात्पिशाचाद्रक्षोभ्यो ये चान्ये परिपंथिनः । त्रिर्जप्तं कवचं दिव्यमभेद्यं च सुरासुरैः ॥९७॥
योजनद्वादशान्तस्तु देवो रक्षति सर्वदा । नरसिंहो महाभागे महाबलपराक्रमः ॥९८॥
ततो गत्वा बिलद्वारमुपोष्य रजनीत्रयम् । पलाशकाष्ठैः प्रज्वाल्य भगवज्जातवेदसम् ॥९९॥
पालाशसमिधं तत्र जुहुयात्त्रिमधुप्लुताम् । द्वेऽयुते कञ्जनयने शकटश्चैव साधकः ॥१००॥
ततः कवल्लीविवरं प्रकटं जायते क्षणात् । ततो विशेत्तु निःशङ्कः कवल्लीविवरं बुधः ॥१०१॥
गच्छतः शकटस्याथ तमो मोहश्च नश्यति । राजमार्गस्तु विस्तीर्णो दृश्यते तत्र मोहिनि ॥१०२॥
नरसिंहं स्मरंस्तत्र पातालं विशते तदा । गत्वा तत्र जपेच्छुद्धो नरसिंहं तमव्ययम् ॥१०३॥
ततः स्त्रीणां सहस्राणि वीणाचामरकर्मणाम् । निर्गच्छन्ति पुराच्चैव स्वागतं ता वदन्ति च ॥१०४॥
प्रवेशयन्ति तं हस्ते गृहीत्वा साधकेश्वरम् । ततो रसायनं दिव्यं पाययन्ति सुलोचने ॥१०५॥
पीतमात्रे दिव्यदेहो जायते सुमहाबलः । क्रीडते दिव्यकन्याभिर्यावदाभूतसम्पलवम् ॥१०६॥
भिन्नदेहो वासुदेवं नीयते नात्र संशयः । यदा न रोचयन्त्येतास्ततो निर्गच्छते पुनः ॥१०७॥
पट्टं शूलं च खड्गं च रोचनां च मणिं तथा । रसं रसायनं चैव पादुकाञ्जनमेव च ॥१०८॥
कृष्णाञ्जलिं च सुभगे गुटिकां च मनःशिलाम् । मुण्डलां चाक्षसूत्रं च षष्ठीं सञ्जीवनीं तथा ॥१०९॥
सिद्धां विद्यां च शास्त्राणि गृहीत्वा साधकोत्तमः । ज्वलद्वह्निस्फुलिङ्गोर्मिवेष्टितं त्रिदशं हृदि ॥११०॥
सकृन्न्यस्तं दहेत्सर्वं वृजिनं जन्मकोटिकम् । विषेन्यस्तं विषं हन्यात्कुष्ठं हन्यात्तनौ स्थितम् ॥१११॥
सुदेहभ्रूणहत्यादि कृत्वा दिव्येन शुध्यति । महाग्रहगृहीतेषु ज्वलमानं विचिन्तयेत् ॥११२॥
रुदन्ति वै ततः शीघ्रं नश्येयुर्दारुणा ग्रहाः । बालानां कण्ठके बद्ध्वा रक्षा भवति नित्यशः ॥११३॥
गण्डपिण्डककृत्यानां नाशनं कुरुते ध्रुवम् । व्याधिघाते समिद्भिश्च घृतं क्षीरेण होमयेत् ॥११४॥
त्रिसन्ध्यं मासमेकं तु सर्वरोगान्विनाशयेत् । असाध्यं नास्य पश्यामि तत्वस्य सचराचरे ॥११५॥
यां यां कामयते सिद्धिं तां तां प्र प्रोत्यपि ध्रुवम् । अष्टोत्तरशतं त्वेकं पूजयित्वा मृगाधिपम् ॥११६॥
मृत्तिकां सप्त वल्मीके श्मशाने च चतुष्पथे । रक्तचन्दनसम्मिश्रां गवां क्षीरेण लेपयेत् ॥११७॥
सिंहस्य प्रतिमां कृत्वा प्रमाणेन षडङ्गुलाम् । भूर्जपत्रे विशेषे ण लिखेद्रोचनया तथा ॥११८॥
नरसिंहस्य कण्ठे तु बद्ध्वा चैव समन्त्रवत् । जपेत्संख्याविहीनं तु पूजयित्वा जलाशये ॥११९॥
यावन्मन्त्रं तु जपति सप्ताहं संयतेन्द्रियः । जलाकीर्णा मुहूर्तेन जायते सर्वमेदिनी ॥१२०॥
अथवा शुद्धवृक्षाग्रे नरसिंहं तु पूजयेत् । जप्त्वा चाष्टशतं तत्त्वं वर्षं तद्विनिवारयेत् ॥१२१॥
तमेव पिञ्जके बद्ध्वा भ्रामयेत्साधकोत्तमः । महावातो मुहूर्तेन आगच्छे न्नात्र संशयः ॥१२२॥
पुनश्च वारयन्सिक्तां सप्तजप्तेन वारिणा । अथ तां प्रतिमां द्वारे निखनेद्यस्य साधकः ॥१२३॥
गोत्रोत्सादो भवेत्तस्य उद्धृते चैव शान्तिदः । तस्माद्वै ब्रह्मतनये पूजयेद्भक्तितः सदा ॥१२४॥
मृगराजं महावीर्यं सर्वकामफलप्रदम् । दृष्ट्वा स्तुत्वा नमस्कृत्य सम्पू ज्य नृहरिं शुभे ॥१२५॥
प्राप्नुवन्ति नरा राज्यं स्वर्गं मोक्षं च दुर्लभम् । नरसिंहं नरो दृष्ट्वा लभेदभिमतं फलम् ॥१२६॥
विमुक्तः सर्वपापेभ्यो विष्णु लोकं च गच्छति । सकृद्दृष्ट्वा तु तं देवं भक्त्या सिंहवपुर्द्धरम् ॥१२७॥
मुच्यते पातकैः सर्वैः कायवाक्चित्तसम्भवैः । सङ्ग्रामे सङ्कटे दुर्गे चौरव्याघ्रादिपीडिते ॥१२८॥
कान्तारे प्राणसन्देहे विषवह्निजलेषु च । राजादिभीषु सङ्ग्रामे ग्रहरोगादिपीडिते ॥१२९॥
स्मृत्वा तं यो हि पुरुषः सङ्कटैर्विप्रमुच्यते । सूर्योदये यथा नाशं तमोऽभ्येति महत्तरम् ॥१३०॥
तथा सन्दर्शने तस्य विनाशं यान्त्युपद्रवाः । गु टिकां जनपाताले पादलेपरसायनम् ॥१३१॥
नरसिंहे प्रसन्ने तु प्राप्नोत्यन्यांश्च वाञ्छितान् । यान्यान्कामानभिध्यायन्भजेत नृहरिं नरः ॥१३२॥
तांस्तान्कामानवाप्नोति नरो नास्त्यत्र संशयः ॥१३३॥

इति श्रीबृहन्नारदीयपुराणोत्तरभागे मोहिनीवसुसंवादे पुरुषोत्तममाहात्म्ये पञ्चपञ्चाशत्तमोऽध्यायः ॥५५॥

आदितः श्लोकानां समष्टयङ्काः-१६,५९१+१३३=१६,७२४



# ॥ अथ षट्पञ्चाशत्तमोऽध्यायः ॥

वसुरुवाच ॥

अन्यच्छृणु महाभागे तस्मिञ्छ्रीपुरुषोत्तमे । तीर्थव्रजं महत्पुण्यं दर्शनात्पापनाशनम् ॥१॥
अनन्ताख्यं वासुदेवं दृष्ट्वा भक्त्या प्रणम्य च । सर्वपापविनिर्मुक्तो नरो याति परं पदम् ॥२॥
श्वेतगङ्गां नरः स्नात्वा यः पश्येच्छ्वतमाधवम् । मत्स्याख्यं माधवं चैव श्वेतद्वीपं स गच्छति ॥३॥
तुषारप्रतिमं शुद्धं शङ्खचक्रगदाधरम् । सर्वलक्षणसंयुक्तं पुण्डरीकायतेक्षणम् ॥४॥
श्रीवत्सवक्षसा युक्तं सुप्रसन्नं चतुर्भुजम् । वनमालावृतोरस्कं मुकुटाङ्गदधारिणम् ॥५॥
पीतवस्त्रं सुपीनांसं कुण्डलाभ्यामलंकृतम् । कुशाग्रेणापि राजे न्द्र श्वेतगाङ्गेयमेव च ॥६॥
स्पृष्ट्वा स्वर्गं गमिष्यन्ति विष्णुभक्ताः समाहिताः । यस्त्विमां प्रतिमां पश्येन्माधवाख्यां शशिप्रभाम् ॥७॥
शङ्खगोक्षीरसङ्काशामशेषाघविनाशिनीम् । तां प्रणम्य सकृद्भक्त्या पुण्डरीकनिभेक्षणाम् ॥८॥
विहाय सर्वकामान्वै विष्णुलोके महीयते । मन्वन्तराणि तत्रैव देवकन्याभिरावृतः ॥९॥
गीयमानश्च गन्धर्वैः सिद्धविद्याधरार्चितः । भुनक्ति विपुलान्भोगान्यथेष्टं दैवतैः सह ॥१०॥
च्युतस्तस्मादिहागत्य मानुष्ये ब्राह्मणो भवेत् । वेदवेदाङ्गविद्धीमान् भोगवांश्चिरजीवितः ॥११॥
गजाश्वरथयानाढ्यो धनधान्यवृतः शुचिः । रूपवान्बहुभाग्यश्च पुत्रपौत्रसमन्वितः ॥१२॥
पुरुषोत्तमं पुनः प्राप्य वटमूलेऽथ सागरे । त्यक्त्वा देहं हरिं स्मृत्वा ततः शान्तं पदं व्रजेत् ॥१३॥
श्वेतमाधवमालोक्य समीपे मत्स्यमाधवम् । एकार्णवे जले पूर्वं रूपं रोहितमास्थितः ॥१४॥
वेदानां हरणार्थाय रसातलतले स्थितः । चिन्तयित्वा क्षितिं मत्स्यं तस्मिन्स्थाने व्यवस्थितम् ॥१५॥
आधाय तरुणं रूपं माधवं मत्स्यमाधवम् । प्रणम्य प्रयतो भूत्वा सर्वान्कष्टान्विमुञ्चति ॥१६॥
प्रयाति परमं स्थानं यत्र देवो हरिः स्वयम् । काले पुनरिहायातो राजा स्यात्पृथिवीतले ॥१७॥
मत्स्यमाधवमासाद्य दुराधर्षो भवेन्नरः । दाता भोक्ता भवेद्यो द्वा वैष्णवः सत्यसङ्गरः ॥१८॥
योगं प्राप्य हरेः पश्चात्ततो मोक्षमवाप्नुयात् । मत्स्यमाधवमाहात्म्यं मया ते परिकीर्तितम् ॥१९॥
यं दृष्ट्वा ब्रह्मतनये सर्वान्कामानवाप्नुयात् । मार्जनं तत्र वक्ष्यामि मार्कण्डेयह्रदे शुभे ॥२०॥
भक्त्या तु तन्मना भूत्वा पुराणं पुण्यमुक्तिदम् । मार्कण्डेयह्रदे स्नानं सर्वकालं प्रशस्यते ॥२१॥
चतुर्दश्यां विशेषेण सर्वपापप्र णाशनम् । तद्वत्स्नानं समुद्रस्य सर्वकालं प्रशस्यते ॥२२॥
पौर्णमास्यां विशेषेण हयमेधफलं लभेत् । पूर्णिमा ज्येष्ठमासस्य ज्येष्ठा ऋक्षं यदा भवेत् ॥२३॥
तदा गच्छेद्विशेषण तीर्थराजं परं शुभम् । कायवाङ्मानसैः शु द्धसद्भावोऽनन्यमानसः ॥२४॥
सर्वद्वन्द्वविनिर्मुक्तो वीतरागो विमत्सरः । कल्पवृक्षं वटं रम्यं यत्र साक्षाज्जनार्दनः ॥२५॥
प्रदक्षिणं प्रकुर्वीत त्रीन्वारान्सुसमाहितः । दृष्ट्वा नश्यति यत्पापं सप्तजन्मसमुद्भवम् ॥२६॥
पुण्यं प्राप्नोति विपुलं गतिमिष्टां च मोहिनि । तस्य नामानि वक्ष्यामि सप्रमाणं युगे युगे ॥२७॥
वटं वटेश्वरं शान्तं पुराणपुरुषं विदुः । वटस्यैतानि नामानि कीर्तितानि कृतादिषु ॥२८॥
योजनं पादहीनं च योजनार्द्धं तदर्द्धकम् । प्रमाणं कल्पवृक्षस्य कृतादिषु यथाक्रमम् ॥२९॥
पूर्वोक्तेन तु मन्त्रेण नमस्कृ त्वा च तं वटम् । दक्षिणाभिमुखो गच्छेद्धन्वन्तरशतत्रयम् ॥३०॥
यत्रासौ दृश्यते चिह्नं स्वर्गद्वारं मनोरमम् । सागरान्तः समाकृ ष्टं काष्ठं सर्वगुणान्वितम् ॥३१॥
प्रणिपत्य ततस्तिष्ठेत्परिपूज्य ततः पुनः । मुच्यते सर्वपापौघैस्तथा पापग्रहादिभिः ॥३२॥
उग्रसेनः पुरा दृष्ट्वा स्वर्गद्वारेण सागरम् । गत्वाऽऽचम्य शुचिस्तत्र ध्यात्वा नारायणं परम् ॥३३॥
न्यसेदष्टाक्षरं मन्त्रं पश्चाद्धस्तशरीरयोः । ॐ नमो नारायणायेति यं वदन्ति मनीषिणः ॥३४॥
किं कार्यं बहुभिर्मन्त्रैर्मनोविभवकारकैः । नमो नारायणायेति मन्त्रः सर्वार्थसाधकः ॥३५॥
आपो नरस्य सूनुत्वान्नारा इति ह कीर्तिताः । विष्णोस्तस्त्वालयं पूर्वं तेन नारायणः स्मृतः ॥३६॥
नारायणपरा वेदा नारायणपरा द्विजाः । नारायणपरं ज्ञानं नारायणपरा क्रिया ॥३७॥

नारायणपरो धर्मो नारायणपरं तपः । नारायणपरं दानं नारायणपरं व्रतम् ॥३८॥
नारायणपरा लोका नारायणपराः सुराः । नारायणपरं नित्यं नारायणपरं पदम् ॥३९॥
नारायणपरा पृथ्वी नारायणपरं जलम् । नारायणपरो वह्निर्नारायणपरं नभः ॥४०॥
नारायणपरो वायुर्नारायणपरं मनः । अहङ्कारश्च बुद्धिश्च उभे नारायणात्मके ॥४१॥
भूतं भव्यं भविष्यच्च यत्किञ्चिज्जीवसंज्ञितम् । स्थूलं सूक्ष्मं परं चैव सर्वं नारायणात्मकम् ॥४२॥
नारायणात्परं किञ्चिन्नेह पश्यामि मोहिनि । तेन व्याप्तमिदं सर्वं दृश्यादृश्यं चराचरम् ॥४३॥
आपो ह्यायतनं विष्णोः स चासावम्भसांपतिः । तस्मादप्सु स इत्येवं नारायणमघापहम् ॥४४॥
स्नानकाले विशेषेण चोपस्थाय जले शुचिः । स्मरेन्नारायणं ध्यायेद्धस्ते काये च विन्यसेत् ॥४५॥
ॐकारं वामकट्यां तु नाकारं दक्षिणे तथा । राकारं नाभिदेशे तु यकारं वामबाहुके ॥४६॥
णाकारं दक्षिणे न्यस्य यकारं मूर्ध्नि विन्यसेत् । अधश्चोर्द्ध्वं च हृदये पार्श्वतः पृष्ठतोऽग्रतः ॥४७॥
ध्यात्वा नारायणं पश्चादारभेत्कवचं बुधः । पूर्वे मां पातु गोविन्दो दक्षिणे मधुसूदनः ॥४८॥
पश्चिमे श्रीधरो देवः केशवस्तु तथोत्तरे । पातु विष्णुस्तथाग्नेये नैर्ऋते माधवोऽव्ययः ॥४९॥
वायव्ये तु हृषीकेशस्तथेशाने च वामनः । भूतले पातु वाराहस्तथोर्द्ध्वे च त्रिविक्रमः ॥५०॥
कृत्वैवं कवचं पश्चादात्मानं चिन्तयेत्ततः । अहं नारायणो देवः शङ्खचक्रगदाधरः ॥५१॥
एवं ध्यात्वा तदात्मानमिमं मन्त्रमुदीरयेत् । त्वमग्निर्द्विपदां नाथ रेतोधाः कामदीपनः ॥५२॥
प्रधानः सर्वभूतानां जीवानां प्रभुरव्ययः । अमृतस्यारणिस्त्वं हि देवयोनिरपांपते ॥५३॥
वृजिनं हर मे सर्वं तीर्थराज नमोऽस्तु ते । एवमुच्चार्य विधिवत्ततः स्नानं समाचरेत् ॥५४॥
अन्यथा ब्रह्मतनये स्नानं तत्र न शस्यते । कृत्वा चाब्दैवतैर्मन्त्रैरभिषेकं च मार्जनम् ॥५५॥
अन्तर्जले जपन्पश्चात्त्रिरावृत्याघमर्षणम् । हयमेधो यथा देवि सर्वपापहरः क्रतुः ॥५६॥
तथाघमर्षणं चात्र सूक्तं सर्वाघमर्षणम् । उत्तीर्य वाससी धौते निर्मले परिधाय च ॥५७॥
प्राणानायम्य चाचम्य सन्ध्यां चोपास्य भास्करम् । उपातिष्ठेत्ततश्चोर्द्ध्वं क्षिप्त्वा पुष्पजलाञ्जलिम् ॥५८॥
उपस्थायोर्द्धबाहुश्च तल्लिङ्गैर्भास्करं ततः । गायत्रीं पावनीं देवीं जपेदष्टोत्तरं शतम् ॥५९॥
अन्यांश्च सोरमन्त्रान्हि जप्त्वा तिष्ठन्समाहितः । कृत्वा प्रदक्षिणं सूर्यं नमस्कृत्योपविश्य च ॥६०॥
स्वाध्यायं प्राङ्मुखः कृत्वा तर्पयेद्देवमानवान् । ऋषीन्पितृन्हि स्वीयांश्च विधिवन्नामगोत्रवित् ॥६१॥
तोयेन तिलमिश्रेण विधिवत्सुसमाहितः । श्राद्धे हवनकाले च पाणिनैकेन निर्वपेत् ॥६२॥
तर्पणे तूभयं कुर्यादेष एव विधिः सदा । अन्वारब्धेन सव्येन पाणिना दक्षिणेन तु ॥६३॥
तृप्यतामिति सुव्यक्तं नामगोत्रेण वाग्यतः । कायस्थैर्यस्तिलैर्मोहात्करोति पितृतर्पणम् ॥६४॥
तर्पितास्तेन पितरस्त्वङ्मांसरुधिरास्थिभिः । जले स्थित्वा स्थले दत्तं स्थले स्थित्वा जलेऽर्पितम् ॥६५॥
नोपतिष्ठति तत्तोयं यद्भूम्यां न प्रदीयते । पितृणामक्षयं स्थानं मही दत्ता विरञ्चिना ॥६६॥
तस्मात्तत्रैव दातव्यं पितृणां प्रीतिमिच्छता । भूमिस्तेन समुत्पन्ना भूम्यां चैव तु संस्थितम् ॥६७॥
भूम्यां चैव लयं यान्ति भूमौ दद्यात्ततो जलम् । आस्तीर्य च कुशान्साग्रानावाह्य स्वस्वमन्त्रतः ॥
प्राचीनाग्रेषु वै देवान्याम्याग्रेषु तथा पितृन् ॥६८॥

इति श्रीबृहन्नारदीयपुराणोत्तरभागे मोहिनीवसुसंवादे पुरुषोत्तममाहात्म्ये षट्पञ्चाशत्तमोऽध्यायः ॥५६॥

आदितः श्लोकानां समष्ट्यङ्काः-१६,७२४+६८=१६,७९२



## ॥ अथ सप्तपञ्चाशत्तमोऽध्यायः ॥

वसुरुवाच ॥

देवान् ऋषीन्पितृंश्चान्यान्संतर्प्याचम्य वाग्यतः । हस्तमात्रं चतुष्कोणं चतुर्द्वारं सुशोभनम् ॥१॥
पुरं विलिख्य विधिजे तीरे तस्य महोदधेः । मध्ये तत्र लिखेत्पद्ममष्टपत्रं सकर्णिकम् ॥२॥

एवं मण्डलमालिख्य पूजयेत्तत्र मोहिनि । अष्टाक्षरविधानेन नारायणमजं विभुम् ॥३॥
अथ ते सम्प्रवक्ष्यामि कायशोधनमुत्तमम् । क्षकारं हृदये चिन्त्यं रक्तं रेफसमन्वितम् ॥४॥
ज्वलन्तं त्रिशिखं चैव दहन्तं पापसञ्चयम् । चन्द्रमण्डलमध्यस्थमेकारं मूर्ध्नि चिन्तयेत् ॥५॥
शुक्लवर्णं प्रवर्षन्तममृतं प्लावयन्महीम् । एवं निर्द्धूतपापस्तु दिव्यदेहस्ततो भवेत् ॥६॥
अष्टाक्षरं ततो मन्त्रं न्यसेद्देहात्मनोर्बुधः । वामपादं समारभ्य क्रमशश्चैव विन्यसेत् ॥७॥
पञ्चाङ्गं वैष्णवं चैव चतुर्व्यूहं तथैव च । करशुद्धिं प्रकुर्वीत मूलमन्त्रेण साधकः ॥८॥
एकैकं चैव वर्णं तु अङ्गुलीषु पृथक् पृथक् । ॐकारं पृथिवी शुक्लं वामपादे तु विन्यसेत् ॥९॥
नकारस्तु भुवः श्यामो दक्षिणे तु व्यवस्थितः । मोकारं कालमेवाहुर्वामकट्यां निधापयेत् ॥१०॥
नाकारं पूर्वबीजं तु दक्षिणस्यां व्यवस्थितम् । राकारस्तेज इत्याहुर्नाभिदेशे व्यवस्थितः ॥११॥
वायव्योऽयं यकारस्तु वामस्कन्धे समाश्रितः । णाकारः सर्वदा ज्ञेयो दक्षिणांसे व्यवस्थितः ॥१२॥
यकारोऽयं शिरस्थश्च यत्र लोका व्यवस्थिताः । ॐकारं हृदये न्यस्य विकारं वा शिरस्यथ ॥१३॥
ष्णकारं वै शिखायां तु वेकारं कवचे न्यसेत् । नकारं नेत्रयोस्तु स्यान्मकारं चास्त्रमीरितम् ॥१४॥
ललाटे वासुदेवस्तु शुक्लवर्णः समास्थितः । रक्तः सङ्कर्ष णश्चैव मुखे वह्न्यर्कसन्निभः ॥१५॥
प्रद्युम्नो हृदये पीतोऽनिरुद्धो मेहने स्थितः । सर्वाङ्गे सर्वशक्तिश्च चतुर्व्यूहार्चितो हरिः ॥१६॥
ममाग्रेऽवस्थितो विष्णुः पृष्ठतश्चापि केशवः । गोविन्दो दक्षिणे पार्श्वे वामे तु मधुसूदनः ॥१७॥
उपरिष्टात्तु वैकुण्ठो वाराहः पृथिवीतले । अवान्तरदिशो यास्तु तासु सर्वासु माधवः ॥१८॥
गच्छतस्तिष्ठतो वापि जाग्रतः स्वपतोऽपि वा । नरसिंहकृता गुप्तिर्वासुदेवमयो ह्यहम् ॥१९॥
एवं विष्णुमयो भूत्वा ततः कर्म समारभेत् । यथा देहे तथा देवे सर्वतत्वानि योजयेत् ॥२०॥
फकारान्तं समुद्दिष्टं सर्वविघ्नहरं शुभम् । तत्रार्कचन्द्रवह्नीनां मण्डलानि विचिन्तयेत् ॥२१॥
पद्ममध्ये न्यसेद्विष्णुं भुवनस्यान्तरस्य तु । ततो विचिन्त्य हृदये प्रणवं ज्योतिरुत्तमम् ॥२२॥
कर्णिकायां समासीनं ज्योतीरूपं सनातनम् । अष्टाक्षरं ततो मन्त्रं न्यसेच्चैव यथाक्रमम् ॥२३॥
तेन व्यस्तसमस्तेन पूजनं परमं स्मृतम् । द्वादशाक्षरमन्त्रेण यजेद्देवं सनातनम् ॥२४॥
ततोऽवधार्य हृदये कर्णिकायां बहिर्न्यसेत् । चतुर्भुजं महासत्वं सूर्यकोटिसमप्रभम् ॥२५॥
चिन्तयित्वा महायोगं ततश्चावाहयेत्क्रमात् । मीनरूपावहश्चैव नरसिंहश्च वामनः ॥२६॥
आयान्तु देवा वरदा मम नारायणाग्रतः । सुमेरुः पादपीठं ते पद्मकल्पितमासनम् ॥२७॥
सर्वतत्वहितार्थाय तिष्ठ त्वं मधुसूदन । पाद्यं ते पादयोर्देव पद्मनाभ सनातन ॥२८॥
विष्णो कमलपत्राक्ष गृहाण मधुसूदन । मधुपर्कं महादेव ब्रह्माद्यैः कल्पितं मया ॥२९॥
निवेदितं च भक्त्यार्घं गृहाण पुरुषोत्तम । मन्दाकिन्यास्ततो वारि सर्वपापहरं शिवम् ॥३०॥
गृहाणाचमनीयं त्वं मया भक्त्या निवेदितम् । त्वमापः पृथिवी चैव ज्योतिस्त्वं वायुरेव च ॥३१॥
लोकसन्धृतिमात्रेण वारिणा स्नापयाम्यहम् । देवतन्तुसमायुक्ते यज्ञवर्णसमन्विते ॥३२॥
स्वर्णवर्णप्रभे देव वाससी प्रतिगृह्यताम् । शरीरं च न जानामि चेष्टां च तव केशव ॥३३॥
मया निवेदितं गन्धं प्रतिगृह्य विलिप्यताम् । ऋग्यजुःसाममन्त्रेण त्रिवृतं पद्मयोनिना ॥३४॥
सावित्रीग्रन्थिसंयुक्तमुपवीतं तवार्प्यते । दिव्यरत्नसमायुक्ता वह्निभानुसमप्रभाः ॥३५॥
गात्राणि शोभयिष्यन्ति अलङ्कारास्तु माधव । सूर्याचन्द्रसोमज्योतिर्विद्युदग्न्योस्तथैव च ॥३६॥
त्वमेव ज्योतिषां देव दीपोऽयं प्रतिगृह्यताम् । वनस्पतिरसो दिव्यो गन्धाढ्यः सुरभिश्च ते ॥३७॥
मया निवेदितो भक्त्या धूपोऽयं प्रतिगृह्यताम् । अन्नं चतुर्विधं स्वादु रसैः षड्भिः समन्वितम् ॥३८॥
मया निवेदितं भक्त्या नैवेद्यं तव केशव । पूर्वे दले वासुदेवं याम्ये सङ्कर्ष णं न्यसेत् ॥३९॥
प्रद्युम्नं पश्चिमे कुर्यादनिरुद्धं तथोत्तरे । वाराहं च तथाग्नेये नरसिंहं च नैर्ऋते ॥४०॥
वायव्यां माधवं चैव तथैशाने त्रिविक्रमम् । तथाष्टाक्षरदेवस्य गरुडं परितो न्यसेत् ॥४१॥
वामपार्श्वे तथा चक्रं शङ्खं दक्षिणतो न्यसेत् । तथा महागदां चैव न्यसेद्देवस्य दक्षिणे ॥४२॥

ततः शार्ङ्गधनुर्विद्वान्न्यसेद्देवस्य वामतः । दक्षिणे चेषुधी दिव्ये खड्गं वामे च विन्यसेत् ॥४३॥
श्रियं दक्षिणतः स्थाप्य पुष्टिमुत्तरतो न्यसेत् । वनमालां च पुरतस्ततः श्रीवत्सकौस्तुभौ ॥४४॥
विन्यसेद्धृदयादीनि पूर्वादिषु चतुर्ष्वपि । ततोऽस्त्रं देवदेवस्य को णे चैव तु विन्यसेत् ॥४५॥
इन्द्रमग्निं यमं चैव निर्ऋतिं वरुणं तथा । वायुं धनदमीशानमनन्तं ब्रह्मणा सह ॥४६॥
पूजयेत्तान्स्वकैर्मन्त्रैरधश्चोर्ध्वं तथैव च । एवं सम्पूज्य देवेशं मण्डलस्थं जनार्दनम् ॥४७॥
लभेदभिमतान्कामान्नरो नास्त्यत्र संशयः । अनेनैव विधानेन मण्डलस्थं जनार्दनम् ॥४८॥
पूजितं यस्तु पश्येत्स प्रविशेद्विष्णुमव्ययम् । सकृदप्यर्चितो येन विधिनानेन केशवः ॥४९॥
जन्ममृत्युजरास्तीर्त्वा विष्णोः पदमवाप्नुयात् । यः स्मरेत्सततं भक्त्या नारायणमतन्द्रि तः ॥५०॥
अन्वहं तस्य वासाय श्वेतद्वीपः प्रकीर्तितः । ॐकारादिसमायु क्तं नमस्कारं तदीयकम् ॥५१॥
सनाम सर्वतत्त्वानां मन्त्र इत्यभिधीयते । अनेनैव विधानेन गन्धपुष्पं निवेदयेत् ॥५२॥
एकैकस्य प्रकुर्वीत यथोद्दिष्टं क्रमेण तु । मुद्रास्ततो निबध्नीयाद्यथोक्तिक्रमवेदितम् ॥५३॥
जपं चैव प्रकुर्वीत मूलमन्त्रेण तत्ववित् । अष्टाविंशतिमष्टौ वा शतमष्टोत्तरं तथा ॥५४॥
काम्येषु च यथोक्तं स्याद्यथाशक्ति समाहितः । पद्मं शङ्खं च श्रीवत्सं गदां गरुडमेव च ॥५५॥
चक्रं खड्गं च शार्ङ्गं च अष्टौ मु द्राः प्रकीर्तिताः । गच्छ गच्छ परं स्थानं पुराणपुरुषोत्तम ॥५६॥
यन्न ब्रह्मादयो देवा विन्दन्ति परमं पदम् । अर्चनं ये न जानन्ति हरेर्मन्त्रैर्यथोदितम् ॥५७॥
ते त्वत्र मूलमन्त्रेण पूजयन्त्यच्युतं शुभे ॥५८॥

इति श्रीबृहन्नारदीयपुराणे उत्तरभागे वसुमोहिनीसंवादे पुरुषोत्तममाहात्म्ये सप्तपञ्चाशत्तमोऽध्यायः ॥५७॥
आदितः श्लोकानां समष्ट्यङ्काः-१६,७९२+५८=१६,८५०



## ॥ अथाष्टपञ्चाशत्तमोऽध्यायः ॥

वसुरुवाच ॥

एवं सम्पूज्य विधिवद्भक्त्या तं पुरुषोत्तमम् । प्र णम्य शिरसा पश्चात्सागरं च प्रसादयेत् ॥१॥
प्रणस्त्वं सर्वभूतातां विश्वस्मिन्सरितां पते । तीर्थराज नमस्ते ऽस्तु त्राहि मामच्युतप्रिय ॥२॥
स्नात्वैवं सागरे सम्यक् तस्मिन् क्षेत्रवरे शुभे । तीरे चाभ्यर्च्य विधिवन्नारायणमनामयम् ॥३॥
रामं कृष्णं सुभद्रां च प्रणिपत्य च सागरम् । शतानामश्वमेधानां फलं प्र प्नोति मानवः ॥४॥
सर्वपापिविनिर्मुक्तः सर्वदुःखविवर्जितः । वृन्दारकहरिः श्रीमाने रूपयौवनगर्वितः ॥५॥
विमानेनार्कवर्णेन दिव्यगन्धर्वनादिना । कुलैकविंशतिं धृत्वा विष्णुलोकं च गच्छति ॥६॥
भुक्त्वा तत्र वरान्भोगाक्रीडित्वा च सुरैस्सह । च्युतस्तस्मादिहायातो ब्राह्मणो ब्रह्मवित्तमः ॥७॥
यशस्वी मतिमाञ्छ्रीमान्सत्यवादी जितेन्द्रियः । वेदशास्त्रार्थविद्विप्रो भवेत्पश्चात्तु वैष्णवः ॥८॥
योगं च वैष्णवं प्राप्य ततो मोक्षमवाप्नुयात् । ग्रहोपरागे सङ्क्रान्त्यामयने विषुवे तथा ॥९॥
युगादिषु च मन्वादौ व्यतीपाते दिनक्षये । आषाढ्यां चैव कार्तिक्यां माघ्यां वान्यशुभे तिथौ ॥१०॥
ये त्वत्र दानं विप्रेभ्यः प्रयच्छन्ति सुमेधसः । फलं सहस्रगुणतमन्यतीर्थाल्लभन्ति ते ॥११॥
पितृणां ये प्रयच्छन्ति पिण्डं तत्र विधानतः । अक्षयां पितरस्तेषां तृप्तिं सम्प्राप्नुवन्ति वै ॥१२॥
एवं स्नानफलं सम्यक् सागरस्य मयेरितम् । दानस्य च फलं देवि पिण्डदानस्य चैव हि ॥१३॥
धर्मार्थमोक्षफलदमायुः कीर्तियशस्करम् । भुक्तिमुक्तिप्रदं नृणां धन्यं दुःस्वप्ननाशनम् ॥१४॥
सर्वपापाहरं पुण्यं सर्वकामफलप्रदम् । नास्तिकाय न वक्तव्यं शठाय कृपणाय च ॥१५॥
तावद्गर्ज्जन्ति तीर्थानि माहात्म्यैः स्वैः पृथक् पृथक् । यावन्न तीर्थराजस्य माहात्म्यं वर्ण्यते द्विजैः ॥१६॥
पुष्करादीनि तीर्थानि प्रयच्छन्ति स्वकं फलम् । तीर्थराजः समुद्रस्तु सर्वतीर्थफलप्रदः ॥१७॥
भूतले यानि तीर्थानि सरितश्च सरांसि च । विशन्ति सागरे तानि तेन वै श्रेष्ठतां गतः ॥१८॥

राजा समस्ततीर्थानां सागरः सरितां पतिः । तस्मात्समस्ततीर्थेभ्यः श्रेष्ठोऽसौ सर्वकामदः ॥१९॥
तमो नाशं यथाभ्येति भास्करेऽभ्युदिते सति । कोटयो नवनवत्यस्तु यत्र तीर्थानि सन्ति वै ॥२०॥
तस्मात्स्नानं च दानं च होमं जप्यं सुरार्चनम् । यत्किञ्चित्क्रियते तत्र तदक्षयमितीरितम् ॥२१॥
मोहिन्युवाच ॥
सर्वेषु तु समुद्रेषु क्षारोऽयं सरितां पतिः । कथं जातो गुरो ब्रूहि सर्वज्ञोऽसि यतो द्विज ॥२२॥
वसुरुवाच ॥
श्रृणु वक्ष्यामि सुभगे क्षारत्वं चास्य वारिधेः । यथा प्राप्तः पुरासीच्च मात्रास्य जगतामपि ॥२३॥
पुरा सृष्टिक्रमे जाताः समुद्राः सप्त मोहिनि । राधिका गर्भसम्भूता दिव्यदेहाः पृथग्विधाः ॥२४॥
एकदा राधिकानाथः कान्तया सह सङ्गतः । आस्ते वृन्दावने साक्षाद्गोपगोपीगवांपतिः ॥२५॥
रासमण्डलमध्ये तु सुदीप्ते मणिमण्डपे । सुस्निग्धया समायुक्तः श्रृङ्गारे कान्तया तया ॥२६॥
ते सप्त सागरा बालाः स्तन्यपानकृतक्षणाः । ततस्ते सर्वतो दृष्ट्वा मातरं तां जगत्प्रसूम् ॥२७॥
क्षुधार्ताश्च रुदन्तस्तु आसेदुर्मणिमण्डपम् । तत्र जग्मुस्तु ते सर्वे स्तन्यपान कृतेक्षणाः ॥२८॥
सर्वे निवारिताश्चापि द्वारस्थैर्वल्लवीगणैः । विविशुश्च भृशं क्रुद्धा बालकास्ते स्तनार्थिनः ॥२९॥
उपेक्षिता गोपिकाभिर्मातुरुत्सङ्गवर्तिनः । ततस्तु प्ररुदन्तो वै ते गत्वा मणिमण्डपम् ॥३०॥
उच्चैः प्रचुक्रुशुर्देवि मातः क्वासीतिवादिनः । यदा नाह्वयते माता बालकांस्तान्स्तनार्थिनः ॥३१॥
तदा कनिष्ठः सर्वेषां विवेशायं रतिस्थलम् । तं दृष्ट्वा स्वसुतं राधा मुग्धं श्रृङ्गारभङ्गदम् ॥३२॥
शशाप क्षुभिता भद्रे भूर्लोकं यात मा चिरम् । यतः श्रृङ्गारभङ्गं तु मम कर्तुं समुद्यताः ॥३३॥
ततो यूयं भुवं गत्वा स्थास्यथैकाकिनः सुताः । तच्छ्रुत्वा वचनं मातुर्जगद्धात्र्या विरञ्चिजे ॥३४॥
अत्युच्चै रुरुदुः सर्वे वियोगभयकातराः । ततः प्रसन्नो भगवाञ्छ्रीकृष्णः प्र णतार्तिहा ॥३५॥
मा भैष्ट पुत्रास्तिष्ठामि समीपे भवतामहम् । द्रवरूपा भवन्तस्तु पृथग्रूपचराः सदा ॥३६॥
वर्तध्वं क्षारतां यातु कनिष्ठोऽभ्यन्तरे स्थितः । एवमुक्त्वा जगन्नाथो बालकान्विससर्ज ह ॥३७॥
तेषां तु सान्त्वनार्थाय समीपस्थः सदाभवत् । यः प्रविष्टो रतिगृहं स क्षारोदो बभूव ह ॥
अन्ये तु द्रवरूपा वै क्षीरोदाद्याः पृथक् स्थिताः ॥३८॥
मोहिन्युवाच ॥
का राधा भवता प्रोक्ता गुरो लोकप्रसूः सती । तस्यास्तत्वं समाख्याहि श्रोतुं कौतूहलं मम ॥३९॥
पुराणेषु रहस्यं तु राधामाधववर्णनम् । यतः सर्वं भवान्वेत्ति याथातथ्येन सुव्रत ॥४०॥
वसिष्ठ उवाच ॥
तच्छ्रुत्वा मोहिनीवाक्यं भूपते स वसुर्महान् । अतीव भक्तो गोविन्दे निमग्नहृदयोऽभवत् ॥४१॥
पुलकाङ्कितसर्वाङ्गः प्रहृष्टहृदयो मुदा । उवाच मोहमापन्नो मो हिनीं द्विजसत्तमः ॥४२॥
वसुरुवाच ॥
श्रृणु देवि प्रवक्ष्यामि रहस्यातिरहस्यकम् । सुगोप्यं कृष्णचरितं ब्रह्मैकत्वविधायकम् ॥४३॥
प्रकृतेः पुरुषस्यापि नियन्तारं विधेर्विधिम् । संहर्तारं च संहर्तुर्भगवन्तं नतोऽस्म्यहम् ॥४४॥
देवि सर्वेऽवतारास्तु ब्रह्मणः कृष्णरूपिणः । अवतारी स्वयं कृष्णः सगु णो निर्गुणः स्वयम् ॥४५॥
स एव रामः कृष्णश्च वस्तुतो गु णतः पृथक् । सर्वे प्राकृतिका लोका गोलोको निर्गुणः स्वयम् ॥४६॥
गावस्तेजोंऽशवो भद्रे वेदविद्भिर्निरूपिताः । ब्रह्मविष्णुशिवाद्यास्तु प्राकृता गुणनिर्मिताः ॥४७॥
तत्तेजः सर्वदा देवि निर्गुणं गुणकृन्मतम् । गुणास्तदंशवो भद्रे सर्वे व्याकृतरूपिणः ॥४८॥
व्याकृतोत्पादका ज्ञेया रजः सत्त्वतमोभिधाः । अव्याकृतस्य पुंसो हि गुणा विज्ञापकाः शुभे ॥४९॥
देहभूताः स्मृतास्तस्य तच्छक्तिः प्रकृतिर्मता । प्रधानप्रकृतिं प्राहुः कार्यकारणरूपिणीम् ॥५०॥
साक्षिणं पुरुषं प्राहुर्निर्गुणं तु सनातनम् । पुरुषो वीर्यमाधत्त प्रकृत्यां च ततो गुणाः ॥५१॥
सत्त्वाद्या ह्यभवंस्तेभ्यो महत्तत्वं समुद्गतम् । पुरुषस्येच्छया तत्तु व्याकृतं समभूदहम् ॥५२॥

तत्त्रिधा समभूद्भद्रे द्रव्यज्ञानक्रियात्मकम् । वैकारिकस्तैजसश्च तामसश्चेत्यहं त्रिधा ॥५३॥
वैकारिकान्मनो जज्ञे देवा वैकारिका दश ॥५४॥
दिग्वातार्कप्रचेतोश्विब्रह्मेन्द्रोपेन्द्रमित्रकाः । तैजसानीन्द्रियाण्याहुर्ज्ञानकर्ममयानि च ॥५५॥
श्रोत्रत्वग्घ्राणदृग्जिह्वाविज्ञानेन्द्रियरूपकाः । कर्मेन्द्रियाणि सुभगे वाग्वोर्मेढ्राङ्घ्रिपायवः ॥५६॥
शब्दस्तु तामसाज्जज्ञे तस्मादाकाश एव च । आकाशादभवत्स्पर्शस्तस्माद्वायुरभूत्सति ॥५७॥
वायोरभूत्ततो रूपं तस्मात्तेजो व्यजायत । तेजसस्तु रसस्तस्मादापः समभवन्सति ॥५८॥
अद्भ्यो गन्धः समुत्पन्नो गन्धात्क्षितिरजायत । चराचरस्य निष्ठा तु भूमावेव प्रदृश्यते ॥५९॥
आकाशादिषु तत्वेषु एकद्वित्रिचतुर्गुणाः । भूमौ पञ्च गु णाः प्रोक्ता विशेषस्तु ततः क्षितेः ॥६०॥
कालमायांशलिङ्गेभ्य एतेभ्योऽण्डमचेतनम् । समभू चेतनं जातं दरेण विशता सति ॥६१॥
तस्मादण्डाद्विराड् जज्ञे सोऽशयिष्ट जलान्तरे । मुखादीन्यस्य जातानि विराजोऽवयवा अपि ॥६२॥
वचनादेश्च सिद्ध्यर्थं सलिलस्थस्य भामिनि । तस्य नाभ्यामभूत्पद्मं सहस्रार्कोरुदीधितिः ॥६३॥
तस्मिन्स्वयम्भूः समभूल्लोकानां प्रपितामहः । तेन तप्त्वा तपस्तीव्रं पुंसोऽनु ज्ञामवाप्य च ॥६४॥
लोकाश्च लोकपालाश्च कल्पिता ब्रह्मणा सति । कटद्यादिभिरधः सप्त सप्तो र्द्ध्वं जघनादिभिः ॥६५॥
चतुर्दशभिरेभिस्तु लोकैर्ब्रह्माण्डमीरितम् । तस्मिन्ससर्ज भूतानि स्थावराणि चराणि च ॥६६॥
ब्रह्मणो मनसो जाताश्चत्वारः सनकादयः । देहाद्भावादयो देवि यैरिदं वर्द्धितं जगत् ॥६७॥

इति श्रीबृहन्नारदीयपुराणोत्तरभागे मोहिनीवसुसंवादे पुरुषोत्तममाहात्म्ये ब्रह्माण्डोत्पत्तिवर्णनं नामाष्टपञ्चाशत्तमोऽध्यायः ॥५८॥
आदितः श्लोकानां समष्ट्यङ्काः-१६,८५०+६७=१६,९१७



## ॥ अथैकोनषष्टितमोऽध्यायः ॥

वसुरुवाच ॥
योऽसौ निरञ्जनो देवश्चित्स्वरूपी जनार्दनः । ज्योतीरूपो महाभागे कृष्णस्तल्लक्षणं श्रृ णु ॥१॥
गोलोके स विभुर्नित्यं ज्योतिरभ्यन्तरे स्थितः । एक एव परं ब्रह्म दृश्यादृष्यस्वरूपधृक् ॥२॥
तस्मिँल्लोके तु गावो हि गोपा गोप्यश्च मोहिनि । वृन्दावनं पूर्वतश्च शतश्रृङ्गस्तथा सरित् ॥३॥
विरजा नाम वृक्षाश्च पक्षिणश्च पृथग्विधाः । यावत्कालं तु प्रकृतिर्जागर्ति विधिनन्दिनि ॥४॥
तावत्कालं तु गोलोके दृश्य एव विभुः स्थितः । लये सुप्ता गवाद्यास्तु न जानन्ति विभुं परम् ॥५॥
ज्योतिःसमूहान्तरतः कमनीयवपुर्द्ध रः । किशोरो जलदश्यामः पीतकौशाम्बरावृतः ॥६॥
द्विभुजो मुरलीहस्तः किरूटादिविभूषितः । आस्ते कैवल्यनाथस्तु राधावक्षस्थलोज्ज्वलः ॥७॥
प्राणाधिकप्रियतमा सा राधाराधितो यया । सुवर्णवर्णा देवी सा चिद्रूपा प्रकृतेः परा ॥८॥
तयोर्देहस्थयोर्नास्ति भेदो नित्यस्वरूपयोः । धावल्यदुग्धयोर्यद्वत्पृथिवीगन्धयोर्यथा ॥९॥
तत्कारणं कारणानां निर्द्देष्टुं नैव शक्यते । वेदानिर्वचनीयं यत्तद्वक्तुं नैव शक्यते ॥१०॥
ज्योतिरन्तरतः प्रोक्तं यद्रूपं श्यामसुन्दरम् । शिवेन दृष्टं तद्रूपं कदाचिद्ध्यानगोचरम् ॥११॥
ततः प्रभृति जानन्ति गोलोकाख्यानमीप्सितम् । नारदाद्या विधिसुते सनकाद्याश्च योगिनः ॥१२॥
श्रुतं ध्यायन्ति तं सर्वे न तैर्दृष्टं कदाचन । साक्षाद्द्रष्टुं तु तपते शिवोऽद्यापि सनातनः ॥१३॥
नैव पश्यति तद्रूपं ध्यायति ध्यानगोचरम् । कदाचित्क्रीडतोर्देवि राधामाधवयोर्वपुः ॥१४॥
द्विधाभूतमभूत्तत्र वामाङ्गं तु चतुर्भुजम् । समानरूपावयवं समानाम्बरभूषणम् ॥१५॥
तद्वद्राधास्वरूपं च द्विधारूपमभूत्सति । ताभ्यां दृष्टं तत्स्वरूपं साक्षात्तावपि तत्समौ ॥१६॥
चतुर्भुजं तु यद्रूपं लक्ष्मीकान्तं मनोहरम् । तद्दृष्टं तु शिवाद्यैश्च भक्तवृन्दैरनेकशः ॥१७॥
सकृत्तु ब्रह्मणा दृष्टं देवि रूपं चतुर्भुजम् । सृष्टिकार्यप्रमुग्धेन दर्शितं कृपया स्वयम् ॥१८॥
लक्ष्म्या सनात्कुमाराय वर्णितं विधिनन्दिनि । विष्वक्सेनाय तूद्दिष्टं स्वरूपं तत्त्वमूर्तये ॥१९॥

नारायणेन विधिजे ततो ध्यायन्ति सर्वशः । धर्मपुत्रेण देवेशि नारदाय समीरितम् ॥२०॥
गोलोकवर्णनं सर्वं राधाकृष्णमयं तथा । या तु राधा विधिसुते देवी देववरार्चिता ॥२१॥
सा स्वयं शिवरूपाभूत्कौतुकेन वरानने । तदृष्ट्वा सहसाश्चर्यं कृष्णो योगेश्वरेश्वरः ॥२२॥
मूलप्रकृतिरूपं तु दध्रे तत्समयोचितम् । विपरीतं वपुर्धृत्वा वामदेवो मुदान्वितः ॥२३॥
ध्यायेदहर्निशं देवं दुर्गारूपधरं हरिम् । या राधा सैव लक्ष्मीस्तु सावित्री च सरस्वती ॥२४॥
गङ्गा च ब्रह्मतनये नैव भेदोऽस्ति वस्तुतः । पञ्चधा सा स्थिता विद्याकामधेनुस्वरूपिणी ॥२५॥
यः कृष्णो राधिकानाथः स लक्ष्मीशः प्रकीर्तितः । स एव ब्रह्मरूपश्च धर्मो नारायणस्तथा ॥२६॥
एवं तु पञ्चधा रूपमास्थितो भगवानजः । कार्यकारणरूपोऽसौ ध्यायन्ति जगतीतले ॥२७॥
तेन वै प्रेमसम्बद्धो विषयी यः शिवः स तु । राधेशं राधिकारूपं स्वयं सच्चित्सुखात्मकम् ॥२८॥
देवतेजः समुद्भूता मूलप्रकृतिरीश्वरी । कृष्णरूपा महाभागे दैत्यसंहारकारिणी ॥२९॥
सती दक्षसुता भूत्वा विषयेशं शिवं श्रिता । भर्तुर्विनिन्दनं श्रुत्वा सती त्यक्त्वा कलेवरम् ॥३०॥
जज्ञे हिमवतः क्षेत्रे मेनायां पुनरेव च । ततस्तप्त्वा तपो भद्रे शिवं प्राप शिवप्रदा ॥३१॥
वस्तुतः कृष्णराधासौ शिवमोहनतत्परा । जगदम्बास्वरूपा च यतो माया स्वयं विभुः ॥३२॥
अत एव ब्रह्मसुते स्कन्दो गणपतिस्तथा । स्वयं कृष्णो गणपतिः स्वयं स्कन्दः शिवोऽभवत् ॥३३॥
शिवमेवं वदन्त्येके राधारूपं समाश्रितम् । कृष्णवक्षःस्थलस्थानं तयोर्भेदो न लक्ष्यते ॥३४॥
कृष्णो वा मूलप्रकृतिः शिवो वा राधिका स्वयम् । एवं वा मिथुनं वापि न केनापीति निश्चितम् ॥३५॥
अनिर्देश्यं तु यद्वस्तु तन्निर्देष्टुं न च क्षमम् । उपलक्षणमेतद्धि यन्निदेशनमैश्वरम् ॥३६॥
शास्त्रं वेदाश्च सुभगे वर्णयन्ति यदीश्वरम् । तत्सर्वं प्राकृतं विद्धिनिर्देष्टुं शक्यमेव च ॥३७॥
अनिर्देश्यं तु यद्देवि तन्नेतीति निषिध्यते । निषेधशेषः स विभुः कीर्तितः शरणागतैः ॥३८॥
शास्त्रं नियामकं भद्रे सर्वेषां कर्मणां भवेत् । कर्मी तु जीवः कथित ईश्वरांशो विभुः स्वयम् ॥३९॥
प्रकृतेस्तु परो नित्यो मायया मोहितः शुभे । यस्तु साक्षी स्वयं पूर्णः सहानुशयिता स्थितः ॥४०॥
न वेत्ति तं चानुशयी वेदानुशयिनं स तु । शङ्खचक्रगदापद्मैरलङ्कृतभुजद्वयाः ॥४१॥
प्रपन्नास्ते तु विज्ञेयाः द्विविधा विधिनन्दनि । आर्तदृप्तविभेदेन तत्रार्ता असहा मताः ॥४२॥
दृप्ता जन्मान्तरसहा निर्भयाः सदसज्जनाः । ये प्रपन्ना महालक्ष्म्यां सखिभावं समाश्रिताः ॥४३॥
तेषां मन्त्रं प्रवक्ष्यामि प्रयान्ति विधिबोधितम् । गोपीजनपदस्यान्ते वल्लभेति समुच्चरेत् ॥४४॥
चरणञ्च्छरणं पश्चात्प्रपद्ये पदमीरयेत् । षोडशार्णो मन्त्रराजः साक्षाल्लक्ष्म्या प्रकाशितः ॥४५॥
पूर्वं सनत्कुमाराय शम्भवे तदनन्तरम् । सखिभावं समाश्रित्य गोपिकावृन्दमध्यगम् ॥४६॥
आत्मानं चिन्तयेद्धृदे राधामाधवसंज्ञकम् । गुरुष्वीश्वरभावेन वर्त्तेत प्र णतः सदा ॥४७॥
वैष्णवेषु च सत्कृत्य तथा समतयान्यतः । दिवानिशं चिन्तनं च स्वामिनोः प्रेमबन्धनात् ॥
कुर्यात्पर्वस्वपि सदा यात्रापर्वमहोत्सवान् ॥४८॥

इति श्रीबृहन्नारदीयपुराणोत्तरभागे वसुमोहिनीसंवादे पुरुषोत्तममाहात्म्यं नामैकोनषष्टितमोऽध्यायः ॥५९॥

आदितः श्लोकानां समष्ट्यङ्काः-१६,९१७+४८=१६,९६५



## ॥ अथ षष्टितमोऽध्यायः ॥

वसुरुवाच ॥

ततो गच्छेद्विधिसुते तीर्थं यज्ञाङ्गसम्भवम् । इन्द्र द्युम्नसरो नाम यत्रास्ते पावनं शुभम् ॥१॥
तत्र गत्वा शुचिर्विद्वानाचम्य मनसा हरिम् । ध्यात्वोपस्थाय च विभुं मन्त्रमेनमुदीरयेत् ॥२॥
अश्वमेधाङ्गसम्भूत तीर्थं सर्वाघनाशन । स्नानं त्वयि करोम्यद्य पापं हर नमोऽस्तु ते ॥३॥

एवमुच्चार्य विधिवत्स्नात्वा देवान् ऋषीन्पितॄन् । तोलोदकेन वान्यांश्च सन्तर्प्याचम्य वाग्यतः ॥४॥
दत्वा पितॄणां पिण्डांश्च सम्पूज्य पुरुषोत्तमम् । दशाश्वमेधिकं सम्यक्फलं प्राप्नोति मानवः ॥५॥
सप्तावरान्सप्त परान्वंशानुद्धृत्य देववत् । कामगेन विमानेन विष्णुलोकं स गच्छति ॥६॥
भुक्त्वा तत्र वरान्भोगान्यावच्चन्द्रार्कतारकम् । च्युतस्तस्मादिहायातो मोक्षं च लभते ध्रुवम् ॥७॥
एवं कृत्वा पञ्चतीर्थीमेकादश्यामुपोषितः । ज्येष्ठशुक्ले पञ्चदश्यां यः पश्येत्पुरुषोत्तमम् ॥८॥
स पूर्वोक्तफलं प्राप्य क्रीडित्वा चाच्युतालये । प्रयाति परमं स्थानं यस्मान्नावर्तते पुनः ॥९॥
पृथिव्यां यानि तीर्थानि सरितश्च सरांसि च । पुष्करिण्यस्तडागानि वाप्यः कूपास्तथा ह्रदाः ॥१०॥
नाना नद्यः समुद्राश्च सप्ताहं पुरुषोत्तमे । ज्येष्ठशुक्लदशम्यादि प्रत्यक्षं यान्ति सर्वदा ॥११॥
स्नानदानादिकं यस्माद्देवताप्रेक्षणे सति । नृभिर्यत्क्रियते तत्र तत्सर्वं चाक्षयं भवेत् ॥१२॥
ज्येष्ठमासे तु दशमी शुक्लपक्षस्य मोहिनि । हरते दश पापानि तस्माद्दशहरा स्मृता ॥१३॥
यस्तस्यां हलिनं कृष्णं पश्येद्भद्रां च सुव्रतः । सर्वपापविनिर्मुक्तो विष्णुलोकं व्रजेन्नरः ॥१४॥
नरो दोलागतं दृष्ट्वा गोविन्दं पुरुषोत्तमम् । फाल्गुन्यां संयतो भूत्वा गोविन्दस्य पुरं व्रजेत् ॥१५॥
विषुवे दिवसे प्राप्ते पञ्चतीर्थविधानतः । दृष्ट्वा सङ्कर्ष णं कृष्णां सुभद्रां च सुलोचने ॥१६॥
नरः समस्तयज्ञानां फलं प्राप्नोति दुर्लभम् । विमुक्तः सर्वपापेभ्यो विष्णुलोकं च गच्छति ॥१७॥
यः पश्यति तृतीयायां कृष्णं चन्दनरूषितम् । वैशाखस्य सिते पक्षे स यात्यच्युत मन्दिरम् ॥१८॥
यदा भवेन्महाज्यैष्ठी राशिनक्षत्रयोगतः । प्रयत्नेन तदा मर्त्यैर्गन्तव्यं पुरुषोत्तमम् ॥१९॥
कृष्णं दृष्ट्वा महाज्यैष्ठ्यां रामं भद्रां च मोहिनि । नरो द्वादशयात्राणां फलं प्राप्नोति चाधिकम् ॥२०॥
प्रयागे च कुरुक्षेत्रे नैमिषे पुष्करे गये । गङ्गाद्वारे च कुब्जाम्रगङ्गासागरसङ्गमे ॥२१॥
कोकामुखे शूकरे च मथुरायां मरुस्थले । शालग्रामे वायुतीर्थे मन्दरं सिन्धुसागरे ॥२२॥
पिण्डारके चित्रकूटे प्रभासे कनखले तथा । शङ्खो द्धारे द्वारकायां तथा बदरिकाश्रमे ॥२३॥
लोहकूटे चाश्वतीर्थे सर्वपापप्रमोचने । कर्दमाले कोटितीर्थे तथा चामरकण्टके ॥२४॥
लोलार्के जम्बुमार्गे च सोमतीर्थे पृथूदके । उत्पलावर्तके चैव पृथुतुङ्गे सकुब्जके ॥२५॥
एकाम्रके च केदारे काश्यां वा विरजे सति । कालञ्जरे च गोकर्णे श्रीशैले गन्धमादने ॥२६॥
महेन्द्रे मलये विन्ध्ये पारियात्रे हिमाह्वये । सह्ये च शुक्तिमति च गोमन्ते चार्बुदे तथा ॥२७॥
गङ्गायां च महाभागे यत्पुण्यं यामुनेषु च । सारस्वतेषु गोमत्यां ब्रह्मपुत्रेषु सप्तसु ॥२८॥
गोदावरी भीमरथी तुङ्गभद्रा च नर्मदा । तापी पयोष्णी कावेरी शिप्रा चर्मण्वती तथा ॥२९॥
वितस्ता चन्द्रभागा च शतद्रुर्बाहुदा तथा । ऋषिकुल्या मरुद्वृधा विपाशा च दृषद्वती ॥३०॥
सरयूर्नाकगङ्गा च गण्डकी च महानदी । कौशिकी करतोया च त्रिस्रोता मधुवाहिनी ॥३१॥
महानदी वैतरणी याश्चान्या नानुकीर्तिताः । तास्सर्वा न समाः प्रोक्ताः कृष्णसंदर्शनस्य च ॥३२॥
यत्फलं स्नानदानेन राहुग्रस्ते दिवाकरे । तत्फलं कृष्णमालोक्य महाज्यैष्ठ्यां लभेन्नरः ॥३३॥
तस्मात्सर्वप्रयत्नेन गन्तव्यं पुरुषोत्तमम् । महाज्यैष्ठ्यां विधिसुते सर्वकामफलेप्सुभिः ॥३४॥
दृष्ट्वा रामं महाज्यैष्ठ्यां कृष्णं चापि सुभद्र या । विष्णुलोकं नरोयाति समु द्धृत्य कुलं शतम् ॥३५॥
भुक्त्वा तत्र वरान्भोगान्यावदाभूतसम्पलवम् । पुण्यक्षयादिहागत्य चतुर्वेदी द्विजो भवेत् ॥३६॥
स्वधर्मरितः शान्तः कृष्णभक्तो जितेन्द्रियः । वैष्णवं योगमास्थाय ततो मोक्षमवाप्नुयात् ॥३७॥
मासि ज्येष्ठे च सम्प्राप्ते नक्षत्रे चेन्द्र दैवते । पौर्णमास्यां तदा स्नानं प्रशस्तं सागराम्भसि ॥३८॥
सर्वतीर्थमयः कूपस्तदास्ते सजलः शुचिः । तथा भोगवती तत्र प्रत्यक्षा भवति ध्रुवम् ॥३९॥
तस्माज्ज्यैष्ठ्यां समुद्धृत्य हैमादिकलशैर्जलम् । कृष्णरामाभिषेकार्थं सुभद्रायाश्च मोहिनि ॥४०॥
कृत्वा सुशोभनं मञ्चं पताकाभिरलङ्कृतम् । सुदृढं सुखसञ्चारं वस्त्रैः पुष्पैरलङ्कृतम् ॥४१॥
विस्तीर्णं धूपितं धूपैः स्नानार्थं रामकृष्णयोः । पीतवस्त्रपरिच्छन्नं मुक्ताहारावलम्बितम् ॥४२॥
तत्र नानाविधैर्वाद्यैः कृष्णं नीलाम्बरं सति । मञ्चे संस्थाप्य भद्रां च जयमङ्गलनिःस्वनैः ॥४३॥

ब्राह्मणैः क्षत्त्रियैर्वैश्यैः शूद्रैश्चान्यैश्च मोहिनि । अनेकशतसाहस्रैर्वृतं स्त्रीपुरुषैस्तथा ॥४४॥
गृहस्थाः स्नातकाश्चैव यतयोब्रह्मचारिणः । स्नापयन्ति तदा कृष्णं मञ्चस्थं सहलायुधम् ॥४५॥
तथा समस्ततीर्थानि पूर्वोक्तानि च सुन्दरि । मोदकैः पुष्पमिश्रैश्च स्नापयन्ति पृथक् पृथक् ॥४६॥
पश्चात्पटहंसघोषैर्भेरीमुरजनिः स्वनैः । काहलैस्तालशब्दैश्च मृदङ्गैर्भर्झरैस्तथा ॥४७॥
अन्यैश्च विविधैर्वाद्यैर्घण्टास्वनविमिश्रितैः । स्त्रीणां मङ्गलशब्दैश्च स्तुतिशब्दैर्मनोरमैः ॥४८॥
जयशब्दैस्तथा स्तोत्रैर्वीणावेणुनिनादितैः । श्रूयते सुमहाञ्छब्दः सागरस्येव गर्जतः ॥४९॥
मुनीनां वेदघोषैश्च मन्त्रघोषैस्तथापरैः । नानास्तोत्ररवैः पु ण्यैः सामगानोपबृंहितैः ॥५०॥
श्यामावदातवेश्याभिः पीतरक्तांशुकैस्तथा । चामरै रत्नदण्डैश्च वीज्येते रामकेशवौ ॥५१॥
यक्षविद्याधरैः सिद्धैर्देवगन्धर्वचारणैः । आदित्या वसवो रुद्राः साध्या विश्वे मरुद्गणाः ॥५२॥
लोकपालास्तथान्ये च स्तुवन्ति पुरुषोत्तमम् । नमस्ते देवदेवेश पुराणपुरुषोत्तम ॥५३॥
सर्गस्थित्यन्तकृद्देव लोकनाथ जगत्पते । त्रैलोक्यशरणं देवं ब्रह्मण्यं मोक्षकारणम् ॥५४॥
तं नमस्यामहे भक्त्या सर्वकामफलप्रदम् । स्तुत्वैवं विबुधाः कृष्णं रामं चैव महाबलम् ॥५५॥
सुभद्रां चापि विधिजे तदाकाशे व्यवस्थिताः । गायन्ति देवगन्धर्वा नृत्यन्तयप्सरसस्तथा ॥५६॥
देवतूर्याणि वाद्यन्ते वाता वान्ति सुशीतलाः । पुष्पमिश्रं तदा मेघा वर्षन्त्याकाशगोचराः ॥५७॥
जयशब्दं च कुर्वन्ति मुनयः सिद्धचारणाः । शक्राद्या विबुधाः सर्वे ऋषयः पितरस्तथा ॥५८॥
प्रजानां पतयो नागा ये चान्ये स्वर्गवासिनः । ततो मङ्गलसम्भारैर्विधिमन्त्रपुरस्कृतम् ॥५९॥
आभिषेचनिकं द्रव्यं गृहीत्वा देवतागणाः । इन्द्र विष्णू महावीर्यौ सूर्याचन्द्रमसौ तथा ॥६०॥
धाता चैव विधाता च तथा चैवानिलानलौ । पूषा भगोऽर्यमा त्वष्टा विवस्वानंशुमांस्तथा ॥६१॥
रूद्राश्विसहितो धीमान्मित्रेण वरुणेन च । रुद्रैर्वसुभिरादित्यैर्वालखिल्यैर्मरीचिजैः ॥६२॥
भृगुभिश्चाङ्गिरोभिश्च सर्वविद्यासु निष्ठितैः । पितामहः पुलस्त्यश्च पुलहश्च महातपाः ॥६३॥
अङ्गिराः कश्यपोऽत्रिश्च मरीचिर्भृगुरेव च । क्रतुर्हरः प्रचेताश्च मनुर्दक्षस्तथैव च ॥६४॥
ऋतवश्च ग्रहाश्चैव ज्योतींषि च द्विजोत्तमाः । मूर्तिमत्यश्च सरितो देवाश्चैव सनातनाः ॥६५॥
सुभद्राश्च ह्रदाश्चैव तीर्थानि विविधानि च । पृथिवीद्यौर्विशश्चैव पादपाश्च द्विजोत्तमाः ॥६६॥
अदितिर्देवमाता च ह्रीः श्रीः स्वाहा सरस्वती । उमा शची सिनीवाली तथा चानुमतिः कुहूः ॥६७॥
राका च धिषणा चैव पत्न्यश्चान्या दिवौकसाम् । श्रेष्ठो गिरीणां हिमवान्नागराजश्च वामनः ॥
पारियात्रश्च विन्ध्यश्च मेरुश्चानेक श्रृङ्गवान् ॥६८॥
ऐरावतः सानुचरः कलाः काष्ठास्तथैव च । मासार्द्धमासा ऋतवस्तथा रात्र्यहनी समाः ॥६९॥
उच्चैःश्रवा हयश्रेष्ठो नागराजश्च वामनः । अरुणो गरुडश्चैव लताश्चौषधिभिः सह ॥७०॥
धर्मश्च भगवान्देवः समागच्छन्ति सर्वतः । कालो यमश्च मृत्युश्च यमस्यानुचराश्च ये ॥७१॥
बहुलत्वाच्च नोक्ता ये विविधा देवतागणाः । ते देवस्याभिषेकार्थं समायान्ति ततस्ततः ॥७२॥
दिव्यसम्भारसंयुक्तैः कलशैः काञ्चनैस्तथा । सारस्वतीभिः पुण्याभिर्दिव्यतोयाभिरेव च ॥७३॥
तोयेनाकाशगङ्गायाः कृष्णं रामे ण सङ्गतम् । सुपुष्पैः कुम्भसलिलैः स्नापयन्त्यम्बरे स्थिताः ॥७४॥
सञ्चरन्ति विमानानि देवानामम्बरे तथा । उच्चावचानि दिव्यानि कामगानि स्थिराणि च ॥७५॥
दिव्यरत्नविचित्राणि सेवितान्यप्सरोगणैः । गीतैर्वाद्यैः पताकाभिः शोभितानि समन्ततः ॥७६॥

इति श्रीबृहन्नारदीयपुराणोत्तरभागे वसुमोहिनीसंवादे पुरुषोत्तममाहात्म्येऽभिषेको नाम षष्टितमोऽध्यायः ॥६०॥

आदितः श्लोकानां समष्ट्यङ्काः-१६,९६५+७६=१७,०४१



## ॥ अथैकषष्टितमोऽध्यायः ॥

वसुरुवाच ॥
एवं तदा विधिसुते कृष्णं रामेण सङ्गतम् । सुभद्रां च महाभागाः संस्तुवन्ति मुदान्विताः ॥१॥
देवा ऊचुः ॥
जय जय लोकपाल जय पद्मनाभ भूधरण । जय जय चादिदेव बहुकारण ॥२॥
जय जय वासुदेव जय सच्चरण सत्करण । जय जय दिव्यमीन जयत्रिदशवर ॥३॥
जय जय जलधिशयन जय जय योगेश जय देवधर । जय जय विश्वमूर्ते जय चक्रधर ॥४॥
जय जय भूतनाथ जय श्रीनिवास जय जय योगिवर । जय जय सूर्यनेत्र जय देव वराह ॥५॥
जय जय कैटभारे जय जय वेदवर । जय जय कूर्मरूप जय यज्ञवर ॥६॥
जय जय कमलनाभ जय शैलधर । जय जय योगेश जय वेगधर ॥७॥
जय जय विश्वमूर्ते जय चक्रधर । जय जय भूतनाथ जय धरणीधर ॥८॥
जय जय शेषशायिञ्जय पीतवास । जय सोमकान्त जय योगवास जय जय ॥९॥
दहनचक्र जय धर्मवास जय जय । गुणनिधान जय श्रीनिवास जय जय ॥९॥
गरुडासन जय सुखनिवास जय जय । जय जय धर्मकान्त जय जय मतिनिवास ॥११॥
जय जय गहनगेहनिवास । जय जय योगिगम्य जय मखनिवास ॥१२॥
जय जय वेदवेद्य जय शान्तिकर । जय जय योगिचिन्त्य जय पुष्टिकर ॥१३॥
जय जय ज्ञानमूर्ते जय कमलाकर । जय जय भाववेद्य जय मुक्तिकर ॥१४॥
जय विमलदेह जय जय सत्त्वनिलय । जय जय गुणसमूह जय जय यज्ञकर ॥१५॥
जय जय गुणविहीन जय जय मोक्षकर । जय जय भूहिरण्य जय जय कान्तियुत ॥१६॥
जय लोकशरण जय जय लक्ष्मीपते । जय पङ्कजाक्ष जय जय सृष्टिकर ॥१७॥
जय योगयुत जयातसीकुसुमश्यामदेह । जय जय सुभद्र ाविष्टदेह जय लक्ष्मीपङ्कजभोगदेह ॥१८॥
जय जय भक्तिभावन लोकगेय । जय लोककान्त जय परमशान्त ॥१९॥
जय जय परमसार जयचक्रधर । जय भोगियुत जय नीलाम्बर ॥२०॥
जय साङ्ख्यनुत जय कलुषहर । जय कृष्ण जगन्नाथ जय सङ्कर्षणानुज ॥२१॥
जय जय पद्मपलाशाक्ष जय वाञ्छितफलप्रद । जय मालावृतोरस्क जय चक्रगदाधर ॥२२॥
जय पद्मालयाकान्त जय विष्णो नमोऽस्तु ते । एवं स्तुत्वा तदा देवाः शक्राद्या दृष्टमानसाः ॥२३॥
सिद्धचारणगन्धर्वा ये चान्ये स्वर्गवासिनः । दृष्ट्वा स्तुत्वा नमस्कृत्य तद्गतेनान्तरात्मना ॥२४॥
कृष्णं रामं सुभद्रां च यान्ति स्वं स्वं निवेशनम् । कपिलाशतदानेन यत्फलं पुष्करे स्मृतम् ॥२५॥
तत्फलं कृष्णमालोक्य मञ्चस्थं सहलायुधम् । कन्याशतप्रदानेन यत्फलं समुदाहृतम् ॥२६॥
तत्फलं कृष्णमालोक्य मञ्चस्थं लभते नरः । शतनिष्कसुवर्णेन भूमिदानेन यत्फलम् ॥२७॥
तत्फलं चान्नदानेन सर्वातिथ्येन यत्फलम् । वृषोत्सर्गेण विधिवद् ग्रीष्मे तोयप्रदानतः ॥२८॥
तिलधेनुप्रदानेन गजाश्वरथदानतः । चान्द्रायणेन चीर्णेन तथा मासोपवासतः ॥२९॥
यत्फलं सर्वतीर्थेषु व्रतैर्दानैश्च यत्फलम् । ससुभद्रौ रामकृष्णौ तल्लभेद्वीक्ष्य मञ्चगौ ॥३०॥
तस्मान्नरोऽथवा नारी पश्येत्तं पुरुषोत्तमम् । स्नानशेषेण कृष्णस्य तोयेन यदि मोहिनि ॥३१॥
वन्ध्या मृतप्रजा वापि दुर्भगा ग्रहपीडिताः । राक्षसाद्यैर्गृहीता वा तथा रोगैश्च संहताः ॥३२॥
सद्यस्ताः शुद्धिमायान्ति विधिना ह्यभिषेचिताः । प्र ाप्नुवन्तीप्सितान्कामान्यान्यान्वाञ्छन्ति सुप्रभे ॥३३॥
पुण्यानि यानि तोयानि सन्त्यन्यानि धरातले । तानि स्नातावशेषस्य कलां नार्हन्ति षो डशीम् ॥३४॥
तस्मात्स्नानावशेषेण जलेन जलशायिनः । अभ्युक्षेत्सर्वगात्राणि सर्वकामप्रदेन च ॥३५॥
स्नातं पश्यन्ति ये कृष्णं व्रजन्तं दक्षिणामुखम् । ब्रह्महत्यादिभिः पापैर्मुच्यन्ते ते न संशयः ॥३६॥
शास्त्रेषु यत्फलं प्रोक्तं त्रिः प्रदक्षिणया भुवः । दृष्ट्वा नरो लभेत्कृष्णं तत्फलं दक्षिणामुखम् ॥३७॥
तीर्थयात्राफलं यत्तु पृथिव्यां समुदाहृतम् । दृष्ट्वा यान्तं लभेत्कृष्णं तत्फलं दक्षिणामुखम् ॥३८॥

गङ्गाद्वारे च कुब्जाम्रे कुरुक्षेत्रे ऽर्कपर्वणि । पुष्करादिषु चान्येषु यत्फलं स्नानतः स्मृतम् ॥३९॥
तत्फलं दक्षिणास्यं तु कृष्णं यान्तं निरीक्ष्य च । अत किं बहुनोक्तेन यत्फलं पुण्यकर्मणः ॥४०॥
वेदशास्त्रपुराणेषु भारते संहितादिषु । तत्फलं वीक्ष्य दक्षास्यौ सुभद्रौ बलकेशवौ ॥४१॥
गुण्डिचामण्डपं यान्तं ये पश्यन्ति रथे स्थितम् । सभद्रं सबलं कृष्णं ते यान्ति भवनं हरेः ॥४२॥
गुण्डिचायानसमये फाल्गुन्यां विषुवे तथा । सकृद्यात्रां नरः कृत्वा विष्णुलोकं प्रगच्छति ॥४३॥
यावतीः कुरुते मर्त्यो यात्राः श्रीपुरुषोत्तमे । तावत्कल्पं विष्णुलोके वसेदिति विनिश्चयः ॥४४॥
यात्रा द्वादश सम्पूर्णा यदा स्युर्विधिनन्दिनि । तदा प्रतिष्ठां कुर्वीत विधिना पापनाशिनि ॥४५॥
ज्येष्ठमासि सिते पक्षे ह्येकादश्यां समाहितः । गत्वा जलाशयं पुण्यमाचम्य प्रयतः शुचिः ॥४६॥
आवाह्य सर्वतीर्थानि ध्यात्वा नारायणं तथा । ततः स्नानं प्रकुर्वीत विधिबोधितवर्त्मना ॥४७॥
स्नात्वा सम्यक्ततो देवानृषींश्चापि पितॄन्स्वकान् । सन्तर्पयेत्तथान्यांश्च नामगोत्रोक्तिपूर्वकम् ॥४८॥
उत्तीर्य वाससी धौते निर्मले परिधाय च । उपस्पृश्य विधानेन तथोपस्थाय भास्करम् ॥४९॥
वेदमातरमावर्त्य पुण्यामष्टोत्तरं शतम् । सौरमन्त्रांस्तथा चान्यांस्त्रिः परीत्य नमेद्रविम् ॥५०॥
वेदोक्तं त्रिषु वर्णेषु स्नानं जप्यमुदाहृतम् ॥५१॥
स्त्रीशूद्रयोर्वरारोहे वेदोक्तविधिवर्जितम् । ततो व्रजेन्मन्दिरस्थं भक्त्या श्रीपुरुषोत्तमम् ॥५२॥
प्रक्षाल्य हस्तौ पादौ च उपस्पृश्य यथाविधि । घृतेन स्नापयेद्देवं क्षीरे ण तदनन्तरम् ॥५३॥
मधुगन्धोदकेनापि तीर्थचन्दनवारिणा । ततो वस्त्रयुगं श्रेष्ठं भक्त्या तं परिधापयेत् ॥५४॥
चन्दनागुरुकर्पूरैः कुङ्कुमेन विलेपयेत् । पूजयेत्परया भक्त्या पद्मैश्च पुरषोत्तमम् ॥५५॥
सम्पूज्यैवं जगन्नाथं भुक्तिमुक्तिप्रदं हरिम् । धूपं चागुरुसंयुक्तं देहे देवस्य चाग्रतः ॥५६॥
गुग्गुलं च सुनिष्पूतं दहेद् घृतसमन्वितम् । दीपं प्रज्वालयेद्भक्त्या यथाशक्ति घृतेन वै ॥५७॥
अन्यांश्च दीपकान्दद्याद्द्वादशै व समाहितः । गो घृतेन तु देवेशि तिलतैलेन वा पुनः ॥५८॥
नैवेद्यं पायसा पूपशष्कुलीवटकानि च । मोदकं फाणिकं चान्यत्फलानि च निवेदयेत् ॥५९॥
एवं पञ्चोपचारेण सम्पूज्य पुरुषोत्तमम् । ॐ नमः पुरुषोत्तमायेति जपेदष्टोत्तरं शतम् ॥६०॥
ततः प्रसादयेद्देवं दण्डवत्प्रणिपत्य च । ततोऽर्चयेद्गुरुं भक्त्या पुष्पवस्त्रानुलेपनैः ॥६१॥
नानयोरन्तरं यस्माद्विद्यते विधिनन्दिनि । देवस्योपरि कुर्वीत मण्डपं सुसमाहितः ॥६२॥
नानापुष्पैः सुविशदं विचित्रं मण्डलं पुरः । कृत्वावधारणं पश्चाज्जागरं कारयेन्निशि ॥६३॥
कथां च वासुदेवस्य गीतिकां चापि कारयेत् । ध्यायन्पठन्स्तुवन्देवं प्रणयेद्रजनीं बुधः ॥६४॥
ततः प्रभाते विमले द्वादश्यां द्वादशैव तु । निमन्त्रयेद्व्रतस्नातान्ब्राह्मणान्वेदपारगान् ॥६५॥
इतिहासपुराणज्ञाञ्छ्रोत्रियान्संयतेन्द्रियान् । स्नात्वा सम्यग्विधानेन धौतवासा जितेन्द्रियः ॥६६॥
स्नापयेत्पूर्ववद्भक्त्या तत्रस्थं पुरुषोत्तमम् । गन्धैः पुष्पैस्तूपहारैर्नैवेद्यैर्दीपकैस्तथा ॥६७॥
उपचारैर्बहुविधैः प्रणिपातैः प्रदक्षिणैः । जाप्यस्तुतिनमस्कारैर्गीतवाद्यैर्मनोहरैः ॥६८॥
सम्पूज्यैवं जगन्नाथं ब्राह्मणान्पूजयेत्ततः । द्वादशैव तु गास्तेभ्यो दत्त्वा कनकमेव च ॥६९॥
छत्रोपानद्युगं चार्प्य कांस्यपात्रं च भक्तितः । ततस्तान्भोजयेद्विप्रान्भोज्यं पायसपूर्वकम् ॥७०॥
पक्वान्नं भक्ष्यभोज्यं च सगुडं शर्करान्वितम् । ततो भुक्त्वा सुसन्तृप्तान्ब्राह्मणान्सुस्थमानसान् ॥७१॥
द्वादशैवोदकुम्भांश्च ग्राहयेत्तान्समोदकान् । दक्षिणां च यथाशक्ति विष्णुतुल्यं विरिञ्चिजे ॥७२॥
सुवर्णवस्त्रगोधान्यैर्द्रव्यैश्चन्यैर्वरैर्बुधः । सम्पूज्य तान्नमस्कृत्य इमं मन्त्रमुदीरयेत् ॥७३॥
सर्वव्यापी जगन्नाथः शङ्खचक्रगदाधरः । अनादिनिधनो देवः प्रीयतां पुरुषोत्तमः ॥७४॥
इत्युच्चार्य ततो विप्रांस्त्रिः परिक्रम्य सादरम् । प्रणम्य शिरसा भक्त्या साचार्यांस्तान्विसर्जयेत् ॥७५॥
ततस्तान्ब्राह्मणान्भक्त्या चासीमान्तमनुव्रजेत् । अनुव्रज्य तु तान्विप्रान्नमस्कृत्य निवर्त्य च ॥७६॥
बान्धवैः स्वजनैर्युक्तस्ततो भुञ्जीत वाग्यतः । एवं कृत्वा नरः सम्यङ् नारी वा लभते फलम् ॥७७॥
अश्वमेधसहस्रस्य राजसूयशतस्य च । अतीतं शतमुद्धृत्य पुरुषाणां नरोत्तमः ॥७८॥

भविष्यच्च शतं देवि दिव्यरूपधरोऽव्ययः । सर्वलक्षणसम्पन्नः सर्वालङ्कारभूषितः ॥७९॥
सर्वकामसमृद्धात्मा गुणरूपवयोऽन्वितः । स्तूयमानोऽथ गन्धर्वैरप्सरोभिः समन्ततः ॥८०॥
विमानेनार्कवर्णेन कामगेन स्थिरेण च । पताकाध्वजयुक्तेन शतसूर्यप्रभेण च ॥८१॥
उद्योतयन्दिशः सर्वा आकाशे विगतक्लमः । युवा महाबलो धीमान्विष्णुलोकं स गच्छति ॥८२॥
तत्र कल्पशतं यावद्भुङ्क्ते भोगान्यथेप्सितान् । स्तुतो मुनिवरैर्देवि तिष्ठेश्च विगतज्वरः ॥८३॥
यथा देवो जगन्नाथः शङ्खचक्रगदाधरः । तथाऽसौ मुदितो देवि धृत्वा रूपं चतुर्भुजम् ॥८४॥
भुक्त्वा तत्र वरान्भोगान्क्रीडित्वा सुचिरं सति । तदन्ते ब्रह्मसदनमायात्यखिलकामदम् ॥८५॥
सिद्धविद्याधरैश्चापि शोभितं सुरकिन्नरैः । कालं नवतिकल्पं तु तत्र भुक्त्वा सुखं नरः ॥८६॥
रुद्रलोकं समायाति सुखदं सेवितं सुरैः । सिद्धविद्याधरैर्यक्षैर्भूषितं दैत्यदानवैः ॥८७॥
अशीतिकल्पकालं तु तत्र भुक्त्वा सुखं नरः । तदन्ते याति गोलोकं सर्वभोगसमन्वितम् ॥८८॥
सुरसिद्धाप्सरोभिश्च शोभितं सुमनोहरम् । तत्र सप्ततिकल्पं तु भुक्त्वा भोगानभीप्सितान् ॥८९॥
पश्चादायाति वै लोकं प्राजापत्यमनुत्तमम् । षष्टिकल्पं सुखं तत्र भुक्त्वा नानाविधं मुदा ॥९०॥
तदन्ते शक्रभवनं नानाश्चर्यं समाव्रजेत् । आगत्य तत्र पञ्चाशत्कल्पं भुक्त्वा सुखं नरः ॥९१॥
प्रपद्यतेऽमरगृहान्विमानैः समलङ्कृतान् । चत्वारिंशत्कल्पकालं भोगान्भुक्त्वा सुदुर्लभान् ॥९२॥
नाक्षत्रं लोकमायाति नानासौख्य समन्वितम् । तत्र भुक्त्वा वरान्भोगांस्त्रिंशत्कल्पं यथेप्सितान् ॥९३॥
तस्माद्गच्छति तं लोकं शशाङ्कस्य विरिञ्चिजे । यत्र तिष्ठति सोमोऽसौ सर्वदेवैरलङ्कृतः ॥९४॥
तत्र विंशतिकल्पं तु भुक्त्वा भोगं सुदुर्लभम् । आदित्यस्य ततो लोकमायाति सुरपूजितम् ॥९५॥
तत्र भुक्त्वा शुभान्भोगन्दशकल्पं सुनिर्वृतः । तस्मादायाति भवनं गन्धर्वा णां सुदुर्लभम् ॥९६॥
तत्र भोगान्समस्तांश्च कल्पमेकं यथासुखम् । भुक्त्वा चायाति मेदिन्यां राजा भवति धार्मिकः ॥९७॥
चक्रवर्ती महावीर्यो गुणैः सर्वैरलङ्कृतः । कृत्वा राज्यं तु धर्मेण यज्ञैरिष्ट्वा सदक्षिणैः ॥९८॥
तदन्ते योगिनां लोकं गत्वा मोक्षप्रदं शिवम् । तत्र भुक्त्वा वरान्भोगान्यावदाभूतसम्पलवम् ॥९९॥
तस्मात्पुनरिहायातो जायते योगिनां कुले ॥१००॥
प्रवरे वैष्णवे भद्रे दुर्लभे साधुसम्मते । चतुर्वेदी विप्रवरो ब्रह्मयज्ञपरः सति ॥१०१॥
वैष्णवं योगमासाद्य कैवल्यं मोक्षमाप्नुयात् । एवं यात्राफलं तुभ्यं प्रोक्तं श्रीपुरुषोत्तमे ॥१०२॥
भुक्तिमुक्तिप्रदं नृणां किमन्यच्छ्रोतुमिच्छसि ॥१०३॥

इति श्रीबृहन्नारदीयपुराणोत्तरभागे मोहिनीवसुसंवादे पुरुषोत्तमक्षेत्रमाहात्म्ये
पुरुषोत्तमक्षेत्रयात्राफलवर्णनं नामैकषष्टितमोऽध्यायः ॥६१॥
आदितः श्लोकानां समष्ट्यङ्काः-१७,०४१+१०३=१७,१४४



## ॥ अथ द्विषष्टितमोऽध्यायः ॥

वसिष्ठ उवाच ॥
एतच्छ्रुत्वा तु भूपाल मोहिनी विधिनन्दिनी । पुरुषोत्तममाहात्म्यं भुक्तिमुक्तिप्रदायकम् ॥१॥
पुनः पप्रच्छ तं विप्रं वसुं स्वस्य पुरोहितम् ।
मोहिन्युवाच ॥
श्रुतमत्यद्भुतं विप्र पुरुषोत्तमसम्भवम् ॥२॥
माहात्म्यं चाधुना ब्रूहि प्रयागस्यापि सुव्रत । तीर्थराजः प्रयागाख्यः श्रुतः पूर्वं मया गुरो ॥३॥
तन्माहात्म्यं ममाख्याहि तीर्थयात्राविधानयुक् । स मान्यानां विशेषाणां तीर्थानां गमने द्विज ॥४॥
यत्कर्त्तव्यं च विधिना नृभिर्द्धर्मपरायणैः । तच्छ्रुत्वा स द्विजो राजन्मोहिन्या भाषितं वचः ॥५॥

सामान्यविधिपूर्वं तत्प्रयागाख्यानमब्रवीत् ।
वसुरुवाच ॥
श्रृणु भद्रे प्रवक्ष्यामि तीर्थाभिगमने विधिम् ॥६॥
यं समाश्रित्य मनुजो यथोक्तं फलमाप्नुयात् । तीर्थाभिगमनं पु ण्यं यज्ञैरपि विशिष्यते ॥७॥
अनुपोष्य त्रिरात्राणि तीर्थान्यप्यभिगम्य च । अदत्त्वा काञ्चनं गाश्च दरिद्रो जायते नरः ॥८॥
अग्निष्टोमादिभिर्यज्ञैरिष्ट्वा विपुलदक्षिणैः । न तत्फलमवाप्नोति तीर्थाभिगमनेन यत् ॥९॥
अज्ञानेनापि यस्येह तीर्थाभिगमनं भवेत् । सर्वकामसमृद्धः स स्वर्गलोके महीयते ॥१०॥
हे भद्रे ! म तीर्थयात्रो विधि बताउँदछु, सुन । यसलाई पूरा गर्नाले मनुष्यले बताए अनुसारको फल प्राप्त गर्दछ । तीर्थयात्रो पुण्य यज्ञकाृ फलभन्दा पनि ठूलो हुन्छ । जो मानिस तीर्थमा गएर तीन रातसम्म उपवास बस्दैन अथवा सुन, गाई आदि दान गर्दैन, उ दरिद्र भएर जन्मन्छ । तीर्थयात्रा गर्नाले जुन फल पाइन्छ, त्यो फल प्रसस्त दक्षिणा सहितको अग्निष्टोम यज्ञबाट पनि पाइन्न । जो व्यक्ति अज्ञानवश भएपनि तीर्थयात्रा गर्दछ, उसले सबै फल पाई स्वर्गलोकमा पूजित हुन्छ ।६-१०।
स्थानं च लभते नित्यं धनधान्यसमाकुलम् । ऐश्वर्यज्ञानसम्पूर्णः सदा भवति भोगवान् ॥११॥
तारिताः पितररतेन नरकात्प्रपितामहाः । यस्य हस्तौ च पादौ च मनश्चैव सुसंयतम् ॥१२॥
विद्या तपश्च कीर्तिश्च स तीर्थफलमश्नुते । प्रतिग्रहादपावृत्तः सन्तुष्टो येन केनचित् ॥१३॥
अहङ्कारविमुक्तश्च स तीर्थफलमाप्नुयात् । अकल्पको निरारम्भो लघ्वाहारो जितेन्द्रियः ॥१४॥
विमुक्तः सर्वसङ्गैस्तु स तीर्थफलभाग्भवेत् । तीर्थान्यनुसरन्धीरः श्रद्दधानः समाहितः ॥१५॥
कृतपापो विशुध्येत्तु किं पुनः शुद्धकर्मकृत् । अश्रद्दधानः पापार्तो नास्तिकोऽच्छिन्नसंशयः ॥१६॥
हेतुनिष्ठश्च पञ्चैते न तीर्थफलभागिनः । नृणां पापकृतां तीर्थे पापस्य शमनं भवेत् ॥१७॥
धनधान्यले युक्त भएको स्थान प्राप्त गर्दछ, नरकबाट पितृहरूलाई उद्धार गर्दछ र ऐश्वर्य एवं ज्ञानले पूर्ण भई सदा भोगी हुन्छ । जसका हात, गोडा र मन संयमित छन् र जसको विद्या, तप र कीर्ति फैलिएको छ, उसलाई तीर्थको फल प्राप्त हुन्छ । जो दान लिँदैन, जे पाइन्छ त्यसले सन्तुष्ट रहन्छ, अहङ्कार गर्दैन, उसलाई तीर्थफल प्राप्त हुन्छ । जो कल्पना र आरम्भले रहित छ, थोरै खान्छ, जितेन्द्रिय छ र सङ्गत मन पराउँदैन, उ तीर्थफल प्राप्त गर्दछ । श्रद्धापूर्वक सावधान भएर जो धैर्यशाली व्यक्ति तीर्थयात्रा गर्दछ, उ पापी भएपनि शुद्ध हुन्छ चने पवित्र कर्म गर्नेका लागि के भनौ ? अश्रद्धालु, पापी, नास्तिक, शङ्कालु र जुक्ति मात्र लगाउने-यि पाँच थरीलाई तीर्थफल प्राप्त हुँदैन । तीर्थमा पापीको पाप हट्दछ ।११-१७।
यथोक्तफलदं तीर्थं भवेच्छुद्धात्मनां नृणाम् । कामं क्रोधं च लोभं च यो जित्वा तीर्थमाविशेत् ॥
न तेन किञ्चिदप्राप्तं तीर्थाभिगमनाद्भवेत् । तीर्थानि च यथोक्तेन विधिना सञ्चरन्ति ये ॥
सर्वन्द्वसहा धीरास्ते नराः स्वर्गगामिनः ॥१८॥
तीर्थको वास्तविक फल त शुद्ध आत्मा हुनेलाई नै प्राप्त हुन्छ । जो काम, क्रोध र लोभलाई जितेर तीर्थयात्रा गर्दछ, उसलाई के चाहीँ प्राप्त हुन्न ? जो मानिस राग, द्वेष आदि सही विधिपूर्वक तीर्थयात्रा गर्दछ, उ स्वर्ग जान्छ ।१८।
गङ्गादितीर्थेषु वसन्ति मत्स्या देवालये पक्षिगणाश्च सन्ति । भावोज्झितास्ते न फलं लभन्ते तीर्थाच्च देवायतनाच्च मुख्यात् ॥१९॥
भावं ततो हृत्कमले निधाय तीर्थानि सेवेत समाहितात्मा । या तीर्थयात्रा कथिता मुनीन्द्रैः कृता प्रयुक्ता ह्यनुमोदिता च ॥२०॥
तां ब्रह्मचारी विधिवत्करोति सुसंयतो गुरुणा संनियुक्तः । सर्वस्वनाशेऽप्यथवाल्पपक्षे स ब्राह्मणानग्रत एव कृत्वा ॥२१॥
यज्ञाधिकारेऽप्यथवा निवृत्ते विप्रस्तु तीर्थानि परिभ्रमेच्च । तीर्थेष्वलं यज्ञफलं हि यस्मात्प्रोक्तं मुनीन्द्रैरमलस्वभावैः ॥२२॥
यस्येष्टियज्ञेष्वधिकारितास्ति वरं गृहं गृहधर्माश्च सर्वे । एवं गृहस्थाश्रमसंस्थितस्य तीर्थे गतिः पूर्वतरैर्निषिद्धा ॥
सर्वाणि तीर्थान्यपि चाग्निहोत्रतुल्यानि नैवेति वदन्ति केचित् ॥२३॥
गङ्गा आदि गरिएका तीर्थमा माछा हुन्छन् र मन्दिरतिर चराहरू बस्दछन्, तर ती भावहीन हुनाले गर्दा तिनलाई तीर्थ एवं मन्दिरको फल प्राप्त हुँदैन । यसैले मनमा पवित्र भाव राखी संयमित चित्तले तीर्थयात्रा गर्नु पर्दछ । मुनिगण यस्तो तीर्थयात्रालाई समर्थन गर्दछन् । यस्तो तीर्थयात्रालाई संयमित चित्तका ब्रह्मचारी गुरुको आज्ञा लिई सम्पन्न गर्दछन् । चाहे सर्वस्व सकियोस् वा अलिकति, तीर्थयात्रा ब्राह्मणलाई अघि लगाएरै गर्नु पर्दछ । ब्राह्मण यज्ञका लागि योग्य होस् वा त्यसबाट पर होस् उसले तीर्थाटन गर्नु पर्दछ । किन कि निर्मल स्वभावका श्रेष्ठ मुनिहरूले तीर्थको फललाई यज्ञको फलभन्दा विशेष हुने कुरा बताएका छन् ।

जसलाई यज्ञ गर्ने अधिकार छ, उसलाई घर र गृहस्थ धर्म नै श्रेष्ठ हुन्छ । यज्ञ आदि गर्दै गृहस्थमा बस्नेका लागि प्राचीन आचार्यले तीर्थयात्रा गर्न निषेध गरेका छन् । किन कि सबै तीर्थले पनि अग्निहोत्रसँग बराबरी गर्न सक्दैन भन्ने कस्केसैको मत छ ।१९-२३।

यो यः कश्चित्तीर्थयात्रां तु गच्छेत्सुसंयतः स च पूर्वं गृहेषु । कृतावासः शुचिरप्रमत्तः सम्पूजयेद्भक्तिनम्रो गणेशम्॥२४॥
देवान्पितॄन्ब्राह्मणांश्चैव साधून्धीमान्विप्रो वित्तशक्त्या प्रयत्नात् । प्रत्यागतश्चापि पुनस्तथैव देवान्पितॄन्ब्राह्मणान्पूजयेच्च ॥२५॥
एवं कुर्वतस्तस्य तीर्थाद्यदुक्तं फलं तत्स्यान्नात्र सन्देहलेशः ॥२६॥

जो तीर्थयात्रामा निस्कन लागेको छ, उसले पहिले संयमित, पवित्र र सावधान भई उपवास बसेर भक्ति एवं नम्रतापूर्वक गणेशको पूजा गर्नु । तीर्थबाट फर्केपछि पनि त्यसैगरी देवता, पितृ र ब्राह्मणलाई अर्चना गर्नु । यसो गर्नाले उसलाई तीर्थयात्राको बताइएको फल प्राप्त हुन्छ, यसमा अकिति पनि शङ्का नगर्दा हुन्छ ।२४-२६।

गच्छन्देशान्तरं यस्तु श्राद्धं कुर्यात्ससर्पिषा । यात्रार्थमिति तत्प्रोक्तं प्रवेशे च संशयः ॥२७॥
प्रयागे तीर्थयात्रायां पितृमातृवियोगतः । कचानां वपनं कुर्याद् वृथा न विकचो भवेत्॥२८॥
उद्यतश्चेद्गयां गन्तुं श्राद्धं कृत्वा विधानतः । विधाय कार्पटीवेषं कृत्वा ग्रामप्रदक्षिणाम्॥२९॥
ततो ग्रामान्तरं गत्वा श्राद्धशेषस्य भोजनम् । ततः प्रतिदिनं गच्छेत्प्रतिग्रहविवर्जितः ॥३०॥
पदेपदेऽश्वमेधस्य स्यात्फलं गच्छतो गयाम् । बलीवर्दसमारूढस्तीर्थं यो याति सुव्रते ॥३१॥
नरके वसते घोरे गवां क्रोधो हि दारुणः । सलिलं च न गृह्णन्ति पितरस्तस्य देहिनः ॥३२॥

अर्को देशको तीर्थयात्रा गर्न जानेले पहिले घिउले श्राद्ध गर्नु पर्दछ । प्रयाग तथा अरु तीर्थमा मातापिता जीति नहुनेले मात्र कपाल खौरनु पर्दछ, अरुले होइन । यात्रुले विधिपूर्वक श्राद्ध गरी पिताम्बर लगाउनु र आफ्नो गाउँको प्रदक्षिणा गरी तीर्थयात्रामा निस्कनु । हरेक दिन हिँड्नु तर दान नलिनु । गया जान लागेकोलाई पाइलापाइलामा अश्वमेध यज्ञको फल प्राप्त हुन्छ । हे सुव्रते ! जो मानिस साँढे चढेर तीर्थयात्रा गर्दछ उ घोर नरकमा पर्दछ । साँढेको रिसको निसानामा पर्दछ र उसले दिएको तर्पण पनि पितृले स्वीकार गर्दैनन् ।२७-३२।

ऐश्वर्याल्लोभमोहाद्वा गच्छेद्यानेन यो नरः । निष्फलं तस्य तत्तीर्थं तस्माद्यान विवर्जयेत्॥३३॥
गोयाने गोवधः प्रोक्तो हययाने तु निष्फलम् । नरयाने तदर्द्धं स्यात्पद्भ्यां तच्च चतुर्गुणम्॥३४॥
वर्षातपादिके छत्री दण्डी शर्करकण्टके । शरीरत्राणकामोऽसौ सोपानत्कः सदा व्रजेत् ॥३५॥
तीर्थं प्राप्यानुषङ्गेण स्नानं तीर्थे समाचरन् । स्नानजं फलमाप्नोति तीर्थयात्राफलं न तु ॥३६॥
षोडशांशं स लभते यः परार्थेन गच्छति । अर्द्धं तीर्थफलं तस्य यः प्रसङ्गेन गच्छति ॥३७॥
तीर्थेषु ब्राह्मणं नैव परीक्षेत कदाचन । अन्नार्थिनमनुप्राप्तं भोज्यं तं मनुरब्रवीत्॥३८॥

जो मानिस सम्पत्तिको धाकले वा लोभले वा मोहले सवारीमा चढेर तीर्थयात्रा गर्दछ, उसको तीर्थयात्रा निष्फल हुन्छ । यसैले सवारीको परित्याग गर्नु पर्दछ । साँढे चढे गोवधको पाप लाग्दछ । घोडा चढे पनि तीर्थयात्रा निष्फल हुन्छ । नरयानमा आधा फल मात्र पाइन्छ । तर पैदल गए चौबर फल पाइन्छ । तीर्थयात्रीले घामपानीबाट जोगिन छाता बोक्नु, काँडा-गिट्टी आदिबाट बच्न लौरो बोक्नु, शरीर रक्षार्थ सधैं जुत्ता लगाएर हिँड्नु । जो प्रसंगवश कुनै तीर्थमा पुगेर नुहाउँदछ, उसलाई नुहाएको फल त प्राप्त हुन्छ तर तीर्थयात्राको फल प्राप्त हुँदैन । जो अरुका लागि तीर्थयात्रा गरि दिन्छ, उसलाई षोडशांश मात्र फल मिल्दछ । जो प्रसंगवश तीर्थमा पुग्दछ उसलाई आधा फल प्राप्त हुन्छ । तीर्थमा कहिल्यै पनि ब्राह्मणको परीक्षा नगर्नु । त्यहाँ जासुकै माग्ने भेटिए पनि खुवाउनु भनेर मनुले भनेका छन् ।३३-३८।

सक्तुभिः पिण्डदानं च संयावैः पायसेन वा । बदरामलकैर्वापि पिण्याकैर्वा सुलोचने ॥३९॥
श्राद्धं तु तत्र कर्तव्यमर्चावाहनवर्जितम् । श्वध्वांक्षगृध्रपापानां नैव दृष्टिहतं च यत्॥४०॥
श्राद्धं तु तैर्थिकं प्रोक्तं पितॄणां तृप्तिकारकम् । अकालेऽप्यथवा काले तीर्थश्राद्धं तथा नरैः ॥४१॥
प्राप्तैरेव सदा तत्र कर्तव्यं पितृतर्पणम् । विलम्बो नैव कर्तव्यो नैव विघ्नं समाचरेत्॥४२॥
प्रतिकृतिं कुशमयीं तीर्थवारिणि मज्जयेत् । यमुद्दिश्य विशालाक्षि सोऽष्टमांशं फलं लभेत्॥४३॥
कुशोऽसि कुशपुत्रोऽसि ब्रह्मणा निर्मितः पुरा । त्वयि स्नाते तु स स्नातो यस्येदं ग्रन्थिबन्धनम्॥४४॥
मुण्डनं चोपवासश्च सर्वतीर्थेष्वयं विधिः । वर्जयित्वा कुरुक्षेत्रं विशालां विरजां गयाम् ॥४५॥

हे सुनयना ! तीर्थमा सातु, हलुवा, खीर, बयर, अमला र पिनाले पिण्डदान गर्नु पर्दछ । त्यहाँ पूजा, आवाहन नगरी श्राद्ध गर्नु पर्दछ । श्राद्धमा कुकुर, काग, गिद्ध र पापीको नजर पर्न दिनु हुँदैन । तीर्थश्राद्ध पितृका लागि तृप्तिदायक मानिएको छ । कुबेला वा सुबेला जतिखेर पनि तीर्थमा श्राद्ध र तर्पण गर्न सकिन्छ । यसमा अबेर गर्नु हुन्न । कुशको प्रतिमा बनाएर तीर्थको जलमा डुबाइ दिनु पर्दछ । हे विशाल आँखा भएकी ! जसका उद्देश्यले "कुशोऽसि..." मन्त्र पढ्दै जलमा कुशको प्रतिमा डुबाइन्छ, उसले तीर्थफलको आठौं भाग पाउँदछ । गया, कुरुक्षेत्र, विशाला र विरजा बाहेकका सबै तीर्थमा टाउको खौरी उपवास बस्नु पर्दछ भन्ने विधान छ ।३९-४५।

भौमानामथ तीर्थानां पुण्यत्वे कारणं श्रृणु । यथा शरीरस्योद्देशाः केचिन्मुख्यतमाः स्मृताः ॥४६॥
प्रभावादद्भुताद्भूमेः सलिलस्य च तेजसः । परिग्रहान्मुनीनां च तीर्थानां पुण्यता स्मृता ॥४७॥
गङ्गां सम्प्राप्य यो देवि मुण्डनं नैव कारयेत् । क्रिया तस्याक्रिया सर्वा तीर्थद्रोही भवेत्तथा ॥४८॥
गङ्गायां भास्करक्षेत्रे मुण्डनं यो न कारयेत् । स कोटिकुलसंयुक्त आकल्पं रौरवं व्रजेत् ॥४९॥
गङ्गां प्राप्य सरिच्छ्रेष्ठां कल्पान्तपापसञ्चयाः । केशानाश्रित्य तिष्ठन्ति तस्मात्तान्परिवर्जयेत् ॥५०॥
यावन्ति नखलोमानि गङ्गातोये पतन्ति वै । तावद्वर्षसहस्राणि स्वर्गलोके महीयते ॥५१॥

अब पृथ्वीमा रहेका तीर्थ यतिविधि पवित्र किन मानिन्छन् त्यसको कारण सुन ।
जसरी शरीरका केही अङ्ग उत्तम मानिन्छन्, केही तीर्थभूमि, जल तथा तेजको प्रभावका कारण विशिष्ट मानिने गर्दछन् । मुनिहरुले विशिष्टता स्वीकार्नुका पछाडिको कारण ती तिर्थको पवित्रता कारण देखिएको छ । हे देवी ! जो मानिस गङ्गामा आएर कपाल खोरँदैन, उसका सबै काम व्यर्थ हुन जान्छन् र उ तीर्थद्रोही हुन पुग्दछ । गङ्गा एवं भाष्करक्षेत्रमा कपाल नखौरने व्यक्ति आफ्ना करोडौं पुस्ताका पितृसहित कल्पको अन्तसम्म रौरव नरकमा पर्दछ । नदीहरुमा श्रेष्ठ गङ्गामा आउँदा मानिसका सबै पाप कपालमा गएर बस्दछन्, त्यसैले त्यसलाई हटाउनु पर्दछ । गङ्गाजलमा जति कपाल र नङ पर्दछ त्यति हजार वर्षसम्म स्वर्गलोक बस्न पाइन्छ ।४६-५१।

प्रयागव्यतिरेके तु गङ्गायां मुण्डनं न हि । योऽन्यथा कुरुते मोहात्स महारौरवं विशेत् ॥५२॥
स जीवत्पितृको यस्तु तीर्थं प्राप्य विधानवित् । क्षौरं समाचरेन्नैव श्मश्रूणां वपनं सति ॥५३॥
गयादावपि देवेशि श्मश्रूणां वपनं विना । न क्षौरं मुनिभिः सर्वैर्निषिद्धं चेति कीर्तितम् ॥५४॥
सश्मश्रुकेशवपनं मुण्डनं तद्विदुर्बुधाः । न क्षौरं मुण्डनं सुभ्रु कीर्तितं वेदवेदिभिः ॥५५॥

(तर) प्रयागभन्दा बाहेकका गङ्गामा कपाल खौरन हुन्न, जो व्यक्ति जानीनजानी यसो गर्दछ उ महारौरव नरकमा पर्दछ । जसका पिता जीवित छन्, यदि उ तीर्थमा जान्छ भने कपाल नखौरनु, दारीजुँगा मात्र खौरनु । हे देवेशि ! गया आदि तीर्थमा दारीजुँगा नखौरी कपाल नखौरनु, मुनिहरूले निषेध गरेका छन् । दारीजुँगा सहित कपाल खौरनुलाई मुण्डन भनिन्छ भनेर विद्वानहरू भन्दछन् । हे सुन्दर आँखी भौं भएकी ! वेद जान्नेहरूका मतमा कपाल खौरनु (क्षैर कर्म) मात्र मुण्डन होइन ।५२-५५।

इति श्रीबृहन्नारदीयपुराणे बृहदुपाख्याने उत्तरभागे वसुमोहिनीसंवादे प्रयागराजमाहगात्म्ये तीर्थविधिर्नाम द्विषष्टितमोऽध्यायः ॥६२॥
आदितः श्लोकानां समष्टयङ्काः-१७,१४४+५५=१७,१९९



## ॥ अथ त्रिषष्टितमोऽध्यायः ॥

वसुरुवाच ॥
श्रृणु मोहिनि वक्ष्यामि माहात्म्यं वेदसम्मतम् । प्रयागस्य विधानेन स्नात्वा यत्र विशुध्यति ॥१॥
कुरुक्षेत्रसमा गङ्गा यत्र तत्रावगाहिता । तस्माद्दशगु णा प्रोक्ता यत्र विन्ध्येन सङ्गता ॥२॥
तस्माच्छतगुणा प्रोक्ता काश्यामुत्तरवाहिनी । काश्याः शतगु णा प्रोक्ता गङ्गा यत्रार्कजान्विता ॥३॥
सहस्रगुणिता सापि भवेत्पश्चिमवाहिनी । सा देवि दर्शनादेव ब्रह्महत्यादिहारिणी ॥४॥
पश्चिमाभिमुखी गङ्गा कालिन्द्या सह सङ्गता । हन्ति कल्पशतं पापं सा माघे देवि दुर्लभा ॥५॥
अमृतं कथ्यते भद्रे सा वेणी भुवि सङ्गता । यस्यां माघे मुहूर्तं तु देवानामपि दुर्लभम् ॥६॥
पृथिव्यां यानि तीर्थानि पुर्यः पुण्यास्तथा सति । स्नातुमायान्ति ता वेण्यां माघे मकरभास्करे ॥७॥
ब्रह्मविष्णुमहादेवा रुद्रादित्यमरुद्गणाः । गन्धर्वा लोकपालाश्च यक्षकिन्नरगुह्यकाः ॥८॥

अणिमादिगुणोपेता ये चान्ये तत्त्वदर्शिनः । ब्रह्माणी पार्वती लक्ष्मीः शची मेधाऽदिती रतिः ॥९॥
सर्वास्ता देवपत्न्यश्च तथा नागाङ्गनाः शुभे । घृताची मेनका रम्भाप्युर्वशी च तिलोत्तमा ॥१०॥
गणाश्चाप्सरसां सर्वे पितृणां च गणास्तथा । स्नातुमायान्ति ते सर्वे माघे वेण्यां विरञ्चिजे ॥११॥
कृते युगे स्वरूपेण कलौ प्रच्छन्नरूपिणः । सर्वतीर्थानि कृष्णानि पापिनां सङ्गदोषतः ॥१२॥
भवन्ति शुक्लवर्णानि प्रयागे माघमज्जनात् । मकरस्थे रवौ माघे गोविन्दाच्युत माधवः ॥१३॥
स्नानेनानेन मे देव यथोक्तफलदो भव । इमं मन्त्रं समुच्चार्य स्नायान्मौनं समाश्रितः ॥१४॥
वासुदेवं हरिं कृष्णं माधवं च स्मरेत्पुनः । तप्तेन वारिणा स्नानं यद्गृहे क्रियते नरैः ॥१५॥
षष्ठ्यब्देन फलं तद्धि मकरस्थे दिवाकरे । बहिः स्नानं तु वाप्यादौ द्वादशाब्दफलं स्मृतम् ॥१६॥
तडागे द्विगुणं तद्धि नद्यादौ तच्चतुर्गुणम् । दशधा देवखाते च महानद्यां च तच्छतम् ॥१७॥
चतुर्गुणशतं तच्च महानद्योस्तु सङ्गमे । सहस्रगुणितं सर्वं तत्फलं मकरे रवौ ॥१८॥
गङ्गायां स्नानमात्रेण प्रयागे तत्प्रकीर्तितम् । गङ्गां ये चावगाहन्ति माघे मासि सुलोचने ॥१९॥
चतुर्युगसहस्रं ते न पतन्ति सुरालयात् । शतेन गुणितं माघे सहस्रं विधिनन्दिनि ॥२०॥
निर्दिष्टमृषिभिः स्नानं गङ्गायमुनसङ्गमे । पापौघैर्भुवि भारस्य दाहायेमं प्रजापतिः ॥२१॥
प्रयागं विदधे देवि प्रजानां हितकाम्यया । स्नानस्थानमिदं सम्यक् सितासितजलं किल ॥२२॥
पापरूपपशूनां हि ब्रह्मणा निर्मितं पुरा । सितासिता तु या धारा सरस्वत्या विदर्भिता ॥२३॥
तं मार्गं ब्रह्मलोकस्य सृष्टिकर्त्ता ससर्ज वै । ज्ञानदो मानसे माघो न तु मोक्षफलप्रदः ॥२४॥
हिमवत्पृष्ठतीर्थेषु सर्वपापप्रणाशनः । वेदविद्भिर्विनिर्दिष्टं इन्द्रलोकप्रदो हि सः ॥
सर्वमासोत्तमो माघो मोक्षदो बदरीवने ॥२५॥
पापहा दुःखहारी च सर्वकामफलप्रदः । रुद्रलोक प्रदो माघो नार्मदे परिकीर्तितः ॥२६॥
सारस्वतौघविध्वंसी सर्वलोकसुखप्रदः । विशालफलदो माघो विशालाया प्रकीर्तितः ॥२७॥
पापेन्धनदवाग्निश्च गर्भवासविनाशनः । विष्णुलोकाय मोक्षाय जाह्नवः परिकीर्तितः ॥२८॥
सरयूर्गण्डकी सिन्धुश्चन्द्रभागा च कौशिकी । तापी गोदावरी भीमा पयोष्णी कृष्णवेणिका ॥२९॥
कावेरी तुङ्गभद्रा च यास्तथान्याः समुद्रगाः । तासु स्नायी नरो याति स्वर्गलोकं विकल्मषः ॥३०॥
नैमिषे विष्णुसारूप्यं पुष्करे ब्रह्मणेऽन्तिकम् । आखण्डलस्य लोको हि कुरुक्षेत्रे च माघतः ॥३१॥
माघो देवह्रदे देवि योगसिद्धिफलप्रदः । प्रभासे मकरादित्ये स्नात्वा रुद्रगणो भवेत् ॥३२॥
देविकायां देवदेहो नरो भवति माघतः । माघस्नानेन विधिजे गोमत्यां न पुनर्भवः ॥३३॥
हेमकूटे महाकले ॐकारे ह्यपरे तथा । नीलकण्ठार्बुदे माघो रुद्रलोकप्रदो मतः ॥३४॥
सर्वासां सरितां देवि सम्पू रो माकरे रवौ । स्नानेन सर्वकामानां प्राप्त्यै ज्ञेयो विचक्षणैः ॥३५॥
माघस्तु प्राप्यते धन्यैः प्रयागे विधिनन्दिनि । अपुनर्भवदं तत्र सितासितजलं यतः ॥३६॥
गायन्ति देवाः सततं दिविष्ठा माघः प्रयागे किल नो भविष्यति ।
स्नाता नरा यत्र न गर्भवेदनां पश्यन्ति तिष्ठन्ति च विष्णु सन्निधौ ॥३७॥
तीर्थैर्व्रतैर्दानतपोभिरध्वरैः सार्द्धं विधात्रा तुलया धृतं पुरा ।
माघः प्रयागश्च तयोर्द्वयोरभून्माघो गरीयांश्चतुराननात्मजे ॥३८॥
वाताम्बुपर्णाशनदेहशोषणैस्तपोभिरुग्रैश्चिरकालसञ्चितैः ।
योगैश्च संयान्ति नरास्तु यां गतिं स्नानात्प्रयागस्य हि यान्ति तां गतिम् ॥३९॥
स्नाता हि ये माकरभास्करोदये तीर्थे प्रयागे सुरसिन्धुसङ्गमे ।
तेषां गृहद्वारमलङ्करोति भृङ्गावली कुञ्जरकर्णताडिता ॥४०॥
यो राजसूयाख्यसमाध्वरस्य स्नानात्फलं सम्प्रददाति चाखिलम् ।
पापानि सर्वाणि निहत्य लीलया नूनं प्रयागः स कथं न वर्ण्यते ॥४१॥
चतुर्वेदिषु यत्पुण्यं सत्यवादिषु चैव हि । स्नात एव तदाप्नोति गङ्गाकालिन्दिसङ्गमे ॥४२॥

तत्राभिषेकं कुर्वीत सङ्गमे शंसितव्रतः । तुल्यं फलमवाप्नोति राजसूयाश्वमेधयोः ॥४३॥
पञ्चयोजनविस्तीर्णं प्रयागस्य तु मण्डलम् । प्रवेशादस्य भूमौ तु अश्वमेधः पदे पदे ॥४४॥
त्रीणि कुण्डानि सुभगे तेषां मध्ये तु जाह्नवी । प्रयागस्य प्रवेशेन पापं नश्यति तत्क्षणात् ॥४५॥
मासमेकं नरः स्नात्वा प्रयागे नियतेन्द्रियः । मुच्यते सर्वपापेभ्यो यथा दृष्टं स्वयम्भुवा ॥४६॥
शुचिस्तु प्रयतो भूत्वाऽहिंसकः श्रद्धयान्वितः । स्नात्वा मुच्येत पापेभ्यो गच्छेच्च परमं पदम् ॥४७॥
नैमिषं पुष्करं चैव गोतीर्थं सिन्धुसागरम् । गया च धेनुकं चैव गङ्गासागरसङ्गमः ॥४८॥
एते चान्ये च बहवो ये च पुण्याः शिलोच्चयाः । दश तीर्थसहस्राणि त्रिंशत्कोटयस्तथा पराः ॥४९॥
प्रयागे संस्थिता नित्यमेधमाना मनीषिणः । त्रीणि यान्यग्निकुण्डानि तेषां मध्ये तु जाह्नवी ॥५०॥
प्रयागाद्धि विनिष्क्रान्ता सर्वतीर्थपुरस्कृता । तपनस्य सुता देवी त्रिषु लोकेषु विश्रुता ॥५१॥
यमुना गङ्गया सार्द्धं सङ्गता लोकपावनी । गाङ्गयमुनयोर्मध्ये पृथिव्यां यत्परं स्मृतम् ॥५२॥
प्रयागस्य तु तीर्थस्य कलां नार्हन्ति षोडशीम् । तिस्रः कोटयोऽर्द्धकोटी च तीर्थानां वायुरब्रवीत् ॥५३॥
दिविभुव्यन्तरिक्षे च जाह्नव्यां तानि सन्ति च । प्रयागं समधिष्ठाय कम्बलाश्वतरावुभौ ॥५४॥
भागवत्यथवा चैषा वेदां वेद्या प्रजापतेः । तत्र वेदाश्च यज्ञाश्च मूर्तिमन्तः समास्थिताः ॥५५॥
प्रजापतिमुपासन्ते ऋषयश्च तपोधनाः । यजन्ति क्रतुभिर्देवास्तथा चक्रधराः सति ॥५६॥
ततः पुण्यतमो नास्ति त्रिषु लोकेषु सुन्दरि । प्रभावात्सर्वतीर्थेभ्यः प्रभवत्यधिकस्तथा ॥५७॥
तत्र दृष्ट्वा तु तत्तीर्थं प्रयागं परमं पदम् । मुच्यन्ते सर्वपापेभ्यः शशाङ्क इव राहु णा ॥५८॥
ततो गत्वा प्रयागं तु सर्वदेवाभिरक्षितम् । ब्रह्मचारी वसन्मासं पितृन्देवांश्च तर्पयन् ॥५९॥
ईप्सिताँल्लभते कामान्यत्र तत्राभिसङ्गतः । सितासिते तु यो मज्जेदपि पापशतावृतः ॥६०॥
मकरस्थे रवौ माघे न स भूतस्तु गर्भगः । दुर्जया वैष्णवी माया देवैरपि सुदुस्त्यजा ॥६१॥
प्रयागे दह्यते सा तु माघे मासि विरञ्चिजे । तेषु तेषु च लोकेषु भुक्त्वा भोगाननेकशः ॥६२॥
पश्चाच्चक्रिणि लीयन्ते प्रयागे माघमज्जिनः । उपस्पृशति यो माघे मकरार्के सितासिते ॥६३॥
तस्य पुण्यस्य संख्यां नो चित्रगुप्तोऽपि वेत्त्यलम् । राजसूयसहस्रस्य वाजपेयशतस्य च ॥
फलं सितासिते माघे स्नातानां भवति ध्रु वम् ॥६४॥
आकल्पजन्मभिः पापं सञ्चितं मनुजैस्तु यत् । तद्भवेद्भस्मसान्माघे स्नातानां तु सितासिते ॥६५॥
गङ्गायमुनयोश्चैव सङ्गमो लोकविश्रुतः । स एव कामिकं तीर्थं तत्र स्नानेन भक्तितः ॥६६॥
यस्य यस्य च यः कामस्तस्य तस्य भवेद्धि सः । भोगकामस्य भोगाः स्युः स्याद्राज्यं राज्यकामिनः ॥६७॥
स्वर्गः स्यात्स्वर्गकामस्य मोक्षः स्यान्मोक्षकामिनः । कामप्रदानि तीर्थानि त्रैलोक्ये यानि कानि च ॥६८॥
तानि सर्वाणि सेवन्ते प्रयागं मकरे रवौ । हरिद्वारे प्रयागे च गङ्गासागरसङ्गमे ॥६९॥
स्नात्वैव ब्रह्मणो विष्णोः शिवस्य च पुरं व्रजेत् । सितासिते तु यत्स्नानं माघमासे सुलोचने ॥७०॥
न दत्ते पुनरावृत्तिं कल्पकोटिशतैरपि । सत्यवादी जितक्रोधो ह्यहिंसां परमां श्रितः ॥७१॥
धर्मानुसारी तत्त्वज्ञो गोब्राह्मणहिते रतः । गङ्गायमुनयोर्मध्ये स्नातो मुच्येत किल्बिषात् ॥७२॥
मनसा चिन्तितान्कामांस्तत्र प्राप्नोति पुष्कलान् । स्वर्णभारसहस्रेण कुरुक्षेत्रे रविग्रहे ॥७३॥
यत्फलं लभते माघे वेण्यां तत्तु दिने दिने । गवां शतसहस्रस्य सम्यग्दत्तस्य यत्फलम् ॥७४॥
प्रयागे माघमासे तु त्र्यहं स्नातस्य तत्फलम् । योगाभ्यासेन यत्पुण्यं संवत्सरशतत्रये ॥७५॥
प्रयागे माघमासे तु त्र्यहं स्नानेन यत्फलम् । नाश्वमेधसहस्रेण तत्फलं लभते सति ॥७६॥
त्र्यहस्नानफलं माघे पुरा काञ्चनमालिनी । राक्षसाय ददौ प्रीत्या तेन मुक्तः स पापकृत् ॥७७॥
त्र्यहात्पापक्षयो जातः सप्तविंशतिभिर्दिनैः । स्नानेन यदभूत्पुण्यं तेन देवत्वमागता ॥७८॥
रममाणा तु कैलासे गिरिजायाः प्रिया सखी । जातिस्मरा तथा जाता प्रयागस्य प्रसादतः ॥७९॥
अवन्तीविषये राजा वासराजो ऽभवत्पुरा । नर्मदातीर्थमासाद्य राजसूयं चकार सः ॥८०॥
अश्वैः षोडशभिस्तत्र स्वर्णयूपविराजितैः । स्वर्णभूषणभूषाढ्यै रेजे सोऽपि यथाविधि ॥८१॥

प्रददौ धान्यराशिं च द्विजेभ्यः पर्वतोपमम् । श्रद्धावान्देवताभक्तो गोप्रदश्च सुवर्णदः ॥८२॥
ब्राह्मणो भद्रको नाम मूर्खो हीनकुलस्तथा । कृषीवलोऽधमाचारः सर्वधर्मबहिष्कृतः ॥८३॥
सीरकर्मसमुद्विग्नो बन्धुभिश्च स वञ्चितः । इतस्ततः परिक्रम्य निर्गतोऽदृष्टपीडितः ॥८४॥
दैवतो ज्ञानमाश्रित्य प्रयागं समुपागतः । महामाघीं पुरस्कृत्य सस्नौ तत्र दिनत्रयम् ॥८५॥
अनघः स्नानमात्रेण समभूत्स द्विजोत्तमः । प्रयागाच्चलितस्तस्माद्ययौ यस्मात्समागतः ॥८६॥
स राजा सोऽपि वै विप्रो विपन्नावेकदा तदा । तयोर्गतिः समा दृष्टा देवराजस्य सन्निधौ ॥८७॥
तेजो रूपं बलं स्त्रैणं देवयानं विभूषणम् । माला च परिजातस्य नृत्यं गीतं समं तयोः ॥८८॥
इति दृष्ट्वा हि माहात्म्य क्षेत्रस्य कथमुच्यते । माघः सितासिते भद्रे राजसूयसमो न च ॥८९॥
धनुर्विंशतिविस्तीर्णे सितनीलाम्बुसङ्गमे । माघादपुनरावृत्ती राजसूयात्पुनर्भवेत् ॥९०॥
कम्बलाश्वतरौ नागौ विपुले यमुनातटे । तत्र स्नात्वा च पीत्वा च सर्वपापैः प्रमुच्यते ॥९१॥
तत्र गत्वा च संस्थाने महादेवस्य धीमतः । नरस्तारयते पुंसो दश पूर्वान्दशावरान् ॥९२॥
कूपं चैव तु तत्रास्ति प्रतिष्ठानेऽति विश्रुतम् । तत्र स्नात्वा पितृ न्देवान्सन्तर्प्य यतमानसः ॥९३॥
ब्रह्मचारी जितक्रोधस्त्रिरात्रं यो ऽत्र तिष्ठति । सर्वपापविशुद्धात्मा सोऽश्वमेधफलं लभेत् ॥९४॥
उत्तरेण प्रतिष्ठानाद्भागीरथ्याश्च पूर्वतः । हंसप्रतपनं नाम तीर्थं लोकेषु विश्रुतम् ॥९५॥
अश्वमेधफलं तत्र स्नानमात्रेण लभ्यते । यावच्चन्द्रश्च सूर्यश्च तावत्स्वर्गे महीयते ॥९६॥
ततो भोगवतीं गत्वा वासुकेरुत्तरेण च । दशाश्वमेधिकं नाम तत्तीर्थं परमं स्मृतम् ॥९७॥
तत्र कृत्वाभिषेकं तु वाजिमेधफलं लभेत् । धनाढ्यो रूपवान्दक्षो दाता भवति धार्मिकः ॥९८॥
चतुर्वेदिषु यत्पुण्यं सत्यवादिषु यत्फलम् । अहिंसायां तु यो धर्मो गमनात्तस्य तत्फलम् ॥९९॥
पायतेश्चोत्तरे कूले प्रयागस्य तु दक्षिणे । ऋणमोचनकं नाम तीर्थं तु परमं स्मृतम् ॥१००॥
एकरात्रोषितः स्नात्वा ऋणैः सर्वैः प्रमुच्यते । स्वर्गलोकमवाप्नोति ह्यमरश्च तथा भवेत् ॥१०१॥
त्रिकालमेकस्नायी चाहारमुक्तिं य आचरेत् । विश्वासघातपापात्तु त्रिभिर्मासैः स शु द्ध्यति ॥१०२॥
कीर्तनाल्लभते पुण्यं दृष्ट्वा भद्राणि पश्यति । अवगाह्य च पीत्वा च पुनात्यासप्तमं कुलम् ॥१०३॥
मकरस्थे रवौ माघे न स्नात्यनुदिते रवौ । कथं पापैः प्रमुच्येत कथं वा त्रिदिवं व्रजेत् ॥१०४॥
प्रयागे वपनं कुर्याद्गङ्गायां पिण्डपातनम् । दानं दद्यात्कुरुक्षेत्रे वाराणस्यां तनुं त्यजेत् ॥१०५॥
किं गयापिण्डदानेन काश्यां वा मरणेन किम् । किं कुरुक्षेत्रदानेन प्रयागे मुण्डनं यदि ॥१०६॥
संवत्सरं द्विमासोनं पुनस्तीर्थं व्रजेद्यदि । मुण्डनं चोपवासं च ततो यत्नेन कारयेत् ॥१०७॥
प्रयागप्राप्तनारीणां मुण्डनं त्वेवमीरयेत् । सर्वान्केशान्समुद्धृत्य छेदयेदङ्गुलद्वयम् ॥१०८॥
केशमूलान्युपाश्रित्य सर्वपापानि देहिनाम् । तिष्ठन्ति तीर्थस्नानेन तस्मात्तान्यत्र वापयेत् ॥१०९॥
अमार्कपातश्रवणैर्युक्ता चेत्पौषमाघयोः । अर्द्धोदयः स विज्ञेयः सूर्यपर्वशताधिकः ॥११०॥
किञ्चिन्न्यूने तु विधिजे महोदय इति स्मृतः । अरुणोदयवेलायां शुक्ला माघस्य सप्तमी ॥१११॥
प्रयागे यदि लभ्येत सहस्रार्कग्रहैः समा । अयने कोटिपुण्यं स्याल्लक्षं तु विषुवे फलम् ॥११२॥
षडशीत्यां सहस्रं तु तथा विष्णुपदीषु च । दानं प्रयागे कर्तव्यं यथाविभवविस्तरम् ॥११३॥
तेन तीर्थफलं चैव वर्धते विधिनन्दिनि । गङ्गायमुनयोर्मध्ये यस्तु गां वै प्रयच्छति ॥११५॥
सुवर्णं मणिमुक्तां वा यदि वान्यं प्रतिग्रहम् । पाटलां कपिलां भद्रे यस्तु तत्र प्रयच्छति ॥११५॥
स्वर्णश्रृङ्गीं रौप्यखुरां चैलकण्ठीं पयस्विनीम् । सवत्सां श्रोत्रियं साधुं ग्राहयित्वा यथाविधि ॥११६॥
शुक्लां वरधरं शान्तं धर्मज्ञं वेदपारगम् । सा च गौस्तस्य दातव्या गङ्गायमुनसङ्गमे ॥११७॥
वासांसि च महार्हाणि रत्नानि विविधानि च । यावन्तो रोमकूपाः स्युस्तस्या गोर्वत्सकस्य च ॥११८॥
तावद्वर्षसहस्राणि स्वर्गलोके महीयते । यत्रासौ लभते जन्म सा गौस्तत्राभिजायते ॥११९॥
न च पश्यन्ति नरकं दातारस्तेन कर्मणा । उत्तरांश्च कुरून्प्राप्य मोदन्ते कालमक्षयम् ॥१२०॥
गवां शतसहस्रेभ्यो दद्यादेकां पयस्विनीम् । पुत्रान्दारांस्तथा भृत्यान् गौरेका प्रतितारयेत् ॥१२१॥

तस्मात्सर्वेषु दानेषु गोदानं तु विशिष्यते । दुर्गमे विषमे घोरे महापातकसङ्कमे ॥१२२॥
गौरेव रक्षां कुरुते तस्माद्देया द्विजोत्तमे । तीर्थे न प्रतिगृह्णीयात्पुण्येष्वायतनेषु च ॥१२३॥
निमित्तेषु च सर्वेषु ह्यप्रमत्तो भवेद्द्विजः । स्वकार्ये पितृकार्ये वा देवताभ्यर्चनेऽपि वा ॥१२४॥
विफलं तस्य तत्तीर्थं यावत्तद्धनमश्नुते । गङ्गायमुनयोर्मध्ये यस्तु कन्यां प्रयच्छति ॥१२५॥
न स पश्यति घोरं तु नरकं तेन कर्मणा । उत्तरांस्तु कुरून् गत्वा मोदते कालमक्षयम् ॥१२६॥
पुत्रान्दारांश्च लभते धार्मिकान्रूपसंयुतान् । अधः शिरास्ततो धूममूर्द्ध्वबाहुः पिबेन्नरः ॥१२७॥
शतं वर्षसहस्राणां स्वर्गलोके महीयते । परिभ्रष्टस्ततः स्वर्गादग्निहोत्री भवेन्नरः ॥१२८॥
भुक्त्वा तु विपुलान्भोगांस्तत्तीर्थं लभते पुनः । आ प्रयागात्प्रतिष्ठानान्मत्पुरो वासुकेर्ह्रदात् ॥१२९॥
कम्बलाश्वतरौ नागौ नागादबहुमूलकात् । एतत्प्रजापतेः क्षेत्रं त्रिषु लोकेषु विश्रुतम् ॥१३०॥
तत्र स्नात्वा दिवं यान्ति ये मृतास्तेऽपुनर्भवाः । न वेदवचनाच्चैव न लोकवचनादपि ॥१३१॥
मतिरुत्क्रमणीया हि प्रयागमरणं प्रति । दशतीर्थसहस्राणि षष्टिकोट्यस्तथा पराः ॥१३२॥
तत्रैव तेषां सान्निध्यं कीर्तितं विधिनन्दिनि । या गतिर्योगयुक्तस्य सत्पथस्थस्य धीमतः ॥१३३॥
सा गतिस्त्यजतः प्राणान् गङ्गायमुनसङ्गमे । बाधितो यदि वा दीनः क्रुद्धो वापि भवेन्नरः ॥१३४॥
गङ्गायमुनमासाद्य यस्तु प्राणान्परित्यजेत् । दीप्तकाञ्चनवर्णाभैर्विमानैः सूर्यकान्तिभिः ॥१३५॥
गन्धर्वाप्सरसां मध्ये स्वर्गे मोदति मानवः । ईप्सिताँल्लभते कामान्वदन्तीति मुनीश्वराः ॥१३६॥
गीतवादित्रनिर्घोषैः प्रसुप्तः प्रतिबुध्यते । यावन्न स्मरते जन्म तावत्स्वर्गे महीयते ॥१३७॥
ततः स्वर्गात्परिभ्रष्टः क्षीणकर्मात्र चागतः । हिरण्यरत्नसम्पूर्णे समृद्धे जायते कुले ॥१३८॥
तदेवसंस्मरंस्तत्र विष्णुलोकं स गच्छति । वटमूलं समासाद्य यस्तु प्राणान्परित्यजेत् ॥१३९॥
सर्वलोकानतिक्रम्य रुद्रलोकं स गच्छिति । तत्र ते द्वादशादित्यास्तपन्ते रुद्रमाश्रिताः ॥१४०॥
निर्गच्छन्ति जगत्सर्वं वटमूले स दह्यते । हरिश्च भगवांस्तत्र प्रजापतिपुरस्कृतः ॥१४१॥
आस्ते तत्र पुटे देवि पादाङ्गुष्ठं धयञ्छिशुः । उर्वशीपुलिने रम्ये विपुले हंसपाण्डुरे ॥१४२॥
परित्यजति यः प्राणाञ्छृणु तस्यापि यत्फलम् । षष्टिवर्षसहस्राणि षष्टिवर्षशतानि च ॥१४३॥
वसेत्स पितृभिः सार्द्धं स्वर्गलोके विरिञ्चिजे । उर्वशीं च यदा पश्येद्देवलोके सुलोचने ॥१४४॥
पूज्यते सततं देवऋषिगन्धर्वकिन्नरैः । ततः स्वर्गात्परिभ्रष्टः क्षीणकर्मा त्विहागतः ॥१४५॥
उर्वशीसदृशीनां तु कान्तानां लभते शतम् । मध्ये नारीसहस्राणां बहूनां च पतिर्भवेत् ॥१४६॥
दशग्रामसहस्राणां भोक्ता शास्ता च मोहिनि । काञ्चीनूपुरशब्देन सुप्तोऽसौ प्रतिबुध्यते ॥१४७॥
भुक्त्वा तु विपुलान्भोगांस्तत्तीर्थं लभते पुनः । शुक्लाम्बरधरो नित्यं नियतः स जितेन्द्रियः ॥१४८॥
एककालं तु भुञ्जानो मासं योगपतिर्भवेत् । सुवर्णालङ्कृतानां तु नारीणां लभते शतम् ॥१४९॥
पृथिव्यामासमुद्रायां महाभोगपतिर्भवेत् । धनधान्यसमायुक्तो दाता भवति नित्यशः ॥१५०॥
स भुक्त्वा विपुलान्भोगांस्तत्तीर्थं स्मरते पुनः । कोटितीर्थं समासाद्य यस्तु प्राणान्परित्यजेत् ॥१५१॥
कोटिवर्षसहस्रान्तं स्वर्गलोके महीयते । ततः स्वर्गादिहागत्य क्षीणकर्मा नरोत्तमः ॥१५२॥
सुवर्णमणिमुक्ताग्रे कुले जायेत रूपवान् । अकामो वा सकामो वा गङ्गायां यो विपद्यते ॥१५३॥
शक्रस्य लभते स्वर्गं नरकं तु न पश्यति । हंससारसयुक्तेन विमानेन स गच्छति ॥१५४॥
अप्सरोगणसङ्कीर्णे सुप्तोऽसौ प्रतिबुध्यते । ततः स्वर्गादिहायातः क्षीणकर्मा विरञ्चिजे ॥१५५॥
योगिनां श्रीमतां चापि स्वेच्छया लभते जनिम् । गङ्गायमुनयोर्मध्ये करीषाग्निं तु धारयेत् ॥१५६॥
अहीनाङ्गो ह्यरोगश्च पञ्चेन्द्रियसमन्वितः । यावन्ति लोमकूपानि तस्य गात्रे तु धीमतः ॥१५७॥
तावद्वर्षसहस्राणि स्वर्गलोके महीयते । ततः स्वर्गात्परिभ्रष्टो जम्बूद्वीपपतिर्भवेत् ॥१५८॥
भुक्त्वा तु विपुलान्भोगांस्तत्तीर्थं लभते पुनः । यस्तु देहं निकृत्त्य स्वं शकुनिभ्यः प्रयच्छति ॥१५९॥
स वर्षशतसाहस्रं सोमलोके महीयते । ततस्तस्मादिहागत्य राजा भवति धार्मिकः ॥१६०॥
गुणवान्रूपसम्पन्नो विद्यावान्प्रियवाक्छुचिः । भुक्त्वा तु विपुलान्भोगांस्तत्तीर्थं पुनराव्रजेत् ॥१६१॥

पञ्चयोजनविस्तीर्णे प्रयागस्य तु मण्डले । विपन्नो यत्र कुत्राप्यनाशकं व्रतमास्थितः ॥१६२॥
व्यतीतान्पुरुषान्सप्त भाविनस्तु चतुर्दश । नरस्तारयते सर्वानात्मानं च समु द्धरेत् ॥१६३॥
अग्नितीर्थमिति ख्यातं दक्षिणे यमुनातटे । पश्चिमे धर्मराजस्य तीर्थं तु नरकं स्मृतम् ॥१६४॥
तत्र स्नात्वा दिवं यान्ति ये मृतास्तेऽपुनर्भवाः । यमुनोत्तरकूले तु पापघ्नानि बहून्यपि ॥१६५॥
तीर्थानि सन्ति विधिजे सेवितानि मुनीश्वरैः । तेषु स्नाता दिवं यान्ति ये मृतास्ते ऽपुनर्भवाः ॥१६६॥
गङ्गा च यमुना चैव उभे तुल्यफले स्मृते । केवलं ज्येष्ठभावेन गङ्गा सर्वत्र पूज्यते ॥१६७॥
यस्तु सर्वाणि रत्नानि ब्राह्मणेभ्यः प्रयच्छति । तेन दत्तेन देवेशि योगो लभ्येत वा न वा ॥१६८॥
प्रयागे तु मृतस्येदं सर्वं भवति नान्यथा । देशस्थो यदि वारण्ये विदेशे यदि वा गृहे ॥१६९॥
प्रयागं स्मरमाणोऽपि यस्तु प्राणान्परित्यजेत् । ब्रह्मलोकमवाप्नोति मही यत्र हिरण्मयी ॥१७०॥
सर्वकामफला वृक्षास्तिष्ठन्ति ऋषयो गताः । स्त्रीसहस्राकुले रम्ये मन्दाकिन्यास्तटे शुभे ॥१७१॥
क्रीडयते सिद्धगन्धर्वैः पूज्यते त्रिदशैस्तथा । ततः पुनरिहायातो जम्बूद्वीपपतिर्भवेत् ॥१७२॥
धर्मात्मा गुणसम्पन्नस्तत्तीर्थं लभते पुनः । एतत्ते सर्वमाख्यातं माहात्म्यं च प्रयागजम् ॥१७३॥
सुखदं मोक्षदं सारं किमन्यच्छ्रोतुमिच्छसि ॥१७४॥

इति श्रीबृहन्नारदीयपुराणोत्तरभागे बृहदुपाख्याने वसुमोहिनीसंवादे प्रयागमाहात्म्ये त्रिषष्टितमोऽध्यायः ॥६३॥
आदितः श्लोकानां समष्टयङ्काः-१७,१९९+१७४=१७,३७३



॥ इति प्रयागमाहात्म्यं समाप्तम् ॥



## ॥ अथ कुरुक्षेत्रमाहात्म्यं प्रारभ्यते ॥

## ॥ अथ चतुष्षष्टितमोऽध्यायः ॥

मोहिन्युवाच ॥
वसो कृपालो धर्मज्ञ त्वया बहुविदा मम । तीर्थराजस्य माहात्म्यं प्रयागस्य निरूपितम् ॥१॥
यत्सर्वतीर्थमुख्येषु कुरुक्षेत्रं शुभावहम् । पावनं सर्वलोकानां तन्ममाचक्ष्व साम्प्रतम् ॥२॥
वसुरुवाच ॥
श्रृणु मोहिनि वक्ष्यामि कुरुक्षेत्रं सुपुण्यदम् । यत्र गत्वा नरः स्नात्वा सर्वपापैः प्रमुच्यते ॥३॥
तत्र तीर्थान्यनेकानि सेवितानि मुनीश्वरैः । तान्यहं तेऽभिधास्यामि श्रृण्वतां मुक्तिदानि च ॥४॥
ब्रह्मज्ञानं गयाश्राद्धं गोग्रहे मरणं तथा । वासः पुंसां कुरुक्षेत्रे मुक्तिरुक्ता चतुर्विधा ॥५॥
सरस्वतीदृषद्वत्योर्देवनद्योर्यदन्तरम् । तं देवसेवितं देशं ब्रह्मावर्तं प्रचक्षते ॥६॥
दूरस्थोऽपि कुरुक्षेत्रे गच्छामि च वसाम्यहम् । एवं यः सतत ब्रूयात्सो ऽपि पापैः प्रमुच्यते ॥७॥
तत्र वै यो वसेद्धीरः सरस्वत्यास्तटे स्थितः । तस्य ज्ञानं ब्रह्ममयं भविष्यति न संशयः ॥८॥
देवता ऋषयः सिद्धाः सेवन्ते कुरुजाङ्गलम् । तस्य संसेवनाद्देवि ब्रह्म चात्मनि पश्यति ॥९॥
मोहिन्युवाच ॥
कुरुक्षेत्रं द्विजश्रेष्ठ सर्वतीर्थाधिकं कथम् । तन्मे विस्तरतो ब्रूहि त्वामहं शरणं गता ॥१०॥
वसुरुवाच ॥
श्रृणु भद्रे प्रवक्ष्यामि कुरुक्षेत्रं महाफलम् । यथा जातं नृणां पापदहनं ब्रह्मणः प्रियम् ॥११॥
आद्यं ब्रह्मसरः पुण्यं तत्र स्थाने समुद्भतम् । ततो रामह्रदो जातः कुरुक्षेत्रं ततः परम् ॥१२॥
सरः संनिहितं तच्च ब्रह्मणा निर्मितं पुरा । अथैषा ब्रह्मणो वेदी दिशमन्तरतः स्थिता ॥१३॥
ब्रह्मणात्र तपस्तप्तं सृष्टिकामेन मोहिनि । स्थितिकामेन हरिणा तपस्तप्तं च चक्रिणा ॥१४॥
सरः प्रवेशात्सम्प्राप्तं स्थाणुत्वं शम्भुनापि च । पितुर्वधाच्च तप्तेन पशुरामे ण भामिनि ॥१५॥

अब्रह्मण्यक्षत्रवधाद्ये च रक्तह्रदाः कृताः । तद्रक्तेन तु सन्तर्प्य कृतवांस्तत्र वै तपः ॥१६॥
रामतीर्थं ततः ख्यातं सञ्जातं पापनाशनम् । मार्कण्डेयेन मुनिना सन्तप्तं परमं तपः ॥१७॥
यत्र तत्र समायाता प्लक्षजाता सरस्वती । सा सभाज्य स्तुता तेन मुनिना धार्मिके ण ह ॥१८॥
सरः सन्निहितं प्लाव्यं पश्चिमां प्रस्थिता दिशम् । कुरुणा तु ततः कृष्टं यावत्क्षेत्रं समन्ततः ॥१९॥
पञ्चयोजनविस्तारं दयासत्यक्षमोद्गमम् । स्यमन्तपञ्चकं तावत्कुरुक्षेत्रमुदाहृतम् ॥२०॥
अत्र स्नाता नरा देवि लभन्ते पुण्यमक्षयम् । मृता विमानमारुह्य ब्रह्मलोकं व्रजन्ति च ॥२१॥
उपवासश्च दानं च होमो जप्यं सुरार्चनम् । अक्षयत्वं प्रयान्त्येव नात्र कार्या विचारणा ॥२२॥
ब्रह्मवेद्यां कुरुक्षेत्रे ये मृतास्तेऽपुनर्भवाः । ग्रहनक्षत्रताराणां कालेन पतनाद्भयम् ॥२३॥
कुरुक्षेत्रे मृतानां तु न भूयः पतनं भवेत् । देवर्षिसिद्धगन्धर्वास्तत्सरः सेवनोत्सुकाः ॥२४॥
यत्र नित्यं स्थिता देवि रन्तुकं नामतस्ततः । तस्य क्षेत्रस्य रक्षार्थं विष्णुना स्थापिताः पुरा ॥२५॥
यक्षः सुचन्द्रः सूर्यश्च वासुकिः शम्बुकर्णकः । विद्याधरः सुकेशी च राक्षसाः स्थापिताः शुभे ॥२६॥
सभृत्यैस्तेऽष्टसाहस्रैर्धनुर्बाणधरैः सदा । रक्षन्ति च कुरुक्षेत्रं वारयन्ति च पापिनः ॥२७॥
रन्तुकं तु समासाद्य क्षामयित्वा पुनः पुनः । ततः स्नात्वा सरस्वत्यां यक्षं दृष्ट्वा प्र णम्य च ॥२८॥
पुष्पं धूपं च नैवेद्यं कृत्वैतद्वाक्यमु च्चरेत् । तव प्रसादाद्यक्षेन्द्र वनानि सरितस्तथा ॥२९॥
भ्रमतो मम तीर्थानि मा विघ्नं जायतां नमः । इति प्रसाद्य यक्षेशं यात्रां सम्यक् समाचरेत् ॥३०॥
वनानां चापि तीर्थानां सरितामपि मोहिनि । यो नरः कुरुते यात्रां कुरुक्षेत्रस्य पु ण्यदाम् ॥३१॥
न तस्य न्यूनता काचिदिह लोके परत्र च ॥३२॥

इति श्रीबृहन्नारदीयपुराणे बृहदुपाख्याने उत्तरभागे वसुमोहिनीसंवादे कुरुक्षेत्रमाहात्म्ये क्षेत्रप्रमाणादिनिरूपणं नाम चतुषष्टितमोऽध्यायः ॥६४॥
आदितः श्लोकानां समष्ट्यङ्काः-१७,३७३+३२=१७,४०५



## ॥ अथ पञ्चषष्टितमोऽध्यायः ॥

मोहिन्युवाच ॥
वनानि कानि विप्रेन्द्र तत्र सन्ति शुभावहाः । सरितश्च व्र नमाद्यात्रां वद मे सर्वसिद्धिदाम् ॥१॥
यानि तीर्थानि सन्त्यत्र कुरुक्षेत्रे सुपुण्यदे । तानि सर्वाणि मे ब्रूहि गतिदस्त्वं गुरुर्यतः ॥२॥
वसुरुवाच ॥
श्रृणु मोहिनि वक्ष्यामि कुरुक्षेत्रस्य पुण्यदम् । यात्राविधानं यत्कृत्वा लभते गतिमुत्तमाम् ॥३॥
वनानि सप्त सन्तीह कुरुक्षेत्रस्य मध्यतः । तेषां नामानि वक्ष्यामि पुण्यदानां नृणामिह ॥४॥
काम्यकं च वनं पुण्यं तथादितिवनं महत् । व्यासस्य च वनं पुण्यं फलकीवनमेव च ॥५॥
तथा सूर्यवनं चात्र पुण्यं मधुवनं च वै । सीतावनं तथा ख्यातं नृणां कल्मषनाशनम् ॥६॥
वनान्येतानि सप्तात्र तेषु तीर्थान्यनेकशः । सरस्वती नदी पुण्या तथा वैतरणी नदी ॥७॥
गङ्गा मन्दाकिनी पुण्या तथैवान्या मधुस्रवा । दृषद्वती कौशिकी च पुण्या हैरण्वती नदी ॥८॥
वर्षकालवहाश्चैता वर्जयित्वा सरस्वतीम् । एतासामुदकं पुण्यं स्पर्शे पाने समाप्लुतौ ॥९॥
रजस्वलात्वं नैतासां पुण्यक्षेत्रप्रभावतः । रन्तुकं तु पुरासाद्य द्वारपालं महाबलम् ॥१०॥
यक्षं समभिवाद्याथ तत्र यात्रां समारभेत् । ततो गच्छेन्नरः पु ण्यं भद्रेऽदिति वनं महत् ॥११॥
अदित्या तत्र पुत्रार्थं सम्यक् चीर्णं महत्तपः । तत्र स्नात्वा समभ्यर्च्य देवमातरमङ्गना ॥१२॥
सूते पुत्रं महाशूरं सर्वलक्षण संयुतम् । ततो गच्छेद्वरारोहे विष्णोः स्थानमनुत्तमम् ॥१३॥
विमलं नाम विख्यातं यत्र सन्निहितो हरिः । विमले तु नरः स्नात्वा दृष्ट्वा च विमलेश्वरम् ॥१४॥
विमलः स लभेल्लोकं देवदेवस्य चक्रिणः । हरिं च बलदेवं च दृष्ट्वैकासनमास्थितौ ॥१५॥

मुच्यते किल्बिषात्सद्यो मोहिन्यत्र न संशयः । ततः पारिप्लवं गच्छेत्तीर्थं लोकेषु विश्रुतम् ॥१६॥
तत्र स्नात्वा च पीत्वा यो ब्राह्मणं वेदपारगम् । सन्तोष्य दक्षिणाद्येन ब्राह्मयज्ञफलं लभेत् ॥१७॥
यत्रास्ति सङ्गमो भद्रे कौशिक्याः पापनाशनः । तत्र स्नात्वा नरो भक्त्या प्र प्नोति प्रियसङ्गमम् ॥१८॥
ततस्तु पृथिवीतीर्थमासाद्य क्षान्तिमान्नरः । स्नातो भक्त्या महाभागे प्र प्नोति गतिमुत्तमाम् ॥१९॥
धरण्यामपराधा ये कृताः स्युः पुरुषे ण वै । तान्सर्वान्क्षमते देवी तत्र स्नातस्य देहिनः ॥२०॥
ततो दक्षाश्रमे पुण्ये दृष्ट्वा दक्षेश्वरं शिवम् । अश्वमेधस्य यज्ञस्य फलं प्राप्नोति मानवः ॥२१॥
ततः शालकिनीं गच्छेत्तत्र स्नात्वा समर्चयेत् । हरिं हरेण संयुक्तं वाञ्छितार्थस्य लब्धये ॥२२॥
नागतीर्थं ततः प्राप्य स्नात्वा तत्र विधानवित् । सर्पिश्चास्य दधि प्राश्य नागेभ्यो ह्यभयं लभेत् ॥२३॥
ततः सायमुपावृत्य रन्तुकं द्वारपालकम् । एकरात्रोषितस्तत्र पूजयेत्तं परेऽहनि ॥२४॥
गन्धाद्यैरूपचारैस्तु ब्राह्मणं प्राच्र्य भोजयेत् । ततः पञ्चनदं गच्छेत्तीर्थं त्रैलोक्यविश्रुतम्  ॥२५॥
पञ्च नादाः कृता यत्र हरे णासुरभीषणाः । तेन पञ्चनदं नाम सर्वपातकनाशनम् ॥२६॥
तत्र स्नानेन दानेन निर्भयो जायते नरः । कोटितीर्थं ततो गच्छेद्यत्र रुद्रेण मोहिनि ॥२७॥
कोटितीर्थान्युपाहृत्य स्थापितानि महात्मना । तत्र तीर्थे नरः स्नात्वा दृष्ट्वा कोटीश्वरं हरम् ॥२८॥
पञ्चयज्ञभवं पुण्यं तत्प्रभत्याप्नुयात्सदा । तत्रैव वामनो देवः सर्वैर्देवैः प्रतिष्ठितः ॥२९॥
तस्मात्तं तत्र सम्पूज्य अग्निष्टोमफलं लभेत् । ततोऽश्वितीर्थमासाद्य श्रद्धावान्विजितेन्द्रियः ॥३०॥
स्नात्वा तत्र यशस्वी च रूपवांश्च नरो भवेत् । ततो वाराहतीर्थं च प्राप्य विष्णुप्रकल्पितम् ॥३१॥
आप्लुत्य श्रद्धया तत्र नरः सद्गतिमाप्नुयात् । ततो व्रजेत्सोमतीर्थं यत्र सोमो वरानने ॥३२॥
तपस्तप्त्वा ह्यरोगोऽभूत्तत्र स्नानं समाचरेत् । दत्वा च तत्र गामेकां राजसूयफलं लभेत् ॥३३॥
भूतेश्वरं च तत्रैव ज्वालामालेश्वरं तथा । ताण्डलिङ्गं समभ्यर्च्य न भूयो भवमाप्नुयात् ॥३४॥
एकहंसे नरः स्नात्वा गो सहस्रफलं लभेत् । कृतशौचे नरः स्नात्वा पुण्डरीकफलं लभेत् ॥३५॥
ततो मुञ्जवटं नाम प्राप्य देवस्य शूलिनः । समुष्य च निशामेकां प्राच्र्येशं गणपो भवेत् ॥३६॥
प्रसाद्य यक्षिणीं तत्र द्वारस्थामुपवासकृत् । स्नात्वाभ्यर्च्याशयेद्विप्रान्महापातकशान्तये ॥३७॥
प्रदक्षिणमुपावृत्य पुष्करं च ततो व्रजेत् । तत्र स्नात्वा पितॄन्प्राच्र्य कृतकृत्यो नरो भवेत् ॥३८॥
कन्यादानं च यस्तत्र कार्तिक्यां वै समाचरेत् । प्रसन्ना देवतास्तस्य यच्छन्त्यभिमतं फलम् ॥३९॥
कपिलश्च महायक्षो द्वारपालो ऽत्र संस्थितः । विघ्नं करोति पापानां सुकृतं च प्रयच्छति ॥४०॥
पत्नी तस्य महाभागा नाम्नोलूखलमेखला । आहत्य दुन्दुभिं सा तु भ्रमते नित्यमेव हि ॥४१॥
वारयेत्पापिनः स्नानात्तथा सुकृतिनो नयेत् । ततो रामह्रदं गच्छेत्स्नात्वा तत्र विधानतः ॥४२॥
देवान्पितॄनृषीनिष्ट्वा भुक्तिं मुक्तिं च विन्दति । राममभ्यर्च्य सच्छ्रद्धः स्वर्णं दत्त्वा धनी भवेत् ॥४३॥
वंशमूलं समासाद्य स्नात्वा स्वं वंशमुद्धरेत् । कायशोधनके स्नात्वा शुद्धदेहो हरिं विशेत् ॥४४॥
लोकोद्धारं ततः प्राप्य स्नात्वाभ्यर्च्य जनार्दनम् । प्राप्नोति शाश्वतं लोकं यत्र विष्णुः सनातनः ॥४५॥
श्रीतीर्थं च ततः प्राप्य शालग्राममनुत्तमम् । स्नात्वाभ्यर्च्य हरिं नित्यं पश्यति स्वान्तिके स्थितम् ॥४६॥
कपिलाह्रदमासाद्य स्नात्वाभ्यर्च्य सुरान्पितॄन् । सहस्रकपिलापुण्यं लभते नात्र संशयः ॥४७॥
कपिलं तत्र विश्वेशं समभ्यर्च्य विधानतः । देवैश्च सत्कृतो भद्रे साक्षाच्छिवपदं लभेत् ॥४८॥
सूर्यतीर्थे ततो भानुं सोपवासः समर्चयेत् । अग्निष्टोमस्य यज्ञस्य फलं लब्ध्वा व्रजेद्दिवम् ॥४९॥
पृथिवीविवरद्वारि स्थितो गणपतिः स्वयम् । तं दृष्ट्वाथ समभ्यर्च्य यज्ञस्य फलमाप्नुयात् ॥५०॥
देव्यास्तीर्थे नरः स्नात्वा लभते रूपमुत्तमम् । ब्रह्मावर्ते नरः स्नात्वा ब्रह्मज्ञानमवाप्नुयात् ॥५०॥
सुतीर्थके नरः स्नात्वा देवर्षिपितृमानवान् । समभ्यर्च्याश्वमेधस्य यज्ञस्य फलमाप्नुयात् ॥५२॥
कामेश्वरस्य तीर्थे तु स्नात्वा श्रद्धासमन्वितः । सर्वव्याधिविनिर्मुक्तो ब्रह्म प्राप्नोति शाश्वतम् ॥५३॥
स्नातस्य मातृतीर्थे तु श्रद्धयाभ्यर्चकस्य तु । आसप्तमं कुलं देवि वर्द्धते श्रीरनुत्तमा ॥५४॥
ततः सीतावनं गच्छेत्तत्र तीर्थं महच्छुभे । पुनातिदर्शनादेव पुरुषानेकविंशतिम् ॥५५॥

केशान्प्रक्षिप्य वै तत्र पूतो भवति पापतः । दशाश्वमेधिकं तत्र तीर्थं त्रैलोक्यविश्रुतम् ॥५६॥
दर्शनात्तस्य तीर्थस्य मुक्तो भवति किल्बिषैः । मानुषाह्वं ततस्तीर्थं प्राप्य स्नानं समाचरेत् ॥५७॥
यदीच्छेन्मानुषं जन्म पुनश्च विधिनन्दिनि । मानुषाच्च ततस्तीर्थात्क्रोशमात्रे महानदी ॥५८॥
आपगा नाम विख्याता तत्र स्नात्वा विधानतः । श्यामाकं पयसा सिद्धं भोजयद्द्विजसत्तमान् ॥५९॥
तस्य पापं क्षयं याति पितृणां श्राद्धतो गतिः । नभस्ये मासि कृष्णे तु पितृपक्षे महालये ॥६०॥
चतुर्दश्यां तु मध्याह्ने पिण्डदो मुक्तिमाप्नुयात् । ब्राह्मोदुम्बरकं गच्छेद्ब्रह्मणः स्थानकं ततः ॥६१॥
तत्र ब्रह्मर्षिकुण्डेषु स्नातः सोमफलं लभेत् । वृद्धकेदारके तीर्थे स्थाणुं दण्डिसमन्वितम् ॥६२॥
समर्च्य यत्र चाप्नोति नरोऽन्तर्द्धानमिच्छया । कलश्यां च ततो गच्छेद्यत्र देवी स्वयं स्थिता ॥६३॥
स्नात्वास्यामम्बिकां प्राच्यं तरेत्संसारसागरम् । सरके कृष्णभूतायां दृष्ट्वा देवं महेश्वरम् ॥६४॥
शैवं पदमवाप्नोति नरः श्रद्धासमन्वितः । तिस्रः कोटयस्तु तीर्थानां सरके सन्ति भामिनि ॥६५॥
रुद्रकोटिस्तथा कूपे सरोमध्ये व्यवस्थिता । तस्मिन्सरसि यः स्नात्वा रुद्रकोटिं स्मरेन्नरः ॥६६॥
पूजिता रुद्रकोटिस्तु तेन स्यान्नात्र संशयः । ईहास्पदं च तत्रैव तीर्थं पापप्रणाशनम् ॥६७॥
यस्मिन्मुक्तिमवाप्नोति दर्शनादेव मानवः । तत्रस्थानर्चयित्वा च देवान्पितृगणानपि ॥६८॥
न दुर्गतिमवाप्नोति मनसा चिन्तितं लभेत् । केदारं च महातीर्थं सर्वकल्मषनाशनम् ॥६९॥
तत्र स्नात्वा च पुरुषः सर्वदानफलं लभेत् । अन्यजन्मेति विख्यातं सरकस्य तु पूर्वतः ॥७०॥
सरो महत्स्वच्छजलं देवौ हरिहरौ यतः । विष्णुश्चतुर्भुजस्तत्र लिङ्गाकारः शिवः स्थितः ॥७१॥
तत्र स्नात्वा च तौ दृष्ट्वा स्तुत्वा मोक्षं लभेन्नरः । नागह्रदे ततो गत्वा स्नात्वा चैत्रे सितान्तके ॥७२॥
श्राद्धदो मुक्तिमाप्नोति यमलोकं न पश्यति । ततस्त्रिविष्टपं गच्छेत्तीर्थं देवनिषेवितम् ॥७३॥
यत्र वैतरणी पुण्या नदी पापप्रमोचिनी । तत्र स्नात्वार्चयित्वा च शूलपाणिं वृषध्वजम् ॥७४॥
सर्वपाप विशुद्धात्मा गच्छत्येव परां गतिम् । रसावर्ते नरः स्नात्वा सिद्धिमाप्नोत्यनुत्तमाम् ॥७५॥
चैत्रस्य सितभूतायां स्नानं कृत्वा विलेपके । पूजयित्वा शिवं भक्त्या सर्वपापैः प्रमुच्यते ॥७६॥
ततो गच्छेन्नरो देवि फलकीवनमुत्तमम् । यत्र देवाः सगन्धर्वास्तप्यन्ते परमं तपः ॥७७॥
तत्र नद्यां दृषद्वत्यां नरः स्नात्वा विधानतः । देवान्पितृंस्तर्पयित्वा ह्यग्निष्टोमातिरात्रभाक् ॥७८॥
दर्शे तथा विधुदिने तत्र श्राद्धं करोति यः । गयाश्राद्ध समं तत्र लभते फलमुत्तमम् ॥७९॥
श्राद्धे फलमरण्यस्य स्मरणं पितृ तृप्तिदम् । पाणिघाते ततस्तीर्थे पितृन्संतर्प्य मानवः ॥८०॥
राजसूय फलं प्राप्य साङ्ख्यं योगं च विन्दति । ततस्तु मिश्रके तीर्थे स्नात्वा मर्त्यो विधानतः ॥८१॥
सर्वतीर्थफलं प्राप्य लभते गतिमुत्तमाम् । ततो व्यासवने गत्वा स्नात्वा तीर्थे मनोजवे ॥८२॥
मनीषिणं विभुं दृष्ट्वा मनसा चिन्तितं लभेत् । गत्वा मधुवनं चैव देव्यास्तीर्थे नरः शुचिः ॥८३॥
स्नात्वा देवानृषीनिष्ट्वा लभते सिद्धिमुत्तमाम् । कौशिकीसङ्गमे तीर्थे दृषद्वत्यां नरः प्लुतः ॥८४॥
नियतो नियताहारः सर्वपापैः प्रमुच्यते । ततो व्यासस्थलीं गच्छेद्यत्र व्यासेन धीमता ॥८५॥
पुत्रशोकाभिभूतेन देहत्यागो विनिश्चितः । पुनरुत्थापितो देवैस्तत्र गत्वा न शोकभाक् ॥८६॥
किन्दुशूकूपमासाद्य तिलप्रस्थं प्रदाप्य च । गच्छेद्धि परमां सिद्धिं मृतो मुक्तिमवाप्नुयात् ॥८७॥
आह्नं च मुदितं चैव द्वे तीर्थे भुवि विश्रुते । तयोः स्नात्वा विशुद्धात्मा सूर्यलोकमवाप्नुयात् ॥८८॥
मृगमुच्यं ततो गत्वा गङ्गायां प्रणतः स्थितः । अर्चयित्वा महादेवमश्वमेधफलं लभेत् ॥८९॥
कोटितीर्थं ततो गत्वा स्नात्वा कोटीश्वरं शिवम् । दृष्ट्वा स्तुत्वा श्रद्दधानः कोटियज्ञफलं लभेत् ॥९०॥
ततो वामनकं गच्छेत्त्रिषु लोकेषु विश्रुतम् । यत्र वामनजन्माभूद्बलेर्यज्ञजिहीर्षया ॥९१॥
तत्र विष्णुपदे स्नात्वा पूजयित्वा च वामनम् । सर्वपापविशु द्धात्मा विष्णुलोके महीयते ॥९२॥
ज्येष्ठाश्रमं च तत्रैव सर्वपातकनाशनम् । ज्येष्ठस्य शुक्लैकादश्यां सोपवासः परेऽहनि ॥९३॥
स्नात्वा तत्र विधानेन श्रेष्ठत्वं लभते नृषु । श्राद्धं तत्र कृतं देवि पितृणामतितुष्टिदम् ॥९४॥
तत्रैव कोटितीर्थं च त्रिषु लोकेषु विश्रुतम् । तस्मिंस्तीर्थे नरः स्नात्वा कोटियज्ञफलं लभेत् ॥९५॥

तत्र कोटीश्वरं नाम देवदेवं महेश्वरम् । समभ्यर्च्य विधानेन गाणपत्यमवाप्नुयात् ॥९६॥
सूर्यतीर्थे च तत्रैव स्नात्वात्र रविलोकभाक् । कुलोत्तारणके तीर्थे गत्वा स्नानं समाचरन् ॥९७॥
उद्धृत्य स्वकुलं स्वर्गे कल्पान्तं निवसेत्ततः । पवनस्य ह्रदे स्नात्वा दृष्ट्वा देवं महेश्वरम् ॥९८॥
विमुक्तः सर्वपापेभ्यः शैवं पदमवाप्नुयात् । स्नात्वा च हनुमत्तीर्थे नरो मुक्तिमवाप्नुयात् ॥९९॥
शालहोत्रस्य राजर्षेस्तीर्थे स्नात्वाघवर्जितः । श्रीकुम्भाख्ये सरस्वत्यास्तीर्थे स्नात्वाथ यज्ञवाक् ॥१००॥
स्नातश्च नैमिषे कुण्डे नैमिषस्नानपु ण्यभाक् । स्नात्वा वेदवतीतीर्थे स्त्री सतीत्वमवाप्नुयात् ॥१०१॥
ब्रह्मतीर्थे नरः स्नात्वा ब्राह्मण्यं लभते नरः । ब्रह्मणः परमं स्थानं यत्र गत्वा न शोचति ॥१०२॥
सोमतीर्थे नरः स्नात्वा स्वर्गतिं समवाप्नुयात् । सप्तसारस्वतं तीर्थं प्राप्य स्नात्वा च मुक्तिभाक् ॥१०३॥
यत्र सप्त सरस्वत्यः सम्यगैक्यं समागताः । सुप्रभा काञ्चनाक्षी च विशाला च मनोहरी ॥१०४॥
सुनन्दा च सुवेणुश्च सप्तमी विमलोदका । तथैवौशनसे तीर्थे स्नात्वा मुच्येत पातकैः ॥१०५॥
कपाल मोचने स्नात्वा ब्रह्महापि विशुध्यति । वैश्वामित्रे नरः स्नातो ब्राह्मण्यं समवाप्नुयात् ॥१०६॥
ततः पृथूदके स्नात्वा मुच्यते भवबन्धनात् । अवकीर्णे नरः स्नात्वा ब्रह्मचर्यफलं लभेत् ॥१०७॥
मधुस्रावेऽथप्रयातः स्नातो मुच्येत पातकैः । स्नात्वा तीर्थे च वासिष्ठे वासिष्ठं लोकमाप्नुयात् ॥१०८॥
अरुणासङ्गमे स्नात्वा त्रिरात्रोपोषितो नरः । स्नात्वा मुक्तिमवाप्नोति नात्र कार्या विचारणा ॥१०९॥
समुद्रास्तत्र चत्वारस्तेषु स्नातो नरः शुभे । गोसहस्रफलं लब्ध्वा स्वर्गलोके महीयते ॥११०॥
सोमतीर्थे च तत्रान्यत्तस्मिन्स्नात्वा च मोहिनि । चैत्रे षष्ठ्यां च शुक्लायां श्राद्धं कृत्वोद्धरेत्पितृन् ॥१११॥
अथ पञ्चवटे स्नात्वा योगमूर्तिधरं शिवम् । समभ्यर्च्य विधानेन दैवतैः सहमोदते ॥११२॥
कुरुतीर्थे ततः स्नातः सर्वसिद्धिमवाप्नुयात् । स्वर्गद्वारे प्लुतो मर्त्यः स्वर्गलोके महीयते ॥११३॥
स्नातो ह्यनरके तीर्थे मुच्यते सर्वकिल्बिषैः । ततो गच्छेन्नरो देवि काम्यकं वनमुत्तमम् ॥११४॥
यस्मिन्प्रविष्टमात्रस्तु मुच्यते सर्वसञ्चयैः । अथादित्यवनं प्राप्य दर्शनादेव मुक्तिभाक् ॥११५॥
स्नानं रविदिने कृत्वा तत्र वाञ्छितमाप्नुयात् । यज्ञोपवीतिके स्नात्वा स्वधर्मफलभाग्भवेत् ॥११६॥
ततश्चतुःप्रवाहाख्ये तीर्थे स्नात्वा नरोत्तमः । सर्वतीर्थफलं प्राप्य मोदते दिवि देववत् ॥११७॥
स्नातस्तीर्थे विहारे तु सर्वसौख्यमवाप्नुयात् । दुर्गातीर्थे नरः स्नात्वा न दुर्गतिमवाप्नुयात् ॥११८॥
ततः सरस्वतीकूपे पितृतीर्थापराह्वये । स्नात्वा सन्तर्प्य देवादींल्लभते गतिमुत्तमाम् ॥११९॥
स्नात्वा प्राचीसरस्वत्यां श्राद्धं कृत्वा विधानतः । दुर्लभं प्राप्नुयात्कामं देहान्ते स्वर्गतिं लभेत् ॥१२०॥
शुक्रतीर्थे नरः स्नात्वा श्राद्धदः प्रोद्धरेत्पितृन् । अष्टम्यां वा चतुर्दश्यां चैत्रे कृष्णे विशेषतः ॥१२१॥
सोपवासो ब्रह्मतीर्थे मुक्तिभाङ्नात्र संशयः । स्थाणुतीर्थे ततः स्नात्वा दृष्ट्वा स्थाणुवटं नरः ॥१२२॥
मुच्यते पातकैर्घोरैरितिप्राह पितामहः । दर्शनात्स्थाणु लिङ्गस्य यात्रा पूर्णा प्रजायते ॥१२३॥
कुरुक्षेत्रस्य देवेशि सत्यं सत्यं मयोदितम् । कुरुक्षेत्रसमं तीर्थं न भूतं न भविष्यति ॥१२४॥
तत्र द्वादश यात्रास्तु कृत्वा भूयो न जन्मभाक् । पूर्तमिष्टं तपस्तप्तं हुतं दत्तं विधानतः ॥१२५॥
तत्र स्यादक्षयं सर्वमिति वेदविदो विदुः । मन्वादौ च युगादौ च ग्रहणे चन्द्रसूर्ययोः ॥१२६॥
महापाते च सङ्क्रान्तौ पुण्ये चाप्यन्यवासरे । स्नातस्तत्र कुरुक्षेत्रे फलानन्त्यमवाप्नुयात् ॥१२७॥
कलिजानां तु पापानां पावनाय महात्मनाम् । ब्रह्मणा कल्पितं तीर्थं कुरुक्षेत्रं सुखावहम् ॥१२८॥
य इमां कीर्तयेत्पुण्यां कथां पापप्रणाशिनीम् । शृणुयाद्वा नरो भक्त्या सोऽपि पापैः प्रमुच्यते ॥१२९॥
यद्यद्ददाति यस्तत्र कुरुक्षेत्रे रविग्रहे । तत्तदेव सदाप्नोति नरो जन्मनि जन्मनि ॥१३०॥
अथ किं बहुनोक्तेन विधिजे शृणु निश्चितम् । सेवेतैव कुरुक्षेत्रं यदीच्छेद्भवमोक्षणम् ॥१३१॥
एतदेव महत्पुण्यमेतदेव महत्तपः । एतदेव महज्ज्ञानं यद्व्रजेत्स्थाणुतीर्थकम् ॥१३२॥
कुरुक्षेत्रसमं तीर्थं नान्यद्भुवि शुभावहम् । साचारो वाप्यनाचारो यत्र मुक्तिमवाप्नुयात् ॥१३३॥
एतत्ते सर्वमाख्यातं यत्पृष्टोऽहं त्वयानघे । कुरुक्षेत्रस्य माहात्म्यं सर्वपापनिकृन्तनम् ॥१३४॥

सनकाद्या प्रहाभागा मुनयः प्रचकाशिरे । हंसस्वरूपी भगवान्यदा तं ब्रह्म शाश्वतम् ॥३६॥
तदुपादिशदेतेभ्यो विज्ञानेन विजृम्भितम् । तदिदं भगवान्साक्षान्नारदोऽध्यात्मदर्शनः ॥३७॥
वेदव्यासाय मुनये रहस्यं निर्दिदेश ह । मया प्रकाशितं ह्येतद्रहस्यं भुवि दुर्लभम् ॥३८॥
चतुर्वर्गप्रदं नृणां श्रृण्वतां पठतां सदा । विप्रो वेदनिधिर्भूयात्क्षत्रियो जयते महीम् ॥३९॥
वैश्यो धनसमृद्धः स्याच्छूद्रो मुच्येत दुःखतः । पञ्चविंशतिसाहस्री संहितेयं प्रकीर्तिता ॥४०॥
पञ्चपादसमायुक्ता कृष्णद्वैपायनेन ह । अस्यां वै श्रूयमाणायां सर्वसन्देहभञ्जनम् ॥४१॥
पुंसां सकामभक्तानानिष्कामानां विमोक्षणम् । पुण्यतीर्थं समासाद्य नैमिषं पुष्करं गयाम् ॥४२॥
मथुरां द्वारकां विप्रा नरनारायणाश्रमम् । कुरुक्षेत्रं नर्मदां च क्षेत्रं श्रीपुरुषोत्तमम् ॥४३॥
हविष्याशी धराशायी निःसङ्गो विजितेन्द्रियः । पठित्वा संहितामेनां मुच्यते भवसागरात् ॥४४॥
एकादशी व्रतानां च सरितां जाह्नवी यथा । वृन्दावनमरण्यानां क्षेत्राणां कौरवं यथा ॥४५॥
यथा काशी पुरीणां च तीर्थानां मथुरा यथा । सरसां पुष्करं विप्राः पुराणानामिदं तथा ॥४६॥
गणेशभक्ताः सौराश्च वैष्णवाः शाक्तशाम्भवाः । सर्वेऽधिकारिणो ह्यत्र सकामाश्चाप्यकामकाः ॥४७॥
यं यं काममभिध्यायन्नरो नार्यथवादरात् । श्रृ णोति श्रावयेद्वापि तं तं प्राप्नोति निश्चितम् ॥४८॥
रोगार्तो मुच्यते रोगाद्भयार्तो निर्भयो भवेत् । जयकामो जयेच्छत्रून्नारदीयानुशीलनात् ॥४९॥
सृष्ट्यादौ रजसा विश्वं मध्ये सत्त्वेन पाति यः । तमसाऽन्ते ग्रसेदेत तस्मै सर्वात्मने नमः ॥५०॥
ऋषयो मनवः सिद्धा लोकपालाः प्रजेश्वराः । ब्रह्माद्या रचिता येन तस्मै ब्रह्मात्मने नमः ॥५१॥
यतो वाचो निवर्तन्ते न मनो यत्र संविशेत् । तद्विद्यादात्मनो रूपं ह्यरूपस्य चिदात्मनः ॥५२॥
यस्य सत्यतया सत्यं जगदेतद्विकाशते । विचित्ररूपं वन्दे तं निर्गुणं तमसः परम् ॥५३॥
आदौ मध्ये चाप्यजनश्चान्ते चैकाक्षरो विभुः । विभाति नानारूपेण तं वन्देऽहं निरञ्जनम् ॥५४॥
निरञ्जनात्समुत्पन्नं जगदेतच्चराचरम् । तिष्ठत्यप्येति वा यस्मिंस्तत्सत्यं ज्ञानमद्वयम् ॥५५॥
शिवं शैवा वदन्त्येनं प्रधानं साङ्ख्यवेदिनः । योगिनः पुरुषं विप्राः कर्म मीमांसका जनाः ॥५६॥
विभु वैशेषिकाद्याश्च चिच्छक्तिं शक्तिचिन्तकाः । ब्रह्माद्वितीयं तद्वंदे नानारूपक्रियास्पदम् ॥५७॥
भक्तिर्भगवतः पुंसां भगवद्रूपकारिणी । तां लब्ध्वा चापरं लाभं को वाञ्छति विना पशुम् ॥५८॥
भगवद्विमुखा ये तु नराः संसारिणो द्विजाः । तेषां मुक्तिर्भवाटव्या नास्ति सत्सङ्गमन्तरा ॥५९॥
साधवः समुदाचाराः सर्वलोकहिता वहाः । दीनानुकम्पिनो विप्राः प्रपन्नास्तारयन्ति हि ॥६०॥
यूयं धन्यतमा लोके मुनयः साधुसम्मताः । यन्मुहुर्वासुदेवस्य कीर्तिं पल्लवनूतनाम् ॥६१॥
धन्योऽस्म्यनुगृहीतोऽस्मि भवद्भिर्लोकमङ्गलम् । यत्स्मारितो हरिः साक्षात्सर्वकारणकारणम् ॥६२॥

ॐ इति श्रीनारदीयपुराणे बृहदुपाख्याने उत्तरभागे महापुराणश्रवणादिफलनिरूपणं नाम द्व्यशीतितमोऽध्यायः ॥८२॥

आदितः श्लोकानां समष्ट्यङ्काः-१८,५०७+६२=१८,५६९



## ॥ समाप्तमिदं (सप्तमं) नारदीयं महापुराणम् ॥

हरि ॐ तत्सत्